# संस्कृत वाङ्मये चन्द्रः

## A LUNAR ENCYCLOPAEDIA

चन्द्रसर्वस्वरूपः सिद्धान्तव्यासः

वेदवेदाङ्ग विषयकः

प्रथमो भागः

'विद्यावारिधि' 'साहित्य विद्या प्रवीण'

**डा. वेदान्तं सत्यश्रीनिवास अय्यंगार्**

M.A. (San.) M.A. (Tel.)

प्रवाचकः श्री सुब्बराय & नारयण कळाशाला

नरसरावुपेट - 522 601.

A Thesis Awarded Ph.D by
Rashtriya Samskruta Samsthan, New Delhi.



This book is published with the Financial Assistance of
Tirumala Tirupati Devasthanams
under their scheme
aid to publish Religious Books.

Price : Rs.216-00

First Edition
Vikrama Sriramanavami
April, 2000
Copies 1000


Designed By:
SRILEKHA OFFSETS
Opp. S.B.I., Arundelpet,
Narasaraopet. - 522 601.
☎ : 23669.

For Copies :
***Smt. Vedantam Hemalatha***
***"TEJASWI"*** 1-3-21/A, Burnpet,
NARASARAOPET - 522 601. A.P. INDIA.
☎ 08647-23935

# समर्पणम्



**पण्डित वेदान्तं रामकृष्णमाचार्युलु, भारतीवल्लि तायारम्म**

श्रीम द्गौतमगोत्रजात मनघं श्री रामकृष्णाभिधं
वेदान्तान्वय शेखरं शुभनिधिं विद्यायशो भूषितम्।
गैर्वाण्यर्पित जीवनं कुलपतिं प्राचार्यवर्यं भजे
दैवांशेन विराजमान मनिशं श्री भारतीवल्लभम्॥



पितृभ्यां प्रेमपूर्णाभ्यां विराजद्भ्यां स्वतेजसा।
मम सुकृतिरूपाभ्यां कृतिरियं समर्प्यते॥

भवदात्मजः

**वेदान्तं सत्यश्रीनिवास अय्यंगार्**

"Sahitya Vidya Praveena" "Bhasha Praveena"
**G.V.B. TATA CHARYULU,**
1953 Andhra University Gold Medalist.,
Rtd.Lecturer, S.R.K. Oriental College

Bank Colony,
Narasaraopet

# आशीरामोदः

आयुष्मता श्रीमता वेदान्तं सत्यश्रीनिवास अय्यंगार्येण संस्कृतवाङ्मये चन्द्रः इत्यमुं विषयमधिकृत्य विरचितं परिशोधनग्रन्थमामूलाग्रमस्मिन् श्रावयत्यहमश्रौषम् । प्रतिवाङ्मयं प्राचीनग्रन्थाः अद्य दुर्लभप्राया एव । तथाप्ययं महता श्रमेण ग्रन्थान् सम्पाद्य सम्यक् परिशील्येमं ग्रन्थं व्यरचयत् । परिशोधनमिदं तात्कालिकं Ph.D. उपाधिसम्पादनप्रयोजनमात्रं न अमन्यतायं रचयिता किन्तु "उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा" इत्यभियुक्तोक्तिं मनसि निधाय भाविनिकाले चन्द्रस्वरूपस्वभावविशेषजिज्ञासूनां यथा मार्गदर्शकं भवति तथा प्रायतत । वेदेषु ब्राह्मणेषु आरण्यकेषु वेदान्तेषु वेदाङ्गेषु पुराणेषु रामायणभारतादीतिहासेषु काव्येषु अलङ्कारशास्त्रे इतरभाषाग्रन्थेषु इतरदेशव्यवहारेषु च चन्द्रस्य देवतास्वरूपं तस्य गोलस्वरूपं लतात्मकतां वेदेषु देवतासु च चन्द्रस्य स्थानं प्राचीनानां चन्द्र विषयिकाभिप्रायानस्माकं भारतीयानां आधुनिकविज्ञानवेत्तृणां चन्द्रसम्बन्धिनोऽभिप्रायान् ग्रहणादि विषयानन्यांश्च सम्यक् परिशील्य सरलया भाषया सम्यङ्निरूपितवान् । अस्यानितरसाधारणप्रयत्नं भावयतो मम "देवीं वाचमुपासते हि बहवस्सारं तु सारस्वतम् । जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ॥" इति सूक्तिः स्मृतिपथमायाति । आधुनिकविज्ञानपरिशीलनेन तदनुसारमितोप्यधिकतया परिशीलनं कर्तव्यमित्यस्याभिप्रायः प्रतिभाति । भगवान् लक्ष्मीसहितो हयवदनोऽस्य प्रयत्नं सफलीकरिष्य तदर्थमस्यायुरारोग्यभाग्यानि शक्तियुक्तींश्च प्रसादयत्विति प्रार्थये ॥

इत्थं आशीर्भिः

**गुदिमेल्ल वेङ्कट बुच्चि ताताचार्यः**

"महामहोपाध्यायः" "तर्कवेदान्त सम्राट्"
**मद्दुलपल्लि माणिक्य शास्त्री**

मद्दुलपल्लिवारिवीथि,
गवर्नर्पेट,
विजयवाडा-2

सद्गुरुश्शरणं मम

# आशीः प्रमोदः

विदितचरमेव विपश्चिद्भिः धर्मार्थकाममोक्षेषु मोक्ष एव परमः पुरुषार्थ इति। स च क्वचित् साक्षात् क्वचित् परम्परया भवति। भगवदंश सम्भूतानां समाराधनमपि भगवदाराधनमेव "यद्यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्च त्वं मम तेजोंऽश सम्भवम् ॥" इति भगवदुक्तेः। समाराधनं च तद्विषयकयावदर्थपरिज्ञानेन भवति। प्रकृते श्रीमता सत्य श्रीनिवास अय्यङ्गार् महाशयेन सन्दृब्धो ग्रन्थः "संस्कृत वाङ्मये चन्द्रः" इति भगवदाराधनरूप एवेति ममाभिप्रायः।

षोडश कलापरिपूर्णश्चन्द्र इति हेतोरस्मिन् निबन्धेऽपि षोडशविषयान् कलारूपान्यरूपयद् ग्रन्थकृत् । ग्रन्थस्यास्य परिशीलनेन ममेदं प्रतिभ्राति "अवश्यमायुष्मता अनेन बहुग्रन्थदर्शिना विचारधारावता प्राच्यपाश्चात्य ग्रन्थपरिशोधकेन च भाव्यम्" इति।

प्रत्येकं तत्तद्देवता वस्तु परिशोधकानामिदं पुस्तकं आदर्शस्थानं भवति। एतद्ग्रन्थ परिवीक्षणेन अध्येत्रा विद्याव्यसनिना भाव्यमिति ज्ञायते। तदुक्तमभियुक्तैः:-

व्यसनानि सन्ति बहुशस्तथाऽपि व्यसनद्वयमिदमेव व्यसनम्।
विद्यायां व्यसन मथवा हरिपादसेवनं व्यसनम्॥ इति

अनेन च विषयसन्दर्भेण स्वयं सूर्यवंशेऽवतीर्णोऽपि भगवान् सीताजानिः स्वनामान्ते चन्द्रपदं संयोज्य चन्द्रमन्वगृह्णात्, स रामचन्द्रः चन्द्रविषयक परिशोधन कर्तारं आयुष्मन्तं आचार्यं सत्य श्रीनिवासं समनुगृह्णातु।

एतादृशान् अनेकग्रन्थान् विरचय्य जिज्ञासूनां उपकर्ता विदुषां तोषकः भगवतश्च अनुग्राह्यः भूयादित्याशासे ॥

इत्थम्
**मद्दुलपल्लि माणिक्य शास्त्री**

# ABOUT THE AUTHOR

| | |
|---|---|
| *Name* : | Dr. ***Vedantam Satya Srinivasa Ayyangar*** |
| *Place and Date of Birth* : | Narasaraopet, Guntur District<br>Manmadha - Ashadha Sudha Shashthi<br>Sthiravasara, 25-06-1955. |
| *Parents* : | Pandita Vedantam Rama Krishnamacharyulu<br>Smt. Bharati Valli Tayaramma. |
| *Education* : | Municipal Elementary School, Narasaraopet.<br>Sri Rama Krishna Oriental High School,<br>Sri Rama Krishna Oriental College,<br>Narasaraopet, Guntur Dist.<br>Andhra Geervaana Vidyapeetham,<br>Kovvur, West Godavari District. |
| *Academic Record* : | Sahitya Vidya Praveena, Andhra University<br>M.A. Sanskrit, M.A. Telugu Andhra University<br>Vidya Varidhi (Ph.D.)<br>Rashtriya Sanskrit Samsthan, New Delhi. |
| *Research Publications* : | Kalidasa, Published in Sudharma in 1980.<br>Satyagrahi Mahatma Gandhi,<br>Published in Gairvani in 1994.<br>Vrukshaanaam Vaichitrikaranam,<br>Published in Priyavak in 1997.<br>Vishwaksena Stotram - a lyric in Sanskrit in 1997.<br>A critical study of Atri's '*Samurtarchaanaathikaranam*',<br>Published in 1999 and others. |
| *Profession* : | Worked as lecturer and Senior lecturer at S.R.K. Oriental College, Narasaraopet, Worked as a Selection grade lecturer at M.O. College, Jillelamudi, Guntur Dist., and presently working as a Reader at S.S.&N College, Narasaraopet. |
| *Hobbies* : | Research (A Study of Sanskrit Lit)<br>Classical Music<br>Spiritual discourses |
| *Others* : | Gave a good many AIR talks on the importance of environmental activisiom and consumer movement and the need of ecological balance etc. |

# नम्र निवेदनम्

विद्यावैद्यपत्रिकारङ्गेषु विशेषप्रतिभाभूषितेभ्यः श्री रामकृष्ण आयुर्वेद गुरुकुल विद्यापीठं संस्थाप्य तदनुबन्धित्वेन 'श्री रामकृष्ण ओरियण्टल् हैस्कूल्' 'श्री रामकृष्ण ओरियण्टल् कालेज्' संस्थे व्यवस्थाप्य 'गुण्टूर्' मण्डल पश्चिमभागे संस्कृत प्रचारे विशेषभूमिकां निर्व्यूढ्य संस्कृतज्ञानां संस्कृताभिमानिनां च हृदयकमलेषु स्थिरं स्थानं लब्धवद्भ्यः विद्यादानेन उद्योगकल्पनेन बहूनां जीविकां प्रदातृभ्यः 'नव्यभारती' पक्षपत्रिकाद्वारा प्रजासु साहित्य सांस्कृतिक राजकीय चैतन्यं परिकल्प्य स्वजीवनं सार्थकं कृतवद्भ्यः गौतमगोत्रतल्लजेभ्यः वेदान्तवंशशशाङ्केभ्यः अस्मत्पितृभ्यः श्रीमद्भ्यः **पण्डित वेदान्तं रामकृष्णमाचार्येभ्यः** प्रप्रथमतः प्रणतिरियं समर्प्यते।

सर्वदा सर्वथा 'भर्तुरनुकूलवती साध्वी' ति सुहृद्बन्धु परिजन प्रशंसां लब्धवत्याः वात्सल्यपूर्णायाः श्रीमत्याः सौभाग्यवत्याः '**भारतीवल्लि तायारम्म**' इति सुप्रसिद्धायाः जनन्याः पादौ स्पृशति शिरसा शिशुरयम्।

अस्मत् पुण्यफलाभ्यां मातापितृभ्यां प्रेम्णा समर्प्यते प्रबन्धोऽयं, येन मन्ये मम जन्मनः सार्थकताम्।

परिशोधनाव्यासङ्गेऽजस्रं प्रोत्साहं प्रकल्पितवते प्रकल्पमानाय च सद्भावपूर्णाय सुहृदे **डा. चण्ड्रपाटि नागवरप्रसादरावाय** समर्पयति सुहृदयं कृतज्ञतावचनमात्रम्।

महतोऽस्य शोधप्रबन्धस्य मार्गदर्शकेभ्यः वात्सल्यसुधासूतिभ्यः **श्री विन्ध्येश्वर प्रसाद हिमांशु** महोदयेभ्यः परिशोधनावकाशं प्रकल्पितेभ्यः श्री सदाशिव केन्द्रीय संस्कृत विद्यापीठस्य तदानीन्तन प्रान्सुपालेभ्यः **श्री हरिहर झा** महोदयेभ्यश्च मे प्रणामसहस्राणि।

शोधप्रबन्धमामूलाग्रं परिशिलयन् 'आशीरामेदं' दत्तवद्भ्यः श्रीमद्भ्यः **गुदिमेल्ल वेङ्कट बुच्चि ताताचार्य वर्येभ्यः**, एवं प्रमोदपूर्णं आशिषं प्रदातृभ्यः 'तर्कवेदान्तसम्राट्' 'महामहोपाध्याय' ब्रह्मश्री **मद्दुलपल्लि माणिक्य शास्त्री** महोदयेभ्यः, आशीः प्रमोदोपलब्ध्यै सहकृतवद्भ्यः ब्रह्मश्री **डा. मद्दुलपल्लि दत्तात्रेय शास्त्रिभ्यः** कृतज्ञतापूर्वकं प्रणतिशतम्।

ग्रन्थप्रकाशने प्रोत्साहं दत्तवते सुहृदे श्रीमते **डा. तट्टा वीरराघवाचार्याय**, विशेषश्रद्धां श्रमं च स्वीकृतवते वर्धिष्णवे श्रीमते **डा. वेदान्तं श्री विष्णुभट्टाचार्याय** मे कार्तज्ञ्यवचनानि।

मुद्रणादोषापनयने, पुस्तकस्यसौन्दर्यसाधने अमूल्यं स्वसमयं दत्वा पाठकानां पठनपर्युत्सुकतासम्पादने सहकृतवद्भ्यां सुहृद्भ्यां **श्री रेण्टाल नरसिंहाराव् डा.पोलेपेद्दि राधाकृष्णमूर्तिभ्यां** श्रीनिवासोऽयं निवेदयति कृतज्ञताम्।

प्रकाशने आर्थिक साहाय्यं दत्वा, गैर्वाणी पदपद्मयोः प्रबन्धसुमसमर्पणभाग्यं मम कल्पितवद्भ्यः **तिरुमल तिरुपति देवस्थान प्रचुरणाधिकारिभ्यः** मे नमोवाकाः समर्प्यन्ते।

पुस्तक मुद्रणे विशेषश्रद्धां स्वीकृतवते '**श्रीलेखा आफ्सेट्**' याजमान्याय, विशेषतः अक्षररम्यतां उपकल्प्य पठितुः चक्षुः प्रीतिसन्धात्रे चिरञ्जीविने **अन्दुकूरि भवानी शङ्कराय** कृतज्ञतापूर्वकाः मम शुभाशिषः।

प्रत्यक्षतयाऽप्रत्यक्षतया ममास्मिन् विद्याव्यासङ्गे पुस्तक प्रकाशने च सहकारं दत्तवद्भ्यःसर्वेभ्यः नम्रनिवेदन पूर्वकं विनयाञ्जलिं समर्पयामि॥

विक्रम युगादिः<br>5-4-2000 सौम्यवासरः

साधुवादैः<br>**वेदान्तं सत्यश्रीनिवास अय्यंगार्**

# विषयसूची

*तृतीया कला* **ब्राह्मणेषु चन्द्रः** **79 - 100**

## *सप्तमी कला* **ज्योतिषे चन्द्रः** **154 - 230**



## *अष्टमी कला* **व्याकरणे चन्द्रः** **231 - 241**



## **सहायक ग्रन्थसूची** **242 - 253**



# संस्कृत वाङ्मये चन्द्रः

## भूमिका

### प्रस्तावना

" संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभि "[1] रिति ललितपदरचनाचतुरो दण्डी संस्कृतभाषायाः लक्षणमकथयत् । अस्य वचनं समर्थयति काव्यालङ्कारकारः " संस्कृतं स्वर्गिणां भाषा शब्दशास्त्रेषु निश्चिता " इति[2] । वेदाः दिव्या इति तन्मूलैषा भाषा देवभाषेति भारीतयानां विश्वासः । ग्रीक्देशीयाः अपि भाषा दैवदत्तेति विश्वसन्ति। किन्त्वष्टादशशताब्तानन्तरं पाश्चात्यविमर्शकाः भाषायास्समुत्पत्तौ हेतुमन्वेषमाणाः " bow-wow " इति सिद्धान्तं, ततः भावप्रकटनाय मनुजकृतप्रयत्नफलेन बहिरुद्गताश्शब्दा एव भाषारूपमलभन्त इति " ding-dong " सिद्धान्तं, तथा भयानकसमयेष्वेवमाश्चर्यकरसमयेष्वप्रयत्नतया झटित्युद्गता ध्वनय एव क्रमशो भाषारूपेण परिणता इति " pooh-pooh " सिद्धान्तमकुर्वन्[3] ।

एवं भाषायास्समुत्पत्तौ भिन्नभिन्नाभिप्रायेषु सत्सु पाणिनिमहोदयस्स्वगणपाठे "भाष-व्यक्तायां वाचि " इति भाषधात्वर्थमकथयत्[4] । ततो " भाष्यत इति भाषा " इति व्युत्पत्त्या भावप्रकटनायोपयुज्यमानशब्दस्वरूपमेव भाषेति विज्ञायते। अनेन कारणेनैषा लिपिरूपात्प्राक् श्रुतिरूपमेवाभजत। बह्व्यः भाषाः खल्विदानीमपि श्रुतिविषया एव सन्ति। काश्चन क्रमशो लिपिरूपतां प्राप्य विस्तृतवाक्सम्पत्त्या

---

1. का.द. I.33, 2. जानपदवाङ्मयं(तेलुगु) पु.45,

3. The Greek generalizations about language were not improved upon until the eighteenth century, wben scholars ceased to view languages as a direct gift of God, and put forth various theories as to its origin. Language was an invention of ancient heroes or else the product of a mistical Spirit of the Folk. It began in man's attempts to imitate noises (the "bow-bow" theory), or in his natural sound- producing responses (the "ding-dong" theory), or in violent outcries and exclamations (the "pooh-pooh" theory). " Language " Page.5,6.

4. भ्वादि.612,

उच्चारणदशापेक्षया स्थिरतां चिरं प्रवर्धमानतां लभमाना:विराजन्ते। वेदानां श्रुतय इति नामान्तरं भाषाया: लिपिपूर्वव्यवहारं समर्थयति। एवं लिपिप्रादुर्भावात्पूर्वमेव श्रुतिरूपेण विस्तृतसारस्वतस्य तथानन्यसाधारणविज्ञानस्यचाश्रयभूता भाषा संस्कृतभाषेति तस्या: महिमानं पूर्वोक्तं दण्डिवचनं समर्थयत्येव। विषयप्राधान्येन विस्तृतशब्दसौष्ठवेन अर्थगाम्भीर्यमहिम्ना विराजमाना संस्कृतभाषा स्वस्या: दिव्यतां स्वयं प्रकटयति। एतस्या: प्रभावं प्रकटयन् "Bloomfield" महोदय: कथयति यत् - " संस्कृतविज्ञानम् एकोनविंशतिशताब्दे पाश्चात्यविदुषां ज्ञानसाधनमासी " दिति[1]।

## संस्कृतपदनिर्वचनम्

किं नाम संस्कृतम्? अस्या: भाषाया: एष व्यवहार: प्राचीन: उत नवीनेत्याद्याकाङ्क्षायां प्रथमत स्संस्कृतपदस्य व्युत्पत्तिं विवृतिं च परिशीलयाम:। " सम्यक् कृत " मिति व्युत्पत्तौ सम्पूर्वक " कृ " धातो: भूतार्थे निष्ठा " क्त " प्रत्यये " सम् कृ क्त " इति स्थिते, प्रत्ययककारस्येत्वे, लोपे चेण्णिषेधे " सम्परिभ्यां करोतौ भूषणे " इति सूत्रेण कृधातो: सुटि, उपसर्गमकारस्यानुस्वारे " संस्कृते " ति जाते, सुबादिकार्ये संस्कृतमिति पदं सिद्धम्[2]। एनां व्युत्पत्तिमाधारीकृत्य विवृतिं ददाति श्रीतारानाथतर्कवाचस्पतिरेवम्। " संस्कृत - वि.सम् -कृ-क्त 1. कृतसंस्कारे पदार्थे 2. व्याकरणलक्षणाधीनसाधनयुक्ते शब्दे 3. पक्वे 4. भूषिते 5. शाखाभेदे मेदि.शोधिते जटा.। " इति[3]। काशिकाकारस्तु " सत उत्कर्षाधानं संस्कार: " इति कथयति[4]। एवञ्च " संस्क्रियते श्रुतिस्मृत्यादिबोधकज्ञानेनानेन मानव इति संस्कृत " मिति करणव्युत्पत्त्या, संस्कृतानां भाषेति षष्ठीतत्पुरुषेण, संस्कृता च सा भाषाचेति कर्मधारयेण च विदुष: भिन्नरूपेण संस्कृतभाषापदस्य निर्वचनं कथयन्तीति सर्वेषां विदितप्राय एव विषय:। तत्र प्रथमनिर्वचनेऽष्टादशसंस्कारै स्संस्कृतत्वं विज्ञायते। द्वितीयनिर्वचनस्य " यदिवाचं प्रदास्यामि द्विजातिरिव संस्कृताम् " इति[5] रामायणश्लोकपादो निदर्शनतया दातुं शक्यते। एवं भाषाया: कृतसंस्कारवादिनामभिप्रायं काव्यादर्शटीकाकारोऽपि समर्थयत्येवम् - " संस्कृतादिकं - विवृणोति संस्कृतमिति। दैवी दैवसम्बन्धिनी,

---

1. Round the beginning of the 19th centrury, the knowledge of Sanskrit became part of the equipment of European scholars. "Language" Page.11.
2. सं पूर्वस्य क्वचिदभूषणेऽपि सुट्। " संस्कृतं भक्षा: " (सू.1217) इति ज्ञापकात्॥ वै.सि.कौ. सू.सं.2550
3. वाचस्पत्यम्.पु.5189
4. काशिका.सू.सं. 4.2.16, 4.4.3. विवृत्त्यां॥ 5. रा.सु. 30.18

देवव्यवहार्या वा वाक् वाक्यं महर्षिभिः प्राक्तनपण्डितै र्मुनुभि र्नाम प्रसिद्धं संस्कृतं संस्काररूपया तदाख्यमित्यर्थः। अन्वाख्याता संस्कृतेत्याख्या पश्चात् व्यवहृतेत्यर्थः" इति[1]। एवञ्चैषा भाषा पाणिन्यादिभि र्वैयाकरणैस्संस्कारतामुपनीतापि, तत्पूर्वमेव विस्तृतरूपेण विराजत इति तत्रैव टीकाकारः श्रीमज्जीवानन्दविद्यासागरभट्टाचार्यः कथयत्येवम् – " नित्यस्थितायास्संस्कृतवाचः पाणिन्यादिभि र्महर्षिभि श्शिष्याणां प्रतिपत्त्यर्थं संस्कारोपाय प्रदर्शनादवगन्तव्यम्, अनुशब्दप्रयोगश्च तत एव युज्यते स्थितायाः एवान्वाख्यानसम्भवादिति " स्पष्टीचकार[2]। अतोऽस्याः भाषायाः व्युत्पत्तौ दर्शितत्रैविध्य मेतस्या स्सर्वतोमुखविज्ञानमयतां व्यापकतां च दर्शयति।

## व्यवहारे संस्कृतम्

संस्कृतमिति पदप्रयोगः पाणिनेः पूर्वं परमप्युपलभ्यते। तत्र लौकिकवाङ्मये श्रीमद्रामायणे सुन्दरकाण्डे –

" अहंत्वतितनुश्चैव वानरश्च विशेषतः। वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम्॥ यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्। रावणं मन्यमाना मां सीता भीता भविष्यति॥"[3] इत्येवं वाग्विशेषणतया भाषाभेदे प्रयुक्तम्। एवञ्च " संस्कृतं भक्षाः" (अष्टा.4.2.16) " संस्कृतं " (अष्टा.सू.4.4.3) इति सूत्रद्वये पाणिनिः संस्कारार्थे संस्कृतपदं प्रयुक्तवान्। संस्कारश्च सत उत्कर्षाधानमिति काशिका वचनम्। सरस्वतीकण्ठाभरणे द्वितीयपरिच्छेदे-

"तत्र संस्कृतमित्यादि र्भारती जातिरिष्यते। सा त्वौचित्यादिभि र्वाचामलङ्कराय जायते॥" संस्कृतेनैव केप्याहुः प्राकृतेनैव केचन। साधारण्यादिभिः केचित् केचन म्लेच्छभाषया[4]॥ इति संस्कृतपदं काव्येषु सम्भाषणाभेदरूपेण भाषान्यतमत्वेन प्रयुक्तम्।

उपर्युक्तानि रामायण–सरस्वतीकण्ठाभरणवचनानि संस्कृतभाषाया शिष्टव्यवहारतां समर्थयन्ति। अपि च भोजकाले इयं हि भाषा राजभाषेति च विज्ञायते। " केऽभूवन्नाढ्यराज्यस्य राज्ये प्राकृतभाषिणः। काले श्रीसाहसाङ्कस्य के न संस्कृतवादिनः[5]॥ इति वचनं संस्कृतस्य राजाश्रयतां कथयति। अपि च " वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम्॥" इति, " यदि वाचं प्रदास्यामि द्विजातिरिव

---

1. का.द.श्लो.30.
2. टीका.पु.25
3. रा.सु.30.17.18
4. सरस्व.2.6.7
5. सरस्व.2.15

संस्कृताम्॥"[1] इति च वाक्यद्वयं संस्कृतस्य शिष्टव्यवहारतां, साधारणजनव्यवहारतां च बोधयति। एवं द्विजवाचं विहाय मानुषीं वाचं स्वीकरोमीति हनुमद्वचनानि तदनीन्तनसंस्कृतभाषायाः द्वैविध्यं समर्थयन्ति। "आराक् उदीचाम्" (अष्टा.सू.4.1.130), "इञः प्राचाम्" (अष्टा.सू.2.4.60), "परिस्कन्दः प्राच्यभरतेषु" (अष्टा.सू.8.3.75), "वृद्धाट्ठक् सौवीरेषु बहुलम्"(अष्टा.सू.4.1.148), प्रत्यभिवादेऽशूद्रे" (अष्टा.सू.8.2.94), "दूराद्धूते च" (अष्टा.सू.8.2.95) इत्यादीनि बहूनि सूत्राणि तदानीं प्रान्तभेदेन संस्कृतभाषागतानां माण्डलिकानां पदानां स्थितिं विशदयन्ति। एवं संस्कृदभाषायोषित् कालभेदेन प्रान्तभेदेन पात्रभेदेन विस्तृतिं वैविध्यं च प्राप्य विश्वभाषासु विशिष्टं स्थानं स्वस्याः सुविशालवाङ्मयेन अवाप।

## संस्कृतस्य वाङ्मयत्वम्

संस्कृतभाषायाः वाङ्मयत्वविचारे प्रथमतः वाङ्मयपदलक्षणं व्युत्पत्तिश्च विचारणीया विद्यते। भावप्रकटनाय मनुष्यकृतप्रयत्नस्य फलरूपा हि भाषा व्यवहारबाहुल्यं सम्पाद्य, भावविनिमयानन्तरं विज्ञानस्यानुभूतीनाञ्च विनिमयायोपयुज्य क्रमशः लेखनरूपतामुपलभ्य वाग्विकारेण वाङ्मयत्वं भजते। वैयाकरणाः वागितिप्रातिपदिकस्य विकारार्थे "एकाचो नित्य" मिति वार्तिकेन "मयट्" प्रत्यये चस्य कुत्वे, अनुनासिके ङ्कारे च प्राप्ते "वाङ्मय" मिति पदं सिद्ध्यतीति वदन्ति[2]। वाचस्पत्यं तु "वाचां स्वरूपं वाङ्मय" मित्यभिप्रैति[3]। "ध्वनिवर्णाः पदं वाक्यमित्येतत् वाङ्मयं मतम्॥" इति ह्यग्निपुराणोक्तं वाङ्मय लक्षणम्[4]। भरतस्तु "वाङ्मयानीह शास्त्राणि वाङ्निष्ठानि तथैव च। तस्माद्वाचः परं नास्ति वाग् हि सर्वस्य कारणम्॥" इति व्याजहार[5]। वृक्षो वृक्षो मिलित्वा यथाऽटवी सम्पद्यते तथा पदं पदं संयुज्य भाषा समुत्पद्यते । वृक्षस्य फलानीव भाषायाः खलु फलरूपं वाङ्मयं भवति। एषो ह्यैतिहासिकानामभिप्रायः[6]।

एवञ्च मनुजकृतलेखनानि सर्वाणि वाङ्यपदयोग्यान्येव भवन्तीति "हालेन्" नामविमर्शकस्याभिप्रायः। "चार्लेस् लाम्ब्" महोदयस्तु सिद्धन्तमेनं समूलं खन्डयन्, पद्यरचनैव वाङ्मयपदवाच्येति सिद्धान्तीकरोति। केचनैवं भावयन्ति – रचनाऽस्माकं विज्ञानप्रदायिनी भवितव्या, विज्ञानेन साकं भावनात्मकनिर्वृत्ति र्भवितव्या, काश्चन

1. रा.सु.30.17.18 2. वै.सि.कौ.वा.सं.5052 3. वाचस्पत्यम्.पु.4871
4. अग्नि.1.337 5. ना.शा.14.3 6. आन्ध्र.वा.च.सं.(तेलुगु)पु.31

आनन्ददायिन्यः काश्चन विज्ञानप्रदायिन्यः काश्चनोभयात्मिकाश्च भवन्ति। एनमेवाभिप्रायमाधारीकृत्य राजशेखरः " सारस्वतं द्विविधं शास्त्रसारस्वतं काव्यसारस्वत" मिति जगाद। तत्र विज्ञानसम्पादनाय बुद्धिविकासाय चोपयुज्यमानानि तर्कव्याकरणादिशास्त्राणि प्रथमविभागेऽन्तर्भवन्ति। रामायणादि काव्यानि, अभिज्ञानशाकुन्तलमित्यादीनि नाटकानि तु विज्ञानेन साकमानन्दप्रदानि भवन्तीत्यतो द्वितीयविभागेऽन्तर्भवन्ति। लेशस्यापि विज्ञानश्याप्रयोजकाः पदकीर्तनादिरचनाः यदि भावनात्मिकां निर्वृतिं प्रसादयन्ति तर्हि ताश्च काव्यविभगेऽन्तर्भवन्ति। एनं द्वितीयं विभागमाधारीकृत्यैव जगति सुप्रसिद्धाः वाङ्मयचरित्रकाराः स्वरचनाः कृतवन्तः। एवं काव्यवाङ्मयं पाश्चात्यविमर्शकाः साधारणवाङ्मयमिति कथयन्ति। शास्त्रवाङ्मयन्तु तत्तद्वाङ्मयत्वेन कथ्यत" इत्याचार्य पिङ्गलि लक्ष्मीकान्तं महोदयाः स्वविमर्शकग्रन्थे विपुलीकृतवन्तः[1]।

भगवद्गीतायामपि सप्तदशाध्याये "अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्। स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते॥"[2] इति वाचिकतपोलक्षणप्रसङ्गेऽर्थान्तरेण वाङ्मयलक्षणं व्याजहार। अत्र विचारणे यत्किमपि शास्त्रं वा या कापि चरित्ररचना वचनरचना पद्यरचना वचनपद्यरचना वा भवतु, तत्र कलात्मकता तथोन्नतभावसुरभिता भवेत्, विश्वैक्यभावस्सुन्दरशैली च भवेत्, तादृशी रचना हि वाङ्मयं भवति। एतादृशे हि वाङ्मये भाषागतं विज्ञानं वज्रपेटिकयां निक्षिप्तवत् सुरक्षितं भवति। तदनुबन्धेन तद्भाषितॄणां नागरिकतां संस्कारं च प्रकाशयति। वाङ्मयं प्रत्येकव्यक्तित्वद्योतकमपि मानवान्तःप्रकृतिप्रकटीकरणसमर्थग्रन्थराशिरेवेति वक्तुं शक्यते। सारस्वतं जातिमभ्युदयमार्गे प्रवर्तयति। विश्वश्रेयस्संदेशकत्वात् समादरणीयं, सांघिकजीवनतत्त्वबोधकत्वात् वेदितव्यं चास्ति। इदानीं भारतीयानां संस्कृति विज्ञानं च संस्कृतभाषावज्रपेटिकायां निक्षिप्तम्। औपनिषदाध्यात्मिकोन्नतिः, राजनीतिः, गणितादिशास्त्रेषु वैभवश्च संस्कृतवाङ्मयत एव विज्ञायन्त इति कथनं न सत्यापेतम्।

## संस्कृतवाङ्मयवैशिष्ट्यम्

*संस्कृतवाङ्मयवैशिष्ट्यप्रतिपादकेषु प्राक्पश्चिमविदुषां वचनेषु श्री श्री श्री द्वारकापीठाधिपतीनां* वचनानि - " भारतं नाम संस्कृतं - संस्कृतं नाम भारतम्। यस्याः भाषायाः खल्वैतिह्यं संस्कृतिं च गतप्रायत्वेन मनुते, तदालोचनं मूर्खतायाः

1. आन्ध्र.सा.च.पु.74-76.

2. भ.गी.17.15.

पराकाष्ठा। एषा भाषाऽस्माकं विश्वे सर्वत्र जीवनदायिनी तथा च भविष्यति काले विश्वस्यैव मार्गदर्शिका भविता। एषा भारतीयानां रुधिरे दृढतया मिलित्वा प्रवहति[1] ।" इति। अत्र भारतीयैस्सह संस्कृतभाषायास्सम्बन्धः विश्वे चैतस्याः वेशिष्ट्यं विपुलीकृतं विद्यते।

***श्री जवहर्लाल् महोदयस्तु*** "संस्कृतभाषा भारतस्य निधिः। दिव्यपरंपरागतैषा यावत्कालं विराजतेऽस्मत्प्रजासु तावत्कालं भारतीया मौलिकप्रतिभाऽनुवर्तत एव " इति समभिप्रैति[2] ।

***स्वामी विवेकानन्दमहोदयास्तु*** "संस्कृतभाषायाः प्रतिशब्दस्य ध्वनिरस्मज्जातेः गौरवं शक्तिं पुष्टिं च प्रसादयति " इति समुद्घोषितवन्तः[3] ।

***श्री सी.वी.रामस्वामि अय्यर् महोदयस्तु*** " विशालक्षेत्रे स्थितायाः भारतजातीयवारसत्वसम्पदः पुनस्सन्धायिका संस्कृतभाषा। प्रत्युत भारतदेशः भाषाशास्त्रस्य निलयः। विशेषतः आधुनिकैः भाषाशास्त्रज्ञैः "बाप्प्" "माक्स्मुल्लर्" "ब्रूमन्" प्रभृतिभिः संस्कृतभाषापरिचयादेव भाषाशास्त्रे नूतनतत्वानि प्रकाशितानि " इति प्रोवाच[4] ।

---

1. So far as India is concerned Sanskrit is India and India is Sanskrit. To say that a langugage with such a hoary tradition and Culture is out of date is a height of foolishness. It is a true pass-port to success in the World and the World hereafter. It runs in every Indian's blood in a strong or diluted manner. (अ.प्र.पु.2)
2. Sanskrit is the greatest treasure which India posseses. It is a magnificiant inheritance and so long as this endures in the life of our people, the basic genious of India will continue. (अ.प्र.पु.3)
3. The very sound of Sanskrit words give prestige, a power and Strength to the race. (अ.प्र.पु.3)
4. Sanskrit, according to him, covers a vast eield of racial inheritance, and in addition, it is a note worthy that India original home of the Science of language which successive grammarians and Philosophers brought to perfection. It was, infact through the study of Sanskrit that the modern science of philology was inaugurated by Bopp, Max-Mullar, Brugmann and Others.
(in the Foreword to "The Teaching of Sanskrit")

***श्री वि.वि.गिरिमहोदयस्तु*** एतस्याः वैशिष्ट्यमेवं जगाद "संस्कृतभाषा भारतीय - परम्परागतायास्संस्कृतेः नागरिकतायाश्च सङ्केतभूता" इति[1]।

***श्री.वी.राघवन् महोयदस्तु*** " संस्कृतभाषा तस्याः अनन्यस्वभावेन स्थिता विराजते। एषा मृतप्रायया ग्रीक् भाषया नापि मातृभाषया साम्यं भजते। भारतीयानामेषा भाषा पवित्रग्रन्थात्मिका, संस्कृतेः प्रकाशिका विद्यते। स्वकीयभावनया शब्दसंपत्त्या व्यावहारिकभाषासु सम्मिलिता तस्याः अध्ययने आवश्यकतां समकल्पयत्" इत्युवाच[2]।

***प्रोफ्.के.रामवर्म राजा महोदयस्तु*** "संस्कृतभाषा न केवलं शास्त्राणां नापि केवलं व्याकरण - छन्दो - ज्योतिषग्रन्थानामावासप्राया, किन्तु मन्त्रविद्यायाः कलानां च निलय " इति संस्कृतभाषायाः अनन्यसाधारणां स्थितिं व्यक्तीचकार[3]।

***श्री.के.यम्.मुन्षी महोदयस्तु*** "इदानीन्तनकाले भाषाविभागे वयमपगतगौरवं संस्कृतभाषाविद्वद्भिः पुन र्लभामहे। किन्तु सम्पूर्णहृदयं संस्कृतभाषाध्ययनेनैव विस्तृतत्वेन वयं वर्धयामः। पालीभाषासंस्कृति राग्नेयाशियां चीना जपान् देशांश्च सन्धत्ते। यदि संस्कृतभाषा नाद्रियते तर्हि समैक्यस्यैवास्माकं विघटना सञ्जायते। समैक्यसुवर्णशृङ्खला या काऽपि विद्यते चेत् सा संस्कृतभाषयैव दीयते"[4] इति भारतीय जनहृदयकुसुमगुम्फितसूत्रं संस्कृतमिति जगाद।

---

1. Sanskrit is the symbol of India's heritage, culture and civilisation.
(अ.प्र.पु.3)

2. Sanskrit is unique in its nature being neither dead like Greek nor alive like a MotherTongue. As the classical language of the country and the language of its culture, Sanskrit with its ideas and words, has permeated all the spoken languages, a circumstance which facilitates its study.
(preface by V.Raghavan to "The Teaching of Sanskrit")

3. Sanskrit was the language of sciences not only merely of grammer, prosody, astronomy, but even of magic and arts.
"The Teaching of Sanskrit ". (P.5)

4. In the recent past, though a subject race, we gained our lost prestige through Scholars whole vision had been largely enriched by Sanskrit studies-pali cultural link with South East Asia, China and Japan. If Sanskrit was neglected we will imperil the basic unity. If there has been any golden thread of unity, it has been supplied by Sanskrit. (अ.प्र.पु.3)

*डा.बेजवाड गोपालरेड्डि महोदयस्तु* " संस्कृतभाषा सर्वासामस्मद्‌भाषाणामुत्पत्ति स्थान " मिति जगाद[1]।

*डा.कट्टमञ्चि रामलिङ्गारेड्डि महोदयस्तु* " विस्तृता ह्याशियासंस्कृति स्संस्कृतभाषागतां बौद्धव्यवस्थामाधारीकृत्य विद्यते। बह्वीनां भारतीयभाषाणां संस्कृतभाषा मूलभूताऽऽसीत्। एतस्याः साहित्यं सुसम्पन्नं विस्तृतञ्च। न केवलं वेदान्तो न्यायः किन्तु शास्त्रीयपरिभाषा च संस्कृतभाषायामेव समीचीनतया समुच्चारिता"[2] इति कथितंवन्तः।

*श्री.के.यम्.फणिक्कर् महोदयस्तु* " हिन्दूनां भावैक्यं तेषां साधारणसाम्प्रदायिकया संस्कृतभाषया समुपलभ्यते। तथापि संस्कृतभाषापुनरुद्धरणमेव तेषामात्मविश्वासवृद्ध्यै विश्वविज्ञानवृद्ध्यै सहकरोती "[3] त्यब्रवीत्।

*श्री खण्डूबाय् देशाय् महोदयस्तु* " एषा देवभाषेति कीर्त्यते। यदि वयं भारतीयभाषाः सुसम्पन्नाः संवर्धिताश्च कर्तुं वाञ्छाम स्तर्हि संस्कृतभाषा भाषान्तरापेक्षया निर्बन्धविषयत्वेन कार्या। एषा संस्कृता विस्तृतप्रचारा समीचीनविधानेन वर्धिता च। अत एषा सर्वस्य देशस्य समैक्यसाधिका। "[4] इत्याह।

*प्रोफ.यन्.यन्.दास्गुप्ता महोदयस्तु* " समुज्ज्वलभावप्रकटनाय भारतीयसंस्कृतेरेकीकरणाय समर्थाऽनन्या भाषैषैवे "[5] ति जगाद।

---

1. Sanskrit is the source of all our languages. (अ.प्र.पु.4)
2. A large part of Asiatic culture is based on Sanskrit in its Buddhistic form. Sanskrit is the basis of many Indian languages. Its literature is rich and vast. Not only philosophy but even law and scientific terms can be accurately expressed in Sanskrit. (अ.प्र.पु.4,5)
3. The intellectual unity of the Hindus was provided by a common classical language, Sanskrit. Another factor which helped in the growth of self confidence was the revival of Sanskrit and the growth of indological scholarship. (अ.प्र.पु.5,6)
4. It is regarded as devine language... if we want to enrich the Indian langauges and develop them, Sanskrit should be made a compulsory subject as any other language. It should be modernised and propagated and developed systematically so that it would lead for integration of the whole country. (अ.प्र.पु.6)
5. It was the only language in which the whole of India expressed all her best thoughts and it has united the culture of India. (अ.प्र.पु.6)

***श्री षफी महम्मद् महोदयस्तु*** "अस्याः महोन्नताया स्संस्कृतभाषाया स्समध्ययनेन प्रजासु विज्ञानस्फूर्तिः परम्परावगाहनं सदभिप्रायश्च जायते। संस्कृतभाषा मृतभाषेति कथनमज्ञानानुबन्धमेव। अनेकवत्सरेषु वैदेशिकप्राबल्येन भारतीयाः न केवलं राजकीयत्वेन तथार्धिकत्वेनैव प्रेष्यतां गताः, अपितु सांस्कृतिकत्वेनापि ते स्वप्राचीनां संस्कृतिं, सम्प्रदायांश्चान्धा इव त्यक्तवन्तः। तेषां प्राचीनाः विनिर्मलं प्रशान्तं च जीवनमनुसृतवन्त इति चेत् तत्र हेतुस्ते संस्कृतभाषासंस्कारेण प्लाविता इत्येवे" ति भावयामास[1]।

## वैदेशिकानामभिप्रायः

***सर् विलियम् जोन्स् महोदयः*** " संस्कृतभाषायाः निर्मितिरद्भुता। ग्रीक्भाषापेक्षया ऽत्यन्तं लोपरहिता परिपूर्णा च, लाटिन् भाषापेक्षया विस्तृता च। द्वाभ्यामपि ताभ्यां विनिर्मला। संस्कृतभाषागतदीर्घसमासाः नोपलभ्यन्तेऽन्यासु भाषासु। अस्यां द्वापञ्चाशदुत्तरैकशतैरञ्भि (152) र्विशिष्टा स्सुदीर्घा स्समासा स्सन्ति। हिन्दूसारस्वते यस्मिन् कस्मिन्नपि विभागे परिचयसम्पादनायैकस्य जीवितं नालं भवति। अद्याप्यमुद्रितत्वेन शिष्टाःग्रन्थाः दशसहस्रसङ्ख्याकास्सन्ती " ति स्पष्टीचकार[2]।

***श्री माक्स् मुल्लर् महोदयस्तु*** – " भाषाणां भाषा संस्कृतभाषा। ज्योतिषशास्त्रस्य गणितमिव भाषाशास्त्रस्य संस्कृतं प्रधानम्। यदि संस्कृतभाषा समभ्यस्ता तर्हि सैषाभाषा परिपूर्णमानवविकासायोपयुज्यते। ग्रीक् भाषाप्येतावता किंचिदूनतया वा उपदेष्टुं न शक्ते " [3]ति जगाद।

---

1. The study of this great language, Sanskrit, will inculcate in the people, a spirit of tolerence, understanding and goodwill. It is rediculous to call Sanskrit, a dead language. Due to years of foreign domination, Indians had not only become slaves politically and economically but also culturally. They had blindly given up their ancient culture and traditions. If their ancients has led a pure and peaceful life, it was because they were imbued with Sanskrit culture. (25-1-48, Hindu)
2. आन्ध्रभाषातः (अ.प्र.पु.7) (अ.प्र.पु.6,7)
3. ....Sanskrit literature, if studied only in a right spirit is full of human interest, full or less in which even greek could never teach us.

("Max Muller's India" अ.प्र.पु.7)

***श्री माक्डोनल् महोदयः*** " ऐरोपीयानां बुद्धिविकासाय संस्कृतसारस्वतकृता सेवा समधिकेति कथने नास्ति संदेहः। अधुनाप्येषा भाषा भाषान्तरापेक्षया गुरुतरास्ती " त्यब्रवीत् ।[1]

***सर् हन्टर् महोदयः*** " यूरोपीयैस्संस्कृतभाषापठनान्तरमेवाधुनिकभाषाशास्त्रमारब्धम्। ऋग्वेदस्य कालो न विदितः। पाणिनीयं व्याकरणं व्याकरणप्रपञ्चेऽधुनापि समुन्नतशिखरे विराजते " [2] इति विशदीचकार।

***श्री श्लेजल् महोदयः*** " अस्याः भाषायाः संस्कृतमिति नामान्तरं विभ्राजितं सत् नितरां युक्तियुक्तास्ति। संस्कृतं नाम लोपरहितं सत् सन्निकर्षं परिपक्वस्थितिं च नीतमिति विज्ञायते " [3] इति प्रोवाच।

***श्री इबिया महोदयः*** " रोमन् भाषेव शक्तियुक्ता हिब्रूभाषेव भगवदंशोपेता व्याकरणशास्त्रे समुत्कर्षस्थाने स्थिते " [4] ति प्रशंसितवान्।

एवं विदीशीयै स्स्वदेशीयैश्च प्रशंसिताया स्संस्कृताया स्सुविशालं महोन्नतं तथैकैकस्मिन्नप्यंशे समुद्रायमानं वाङ्मयं विद्यते। वटवृक्षवच्छाखोपशाखाभि स्सम्यग्विस्तृते, तत्र तत्र पुनर्वृक्षतामुपगतेऽस्मिन् संस्कृतवाङ्मये प्रथमभागेऽस्मिन् कोशेषु - वेदेषु - ब्राह्मणेषु - आरण्यकेषु - उपनिषत्सु - वेदाङ्गेषु तत्रापि विशेषत्वेन ज्योतिषे शास्त्रे तथा व्याकरणशास्त्रे च विषयाः अष्टसु कलासु समीक्षिताः। एवं द्वितीयभागे तु पुराणेषु - रामायणे - महाभारते - अलङ्कारशास्त्रे - काव्येषु - संस्कृतेतरभाषाकाव्येषु - वैज्ञानिके पथि च चन्द्रस्योत्पत्तिस्वरूपस्वभावादिकाः, स्थानगतिग्रहणादयः, प्राणिभिस्सम्बन्धश्चेति विषयाः देवतारूपेण गोळरूपेण च समीक्षिताः।

---

1. ....The intellectual debt of Europe to Sanskrit literature has been undeniably great. It may perhaps become greater still in the years to come ("History of Sanskrit literature" (अ.प्र.पु.7)
2. ....The age of this venerable hymn (Rigveda) is unknown. The grammer of Panini stands Supreme among the grammarians of the world. (अ.प्र.पु.8)
3. आन्ध्रभाषातः (अ.प्र.पु.8)
4. आन्ध्रभाषातः (अ.प्र.पु.8)

यदा चन्द्रमसि देवताभावनां मानवोऽकरोत् तदैव तस्य मानवीकरणञ्चोपलक्षितम्। षोडशकलापूर्णस्य चन्द्रस्य विषयविभागश्चात्र शोधप्रबन्धे षोडशकलाभिस्सङ्कलितः। वैदिकवाङ्मये पौराणिकैतिहासिकग्रन्थेषु लौकिक संस्कृतवाङ्मये च चन्द्रस्य विषयसमर्पणपूर्विका समीक्षा चात्र कृता विद्यते।

विष्णुपुराणाधारेण विस्तृतं चन्द्रवंशावलिपत्रं समर्पितम्। चन्द्रव्रते विश्वे चन्द्रस्य मानवीकरणं चित्रं समुल्लिखितम्। ज्योतिषफलविभागे पट्टिकाः दत्ताः। षोडशराजयोगचित्रं च समर्पितम्। "अर्वाचीनं ज्योतिर्विज्ञान" मिति ग्रन्थात् भूमेश्चन्द्रस्य पृथग्भूतं चित्रं स्वीकृतं दत्तञ्च। एवं " दि वरल्ड् बुक् - डिक्श्नरी " ग्रन्थाधारेण सूर्यचन्द्रग्रहणविधानं चित्रं, ग्रहणावृत्तिचक्रश्च दर्शितः।

एवं चन्द्रस्य दैवत्वे मानवत्वे खगोलमात्रदृष्ट्या च विषयसमीक्षात्मको यथामति मया कृतोऽयं प्रयत्नो विदुषां सम्मोदाय समर्प्यते।

प्रथमा कला

# कोशेषु चन्द्रः

## प्रस्तावना

सुविशाले संस्कृतवाङ्मये शब्दसंपत्तिरनन्या विद्यते । प्राचीनाः पदपाठादि - रूपेण भाषागतपदानामेकत्रीकरणे बहुप्रयासं कृतवन्तः । तथापि वाङ्मयेऽस्मिन् पदानि साकल्येनैकत्रीकर्तुं न पार्यते । अस्याः भाषायाः पदानन्त्यसूचिका काचनाऽऽख्यायिका व्याकरणमहाभाष्ये समुपलभ्यते, यया चन्द्रपर्यायपदसङ्कलनेऽस्मद्प्रयाशः बिन्दुमात्र इति भाव्यते । यतः पुरा इन्द्रः बृहस्पतेः सकाशे शब्दप्रतिपत्त्यै प्रतिपदपाठपारायणं चकार । बृहस्पतिश्च इन्द्राय दिव्यं वर्षसहस्रं प्रतिपदपाठपारायणं प्रोवाच । तथापि नान्तं जगाम । बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनं कालः तथापि पारं न गतः ।[1] अतोऽत्रास्माभिः क्रियमाणः चन्द्रपर्यायपदसङ्ग्रहस्सर्वदाऽसमग्रैव भवतीति वक्तुं शक्यते । तथापि यथाशक्ति मया कृतं कोशग्रन्थेभ्यश्चन्द्रपर्यायशब्दराशिसङ्कलनं बालक्रीडवत् विदुषां सम्मोदाय भवतु ॥

अकारादिक्रमेणात्र पदानि स्वीकृतानि। हिमकर इत्यादियोगरुढादिषु पदेषु तुषारकरः हिमकिरण इत्यादिरुपेण बहूनि पदानि सिद्ध्यन्ति। तथापि यथावकाशं तादृशानि पदानि स्वीकृतानि। अत्र सर्वे शब्दाः कोशग्रन्थेभ्यः समुद्धृताः एव। द्वित्रीणि पदानि तु विष्णुसहस्रनामतः स्वीकृतानि। तत्र तत्र वाक्यान्ते कोशसङ्केतश्च प्रदत्तः। पश्यन्तु मनीषिणश्चन्द्रपर्यायपदसमृद्धिम्॥

---

1. बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दनां शब्दपारायणं प्रोवाच। नान्तं जगाम। बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनं कालः। नान्तं जगाम॥ व्या.म.पु.43.

*अं* : अङ्कुरो व्योमरूपश्च प्रद्युम्नश्चन्द्रसंज्ञकः।
अनुस्वार स्तथाबिन्दुरङ्कारश्च शिवोऽव्ययः॥ मा. (ना.सं)

*अत्रिजातः* : पुं. अत्रेर्नेत्रात् जातः जन-क्त 5 त.। चन्द्रे, अपत्यार्थं तपस्यां कुर्वतोऽत्रेर्नेत्रात् जातो हि चन्द्रः। (श)(वा)

*अत्रिदृग्जः* : पुं. अत्रेर्दृशो नेत्रात् जायते जन-ड 5 त.। चन्द्रे, अत्रिनेत्रजादयोऽप्यत्र। (वा)

*अज :* : अजश्छागे हरिब्रह्मविधुस्मरनृपे हरे। (मे)॥ अजो हरौ हरे कामे विधौ छागे रघोस्सुते। (वि)(ना.सं)॥ अजः पुं. आत् विष्णोः जायते इति। चन्द्रे, कामे च। '' चन्द्रमा मनसो जात '' इति श्रुतौ विष्णोर्मनोजन्यत्वात् चन्द्रस्य चन्द्रत्वम् । (वा)॥

*अब्जः* : अब्जोऽस्त्री शङ्खे ना निचुले धन्वन्तरौ च हिमकिरणे। क्लीबं पद्मे (मे)॥ अब्जो धन्वन्तरौ चन्द्रे निचुले शङ्खपद्मयोरब्जं स्यात्। (वि)॥ अब्जो धन्वन्तरौ चन्द्रे शङ्खेऽब्जं पद्मशङ्खयोः। (हे)॥ अब्जौ शङ्खशशाङ्कौ च (अ)॥ पद्मधन्वन्तरी चाब्जौ। (त्रि)॥ शङ्खे धन्वन्तरौ चन्द्रे पुंस्यब्जः क्लीबमब्जजम्। (ना.सं)॥ लवणाम्बुजयोरब्जं क्लीबे शङ्खे तु पुंसि वा। पुंस्येव निचुले शीतरश्मौ धन्वन्तरावपि। (नाना.र)॥ अद्‌भ्यः जायते इत्यब्जः। (गु.बा)॥ अप्सु जायते - जन् ड 7 त.। चन्द्रे धन्वन्तरौ च पुं. तयोस्समुद्रजातत्वात्। '' प्रसन्नात्मा समुत्पन्नः सोमश्शीतांशुरुज्ज्वलः'' इति, धन्वन्तरिस्ततो देवः वपुष्मानुदतिष्ठत् इति च। भा.अ.स्क. (वा) ॥

*अभ्युपगमः* : अभ्युपगम स्तु पुंसि स्वीकारेऽन्तिकसमागमे च।
नक्षत्रनेमिरुक्ता रेवत्यां ना ध्रुवे चन्द्रे॥ (मे)

*अमतिः* : अथामतिः पुंसि हिमदीधितिकालयोः। (मे)॥ अमतिः कालचन्द्रयोः। (वि)॥ अम्-अति काले उणा। चन्द्रे मेदि.। (वा)॥

*अमृतांशुः* : मध्यमाने पयोनिधौ अमृतांशोश्चन्द्रस्योद्भवो यस्मात् सः अमृतांशूद्भवः। (विष्णु.शां)॥

*ग्लौः* : ग्लौ धरण्यां निशापतौ। (मे) (ना.सं)॥ ग्लौः मृगाङ्कः कलानिधिः। (अ)॥ प्रतिमासं ग्लायति क्षयति इति ग्लौः। औ.पुं।ग्लै म्लै हर्षक्षये। (गु.बा)॥

पुं.ग्लै.डौ। चन्द्रे, कर्पूरे हृदयनाभ्यां च। (श) ॥ पुं. ग्लुमनुभ्यां डौः उणा.ग्लै-डौ। चन्द्रे तस्य प्रतिमासं कृष्णपक्षे ह्रीयमानत्वात् तस्य तथात्वम्। (वा) ॥

*इन्दुः* : हिमांशुश्चन्द्रमाश्चन्द्रः इन्दुः कुमुदबान्धवः (अ) ॥ उनक्ति तुषारकणै रिति इन्दुः उ.पुं. उन्दी क्लेदने (गु.बा) ॥ इन्दुरिन्धेरुनत्तेर्वा। तस्यैषा भवति। (नि) ॥ उनत्ति चन्द्रिकया भुवं क्लिन्नं करोति इन्द् उ आदेरिच्च। चन्द्रे, " दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव। " (वा) ॥

*उडु(डू)पः* : उडुपं तु प्लवेऽस्त्रियां। चन्द्रे पुंसि। (मे) ॥ उडुपस्तु प्लवे चन्द्रे। (वि) ॥ उडुपः प्लवशशिनोः। (हे) ॥ चन्द्रे नाऽस्त्र्युडुपः प्लवे। (त्रि) (ना.सं) ॥ उडुपस्त्विन्दौ ना न द्वयोः प्लवे। (नाना.र) ॥ उडूनि उडूर्वा नक्षत्राणि पाति। पा-क। चन्द्रे। स हि ताराणां पतिरत स्तद्रक्षकः। उडूनां दिवा हि सूर्यकिरणैरभिभवादप्रकाशत्वेन रात्रौ च प्रकाशवत्वेन निशाधीशस्य चन्द्रस्य तत्पतित्वम्। एवं "नक्षत्राणामपीशत्वमोषधीनां तथैवचेति" का.ख. प्रजापतिना तदधीशत्वदानमुक्तम्। गीतायामपि "नक्षत्राणामहं शशी" इत्युक्तेः तन्मध्ये तस्य श्रेष्ठत्वादपि तत्पतिता। सलिलमये शशिनि बृह.सं. तस्य जलमयत्वोक्तेः उडुमयत्वात् जलमयत्वात् तस्य उडुपतित्वं वा बोध्यम्। दक्षकन्याश्विन्यादि तारापतित्वाद्वा तथात्वम्। (वा) ॥

*उडु(डू)पतिः* : उडूनां पतिः 1. चन्द्रे, 2.जलेशे, 3. वरुणे च। "परिमुग्धतां वणिगि वोडुपतेः ॥" माघः ॥ "रसात्मकस्योडुपतेश्च रश्मयः ॥" कुमा.(वा) ॥

*उडुराज्(जः)* : उडुषु राजन्ते राज् क्विप् - अच्। उडूनां राजा टच् - सम् वा। उडुराजोऽप्यत्र। "तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्।" भाग. 10 स्क 26अ (वा) ॥

*उड्वीशः* : उड्वीशो ग्रन्थभेदे स्यात् उड्वीशश्चन्द्रिकापतौ। (मे) ॥

*ऊ* : ऊकारः पुरुषे चन्द्रे राजपुत्रे गले सुरे। प्राङ्गणोपमयोः पूर्णकुम्भे वणिजि रक्षिणि। (नाना.र) ॥ पुं.अवतीति अव क्विप् ऊठ् 1. महादेवे 2.चन्द्रे च 3.पलाशे.त्रि.शब्दरत्ना.(वा) ॥ पालके। त्रि. (श) ॥

*ओषधीशः* : विधुस्सुधांशुश्शुभ्रांशुरोषधीशो निशापतिः..(अ) ॥ ओषधीनामीशः (गु.बा) ॥ औषधीनां गर्भ उत्पत्तिर्यस्मात् 1. चन्द्रे, तत्किरणसम्पर्कात् ओषधीनामुत्पत्ते स्तस्य तथात्वम्। (वा) ॥

*ओषधीपतिः* : पुं.6.त.चन्द्रे तस्य किरणैरोषधीनामाप्यायनात्। ''अमायां तु सदा सोम ओषधीः प्रतिपद्यते। तमोषधिगतं गावः पिबन्त्यमृतवत् तथा॥'' काल मा. सोमोत्पत्तिवाक्याच्च तथात्वम्। " अपमार्गमोषधीपतिः स्म करैः॥'' माघः॥ ओषधीनाथौषधीपादयोऽत्र (वा) ॥

*ऋक्षराजः* : पुं. ऋक्षाणां राजा त. टच्। जाम्बवति, चन्द्रे च। (श) ॥

*कलानिधिः* : ग्लौर्मृगाङ्कः कलानिधिः ..(अ) ॥ कलानां निधिः (गु.बा) ॥ पुं. कला निधीयतेऽत्र। कला-नि-धा-कि। चन्द्रे। (श) ॥ कलानिधीयतेऽस्मिन्। नि-धा-आधारे कि उप.प.समासः। चन्द्रे, अमरः। ''अहो महत्वमहतामपूर्वं विपत्तिकालेऽपि परोपकारः। यथास्यमध्ये पतितोऽपि राहोः कलानिधिः पुण्यचयं ददाति॥'' उद्भटः। (वा) ॥

*कलापः* : कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः। चन्द्रे विदग्धे व्याकरण-भेदेऽपि कथ्यते बुधैः॥ (मे) ॥ कलापो भूषणे बर्हे तूणीरे संहतावपि।(अ)(ना.सं) ॥ पुं. कलामाप्नोति कला-आप्-अण् 1.समूहे, 2.मयूरपिच्छे, 3.भूषणे, 4. काञ्च्यां, 5.तूणे, 6.चन्द्रे, 7.व्याकरणभेदे, 8.ग्रामभेदे च (श) ॥ पुं. कलां आप् अण्।1.समूहे, 2.मयूरपिच्छे, 3.भूषणे, 4.काञ्च्यां, 5.चन्द्रे. मेदिनी (वा) ॥

*कलापूर्णः* : पुं.कलाभिःपूर्णः। चन्द्रे शब्दचन्द्रिका। कलाभिः पूर्णे, त्रि. (वा) ॥

*कलाभृत्* : पुं. कलां बिभर्ति कला - भृ - क्विप्। चन्द्रे (श) ॥

*कलावत्* : पुं. कला - अस्त्यर्थे मतुप् मस्य वः। चन्द्रे। ''कला च कान्तिमती कलावतः (भृतः)।'' कुमा.(वा) ॥

*कान्तः* : कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे।
लोहे च चन्द्रसूर्यायःपर्यायान्तश्शिलासु च॥ (मे) ॥

*कुमुदनाथः* : पुं. 6 त. चन्द्रे तत्प्रकाशकत्वात् तस्य तथात्वम्। कुमुदसुहृद् कुमुदबान्धवादयोऽप्यत्र। (वा) ॥

*कुमुदबन्धुः* : पुं. 6 त.चन्द्रे तस्य प्रकाशेन कुमुदस्य प्रकाशात् तस्य तथात्वम्। कुमुदपत्यादयोऽप्यत्र। (वा) ॥

*कुमुदबान्धवः* : इन्दुः कुमुदबान्धवः। (अ) ॥ कुमुदानां बान्धवः। (गु.बा.) ॥ पुं. 6 त. चन्द्रे तस्य कुमुदप्रकाशकत्वेन तद्बान्धवत्वम्। एवं तन्नाथाऽऽदयोऽप्यत्र। कर्पूरे च। (श) ॥

*कूटः* : कूटाख्यानृतचन्द्रायोधनमायोत्कटादिषु। (अने)(ना.सं) ॥

*क्लेदः* : क्लेदो रसशशाङ्कयोः। (नानार.) ॥

*क्षपाकरः* : नक्षत्रेशः क्षपाकरः। (अ) ॥ क्षपां करोतीति क्षपाकरः। (गु.बा) ॥ पुं. क्षपां करोतीति 2 त. 1.चन्द्रे 2.कर्पूरे च।(अमरः)। क्षपाकृद् क्विप्। ''विशद स्म कूटघटिताः क्षपाकृतः।'' माघः ॥ पुं.क्षपायां रात्रौ करो दीधितिर्यस्य। चन्द्रे, स हि रात्रौ सूर्यतेजसा दीप्यते। (श) ॥

*क्षपानाथः* : पुं.6 त. 1.चन्दे 2.कर्पूरे च। "क्षिप्रं क्षपानाथ इवाधिरूढः" माघः ॥ क्षपापत्यादयोऽप्यत्र। (वा) ॥

*क्षीराब्धिजः* : क्षीराब्धिजन्तु सामुद्रलवणे मौक्तिकेऽपि च। पुमान् तुषारकिरणे कमलायां तु योषिति ॥ (मे) ॥ क्षीराब्धिजन्तु सामुद्रलवणे मौक्तिके क्वचित्। क्षीराब्धिजा तु श्रियां प्रोक्ता चन्द्रे क्षीराब्धिजो भवेत् ॥ (वि) ॥ क्षीराब्धिजन्तु मौक्तिके वशिरे क्षीराब्धिजस्तु चन्द्रे क्षीराब्धिजा श्रियाम् ॥ (हे)(ना.सं) ॥ पुं. क्षीराब्धौ जायते जन् ड। चन्द्रे। लक्ष्म्यां स्त्री। (श)(वा) ॥

*खगः* : खगः सूर्येन्दुविहगशरग्रहगीर्वाणवायवः। (नाना.र) ॥ पुं.खे आकाशे गच्छतीति गम् - ड। सूर्ये, देवे, शरे, विहगे, वायौ, सूर्यचन्द्रादिषु ग्रहेषु च। (श) ॥ पुं.मेदि.खे आकाशे गच्छति गम् - ड 7 त.। सूर्ये, सूर्यादिग्रहे। (वा) ॥

***खदिरः*** : खदिरी शाकभेदे स्त्री ना चन्द्रे दन्तधावने। (मे) खदिरी शाके खदिरो दन्तधावनचन्द्रयोः। (हे)(ना.सं) पुं.खद् किरच्-ख एर-द्रुमभेदे, इन्द्रे चन्द्रे च। (श) पुं.खद् - किरच् - ख एर। खे आकाशे दीर्यते इष्टापूर्तकारिभि र्यतः दृ-अपादाने किरच् 3. चन्द्रे मेदि। इष्टापूर्तकारिभि र्हि चन्द्रमण्डलात् आरब्धास्मयदेहविदारेणाकाशे पततात् तस्य तथात्वम्। (वा)

***ग्रहपतिः*** : पुं. 6 त. 1. सूर्ये 2. अर्कवृक्षे अमरः। 3. चन्द्रे च। तस्यविस्तीर्यते राज्यं ज्योत्स्नाः ग्रहपतेरिव भा.शा.168 अ (वा)

***ग्रहराजः*** : ग्रहराजो रवौ चन्द्रे। (मे) ग्रहराजके रवौ चन्द्रेऽपि। (वि) ग्रहराजः शशिन्यर्के। (हे)(ना.सं) ग्रहराजोऽर्कचन्द्रयोः। (नाना.र)

***गौः*** : गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः। अर्जुनी नेत्रदिग्बाण भू वाग्वारिषु गौर्मता। (वि) (ना.सं) गौः क्रतौ वृषभे चन्द्रे वाग्भूदिग्धेनुषु स्त्रियाम्। द्वयोस्तु रश्मिदृग्बाणस्वर्गवज्राम्बुलोमसु।। (नाना.र) पुं.गम् डो वृषभे, स्वर्गे, किरणे, वज्रे, जले, पशौ, चन्द्रे, वायौ, सूर्ये वृषभनामौषधौ च। सौरमेय्याम्, दृष्टौ, बाणे, दिशि, मातरि, वाचि, भूमौ च स्त्री। (श) पुं. स्त्री गच्छत्यनेन गम्-करणे डो। चन्द्रे विश्वः। कर्मभिः तल्लोकगमनात् तस्य तथात्वम्। (वा)

***गौरः*** : गौरः पीतेऽरुणेश्वेते विशुद्धेचाभिधेयवत्। ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे॥ गौरीत्वसंजातरजः कन्या शङ्करभार्ययोः रोचनी रजनी पिङ्गा प्रियङ्गु वसुधासु च। आपगायाः विशेषेऽपि यादसांपतियोषिति।। (मे) गौरः श्वेतेऽरुणे पीते विशुद्धे चन्द्रमस्यपि विशदे गौरन्तु श्वेतसर्षपे पद्मकेसरे। गौर्युमाऽनग्निकोर्वीषु प्रियङ्गौ वरुणस्त्रियां रजन्यां रोचनीऽनघोः।। (हे) गौरः शशिनि गौरी तु विशुद्धे चाभिधेयवत्। गौरी तु विशदे पद्मकेसरे सितसर्षपे। गौरः शशिनि नग्नकन्योमयोः स्मृता।। रोचनी रजनी पिङ्गाप्रियङ्गुवसुधासु च। नदीभेदेऽपि गौरी स्यात् वरुणस्य च योषिति।। (वि) (ना.सं) पुं. गुर्-रनि . श्वेतसर्षपे, चन्द्रे, धववृक्षे, अरुणवर्णे, श्वेतवर्णे च, तत्तद्वर्णवति, विशुद्धे च त्रि.। स्त्रियां गौरी। केसरे, पङ्कजे, कुङ्कुमे, स्वर्णे च, नं। ..(श) पुं. गुङ् - गतौ रनि. वृद्धिः। गुर् -घञ् प्रज्ञाद्यण् वा 2.चन्द्रे ..(वा)

**ङः** : वर्णोद्धार तन्त्रे उक्ताः यथा -

ङश्शङ्खो भैरवश्चण्डो बिन्दूत्तंसः शिशुप्रियः। एको रुद्रो दक्षनखः खुप खर्पूरो विषयस्पृहः। कान्तिः खेटाह्वयो धीरो द्विजात्मा ज्वालिनी वियत्। मन्त्रशक्तिश्च मदनो विघ्नेशश्चात्मनायकः। एकनेत्रो महानन्दो दुर्द्धरश्चन्द्रमा मतिः। शिवजलो नीलकण्ठः कामेशो चमसांशुकौ। (वा)

**चः** : चश्चण्डेशो पुमानुक्तः कच्छपे चन्द्रसुर्ययोः। (मे) (ना.सं) चतुरस्के स्वरे चोरे चकोरे चन्द्रमसि अपि। अव्य-चि-डा। अन्वाचये समुच्चये इतरेतरयोगे समाहारे पक्षान्तरे अवधारणे हेतौ तुल्यत्वे विनियोगे पादपूरणे च। चण्डेशे चन्द्रे कच्छपे चोरे च पुं। दुर्जने निर्बीजे च त्रि. (श) पुं. चीयते शुक्लपक्षकिरणैः अङ्गं परधनं वा चिनोति वा चि-ड। 1.चन्द्रे 2.कच्छपे 3.चोरे 4.चण्डेशे 5.चर्वणे मेदिः 6.निर्बीजे 7.दुर्जने च त्रि. शब्दरत्ना. (वा) वर्णोद्धारतन्त्रे उक्ताः यथा-चः पुष्कलो हली वाणी चात्मशक्तिः सुदर्शनः। चर्ममुण्डधरो भौमो महिषाचारलक्षणः। एकरूपो रुचिः कूर्मश्चासुण्डा दीर्घबाहुकः। वामबाहुमूलं माया चतुमूर्तिस्वरुपिणी। दयितश्च त्रिनेत्रश्च लक्ष्मीः तृतीयलोचनः। चन्दनं चन्द्रमा दैवश्चेतनो वृश्चिको बुधः। देवी कीटमुखस्त्वात्मा कुमारी पूर्वफाल्गुणी। अनङ्गमेखला वायुर्मोदिनी च सुलावणी। (वा)

**चदिरः** : 3 पुं. स्त्री चद् किरच्। 1.हस्तिनि 2.भुजगे च स्त्रियां जातित्वात् ङीष् । 3.चन्द्रे 4.कपूरे च पुं. संक्षिप्तसा.। (वा)

**चन्दः** : पुं. चदि आह्लादने ण्यन्तात् अच्। 1.चन्द्रे 2.कर्पूरे च शब्दार्थर. (वा)

**चन्दिरः** : चन्दिरोऽनेकपे चन्द्रे। (मे) (वि) चन्दिरश्चन्द्रहस्तिनोः। (हे) (ना.सं) पुं. स्त्री चदि किरच्। गजे स्त्रियां ङीष्। 2.चन्द्रे पुं. मेदि. (वा)

**चन्द्रः** : चन्द्रः कर्पूर काम्पिल्लसुधांशुस्वर्णवारिषु। (मे) चन्द्रः सुधांशु कर्पूर-काम्पिल्लस्वर्णवारिषु। (वि) चन्द्रोऽम्बुकाम्ययोः। स्वर्णे सुधांशौ कपूरे काम्पिल्ले मेचकेऽपि च। (हे) स्वर्णेऽपि भूरि चन्द्रौ द्वौ। (अ) चन्द्रः शशिनि कर्पूरे। (त्रि) शशाङ्कस्वर्णयोश्चन्द्रः। (अने) (ना.सं)

इन्दुकर्पूरयोश्चन्द्रः तपनीयेऽपि। (नाना.र) पुं. चदि आह्लादे णिच् रक्। व्योमस्थे जलमये मण्डलाकारे "चाँद" ख्याते पदार्थे। 2.आह्लादजनकद्रव्यमात्रे त्रिका 3.कर्पूरे 4.स्वर्णे 5.जले 6.काम्पिल्ले पुं.मेदि.। 7.द्वीपभेदे शब्दमा 8.विसर्गवर्णे तन्त्रसङ्केतः चदि दीप्तौ रक् 9.कमनीये त्रि 10.मयूरपिच्छे मेचके हेमच. 11. शोणमुक्ताफले व्याडिः। अन्त्यपदलोपे 12.चन्द्रगुप्ते नृपे च क्रूरग्रहस्सकेतु श्चन्द्रमसम्पूर्णमण्डलमिदानीम् मुद्रारा। चन्द्रं गता पद्मगुणान्न भुङ्क्ते ।।कु।। वधूजनश्चन्द्रमधश्चकार माघः। चन्द्र चन्दन रोलम्बरुताद्युद्दीपनं मतम् ।।सा.द.।। तस्य शृङ्गाररसोद्दीपकत्वमुक्तम्। "स्वर्णे चन्द्ररयःहोतासन्द्रः शृणुवच्चन्द्ररयः" ऋ.1-142-12-131 13.हीरके चन्द्राधिष्ठातृके 14.मृगशिरो नक्षत्रे 15.एकाङ्के च। (वा)

**चन्द्रांशुः** : संसारतापतिग्मांशुतापतापितचेतसां चन्द्रांशुरिवाह्लादकत्वात् चन्दांशुः। (विष्णु. शां) विवृतिः- स्वाश्रितानां चन्द्रांशुरिवाह्लादकत्वात् गुणयोगात् चन्द्रांशुरिति गौणतया व्याचष्टे-संसारेति। आह्लादकांशुयुक्तः चन्द्रांशुः। चन्द्रः अत्र मुख्यार्थःभवितुमर्हति।

**चन्द्रमाः** : हिमांशु श्चन्द्रमाश्चन्द्रः .. (अ) चन्द्रेण कर्पूरेण मीयते उपमीयते इति चन्द्रमाः। (स.पु माङ् - माने (गु.बा) पु. चन्द्रं आह्लादं मिमीते मि-असुनादेशः। चन्द्रे कर्पूरं माति तुलयति मा-असुन् वा। 1.चन्द्रे 2.कर्पूरे च अमरः। सितासितौ चन्द्रमसो न कश्चित्। ज्यो.त.। राहुर्वै हस्तीभूत्वा चन्द्रमसं गृह्णाति। इति श्रुतिः। कूरग्रहः सकेतुश्चन्द्रमसं गृह्णाति पूर्णमण्डलमिदानीम् मुद्रारा. तस्येदमित्यण् चान्द्रमस तत्सम्बन्धिनि। तिथि चान्द्रमसं दिनम्। स्त्रियां ङीप्। पद्माश्रिता चान्द्रमसीमभिख्याम्। कुमा. (वा)

**जर्णः** : जर्णश्चन्द्रे च वृक्षेच (मे) (वि) जर्णो जीर्णदृमेन्दुषु (हे) (ना.सं)पु.जृ-नम् 1.चन्द्रे वृक्षे च मेदि.। जीर्णे-त्रि. (वा)

*जैवातृकः* : जैवातृकः पुमान् सोमे दीर्घायुः कुशयोस्त्रिषु। (मे) जैवातृकः स्याद्ररजनीकरे। कृशायुष्मद्भेषजेषु। (हे) जैवातृकः कृशे चन्द्रे भैषज्यायुष्मतोरपि। (वि) जैवातृकः शशाङ्केऽपि। (अ) जैवातृकः कृशे चन्द्रे दीर्घायुषि च सत्त्रिषु। (त्रि) (ना.सं) अब्जो जैवातृकः सोमो। (अ) ओषधीः जीवयतीति जैवातृकः जीव-प्राणधारणे। (गु.बा) जैवातृकः कर्षकेन्द्वोः वैद्ये ना आयुष्मति त्रिषु। (नाना.र) पुं. जीव-अतृच् ततः कण् वृद्धिश्च। चन्द्रे, औषधे, कर्पूरे च। दीर्घायुष्के त्रि.। (श) पुं. जीवयत्यनेन लोकं जीवति वा अतृ-कन्-वृद्धिश्च। चन्द्रे कर्पूरे अमरः। पुत्रे औषधे हेम. दीर्घायुष्के त्रि. मेदि. (वा)

*ज्योतिर्गणेश्वरः* : ज्योतिर्गणानां ईश्वरः। (विष्णु.शा)

*ज्योतिषां पतिः* : तौ ज्योतिषां पती द्वावशीतभानुश्शीतभानुश्च। (नाना.र)

*टः* : जरा मुकुन्दः सोमेशः दक्षपादादि गोमुखः।
गजाङ्कुशश्च बालेन्दुः अमृताद्यष्टकः स्मृतः ॥ मा. (ना.सं)
टकारश्च कपाली च सोमेशः खेचरी ध्वनिः। मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी नरः। दक्षस्फिगर्धचन्द्रश्च जवा भूतिः पुनर्भवः। बृहस्पतिर्धनुर्हस्तः प्रमोदा विमला कटिः राजगिरिर्महाधनुः घ्राणात्मा सुमुखी मरुत्। इति वर्णाभिधानेऽस्य वाचकशब्दाः। (वा)

*ठः* : लाङ्गलीशो नन्दजश्च गालिनी च कमण्डलुः। दक्षजानुगतः स्थायी ठकारः स्थविरः स्मृतः। मा.। ठो मण्डले चन्द्रबिम्बे शून्ये च लोकगोचरे। (मे) (ना.सं) पुं.पुषो। मण्डले, चन्द्रबिम्बे, शून्ये, महेश्वरे, बृहद्ध्वनौ च। (श) वर्णाभिधानेऽस्य वाचकशब्दा :- ठः शून्यो मञ्जरी जीवः पाशिनी लाङ्गलं क्षमा। वनजो नन्दनो जिह्वा सुनन्दा घूर्णकः सदा। वर्तुलः कुण्डलो वह्निरमृतं चन्द्रमण्डलः। दक्षजानूरुभावश्च देवभक्षो बृहद्ध्वनिः एकपादो विभूतिश्च ललाटं सर्वमित्रकः। वृषघ्नो नलिनी विष्णुः महेशो ग्रामणीः शशी। ठ पुं. ट-पृषो.। 1.शिवे 2.महाध्वनौ 3.चन्द्रमण्डले एकाक्षरकोषः 4.मण्डले 5.शून्ये 6.लोकगौचरे च मेदि. शून्यञ्चात्र बिन्दुरूपवर्णभेदः। "स्मितमुखि तदधष्ठद्वयं योजयित्वा " कर्पूरस्तवः। (वा)

*तपसः* : पुं. तप् असुच् 1.सूर्ये 2.चन्द्रे 3.त्रिका खगे सि.कौ. (वा)

*तमोघ्नः* : तमोघ्नः सूर्यवह्नीन्दुबुद्धशङ्करविष्णुषु। (मे) (वि) तमोघ्नो वह्निसूर्येन्दु-बुद्धकेशवशम्भुषु। (हे) (ना.सं) तमोऽन्धकारं मोहमज्ञानं वा हन्ति हन् टक्। सूर्ये, वह्नौ, चन्द्रे, बुद्धे, विष्णौ, शिवे च। (श) पुं. तमोऽन्धकारं मोहमज्ञानं वा हन्ति हन्-टक्। 1.सूर्ये 2.वह्नौ 3.चन्द्रे 4.बुद्धे 5.विष्णौ 6.शिवे च मेदि. मनुष्यकर्तृके तु न टक् किन्तु अण्। तमोघात अमनुष्ये तमो नाशके त्रि. तत्र सूर्ये "आशुगामी तमोऽघ्नश्च हरिदश्वश्च कीर्त्यते"भा.व.3 अ.। "यथा तमांस्यभ्युदितस्तमोघ्नः पूर्वां प्रतिज्ञां समवाप्य वीरः" भा.द्रो. 146 अ.। (वा)

*तमोऽपहः* : तमोऽपहः सहस्रांशुमृगाङ्कजिनवह्निषु। (मे) (वि) तमोऽपहो जिने रवौ चन्द्रेऽग्नौ। (हे) अग्नीन्द्वर्काः तमोऽपहाः। (अ) (ना.सं) चन्द्राग्न्यर्काः तमोऽपहाः। (नाना.र) पुं. तमोन्धकारं अज्ञानं वा अव-हन-ड। सूर्ये वह्नौ चन्द्रे ज्ञाने च। तमोनुदादयोऽप्यत्र। (श) पुं. तमोऽपहन्ति अप-हन्-ड। 1.सूर्ये 2.चन्द्रे 3.वह्नौ 4.बोधे च मेदि. 5. तमोनाशकमात्रे प्रदीपादौ त्रि."ग्रसते हि तमोऽपहं मुहुः"माघः। (वा)

*तमोऽरिः* : पुं. 6 त. 1.सूर्ये 2.चन्द्रे 3.वह्नौ 4.ज्ञाने च। "तमोऽरि र्बिम्ब-प्रतिबिम्बधारी रुराव कान्ते पवनाशनाशः।" सुन्दरसमस्यापूरणम्। तमश्शतृप्रभृतयोऽप्यत्र। (वा)

*तमोनुद्* : तमोनुदग्नीन्द्वर्के ना। (मे) तमौनुदग्नीन्द्वर्केषु। (वि) तमोनुदग्नीन्दुमार्तण्डवह्निषु। (हे) चन्द्राग्न्यर्कास्तमोनुदः। (अ) (ना.सं.) वह्नीन्द्वर्कास्तमोनुदः। (नाना.र) तमोनुदग्निचन्द्रार्काः। (नाना.र) पुं. तमोनुदति खण्डयति नुद्-क्विप्। 1.सूर्ये 2.चन्द्रे 3.वह्नौ 4.दीपे च शब्दरत्न. 5.अन्धकारनाशके त्रि. एवमुक्त स्तदत्रिर्हि तमोनुदभवत् शशी भा.आ. 156 अ. त्रि. तमोऽज्ञानं अन्धकारं वा नुदति नुद् क। (वा)

*तमोभिद्* : तमोभित्तु शशिमार्तण्डवह्निषु। (अने) पुं. तमो भिनत्ति भिद्-क्विप्। 1.शार्वरतमो भेदके खद्योते शब्दर 2.तमो भेदकमात्रे त्रि क। (वा)

*तमोहन्* : तमोहन्ति हन्-क्विप् अज्ञाननाशके। ''ज्योतिरयं शुक्रवर्ण तमोहनम्'' ऋ.1-141-1. तमोहन्तरि। 1.सूर्ये 2.चन्द्रे च ''तमोहा यदि पापेन त्वयेणैव हि वीक्षितः'' ज्यो. त.। (वा)

*तमोहरः* : तमोहरति हृ - अच् 6 त.1 अन्धकारनाशके 2.अज्ञाननाशके च 3.सूर्ये 4.चन्द्रे च पुं. शब्दर. ''निर्गुणं वामभागे च मध्यभामेऽद्भुता निजा। मध्येनाधंस्वयंज्योतिस्तज्ज्योति र्मे तमोहरम्।'' शब्दार्थचि. धृतवाक्यम्। (वा)

*तमोमणिः* : पुं. तमसि मणिरिव। 1.खद्योते त्रिका. 2.गो भेदके मणौ गर्जनि (वा)

*ताराधिपः* : पुं. 6 त. 1.चन्द्रे 2.शिवे 3.बृहस्पतौ 4.वालिवानरे 5.सुग्रीवे च। ''ततार ताराधिप खण्डधारी'' कुमा. ''ताराधिपे बलिनि लग्नगतेऽधवास्मिन्'' ज्यो.त.। तारापति तारानाथादयोऽप्यत्र। कठोरताराधिपलाञ्छनछविः माघः। (वा)

*तारापतिः* : पुं. 6 त. 1.शिवे 2.चन्द्रे 3.बृहस्पतौ 4.वालिवानरे 5.सुग्रीवे च (श)

*तिथिपतिः* : पुं. तिथिविशेषाणां पतयः। तिथीनां अधिपतौ स च मु.चि. उक्तो यथा - ''तिथीशावह्निको गौरी गणेशोऽहिर्गुहो रविः। शिवो दुर्गान्तको विश्वे हरिः कामः शिवः शशी।।'' मु.चि. एतन्मूलं पीयूषधारायां धृतवशिष्ट वचनं यथा वह्नि र्विधातादिसुतागणेशः सर्पो विशाखेऽदितिजो महेशः। दुर्गायमो विश्वहरिश्च कामः शर्वो निशेशश्च पुराण दृष्टाः॥ इति स्वामिनः इति शेषः। तिथिपतयश्च बृ.सं. ९९ अ अन्यथोक्ता यथाकमलजविधातृ हरियमशशाङ्कषड्वक्त्र शक्रवसुभुजगाः। धर्मेशसवितृमन्मथकलयो विश्वे च तिथिपतयः। (वा)

*तिथिप्रणी* : पुं. तिथिं प्रणयति प्र-नी-क्विप्। चन्द्रे त्रिका.। (वा)

*तुङ्गीशः* : तुङ्गीशस्तु पुमान् गौरीवल्लभे हिमदीधितौ। (मे) तुङ्गीशश्शङ्करे चन्द्रे। (वि) तुङ्गीशः शशाङ्के शशिशेखरे। (हे) (ना.सं) पुं. कर्म.। 1.शिवे

2.कृष्णे 3.सूर्ये च शब्दर. तेषां प्रधानस्थानस्थित्या तथात्वम्। 6 त. 4.रात्रीशे चन्द्रे। (वा)

*तुङ्गीपतिः* : पुं. तुङ्ग्याः रात्र्याः पतिः निशापतौ चन्द्रे त्रिका. (वा)

*तुषारकरः* : पुं. तुषारो हिमः करः अस्य। हिमकरे चन्द्रे। तुषारकिरणादयोऽप्यत्र। कलया तुषारकिरणस्य पुरः। 1.कर्पूरे च। (वा)

*तुहिनकरः* : पुं. तुहिनं करो अस्य 1.चन्द्रे तुहिनांसु प्रभृतयोऽप्यत्र. 2.कपूरे च(वा)

*थः* : अस्य वाचकशब्दाः वर्णाभिधाने उक्ताः यथा–थस्त्रिवासी महाग्रन्थि-र्ग्रन्थिग्राहो भयानकः। शिली शिरसिजो दन्ती भद्रकाली शिलोच्चयः॥ कृष्णो बुद्धिर्विकर्णा च दक्षिणाशाधिपोऽमरः। वरदा भोगदा केशो वामजङ्घालसोऽनलः।नोज्जयिनी पृथुर्गृह्यः शरच्चन्द्रो विदारकः।(वा)

*दक्षजापतिः* : पुं. 6त. 1.शिवे 2.चन्द्रे च हेमच.। (वा)

*दोषाकरः* : पुं.दोषां रात्रिं करोति, तस्यां करः किरणः यस्य वा। चन्द्रे। दोषाणां आकरः। दोषाश्रये। पुं. (श) पुं. दोषा रात्रौ करोऽस्य। 1.चन्द्रे यामित्रवेधविहितानपहत्यदोषान् दोषाकरस्सुखमनेकविधं विधत्ते। ज्यो.त. 6 त. दोषाणामाकरे च। (वा)

*द्विजपतिः* : पुं. 6 त. 1.चन्द्रे त्रिका. द्विजानाञ्चौषधीनाञ्च सोमं राज्येऽभ्यसेचयत्। हरिवं. 226 अ.। 2.कर्पूरे च अमरः 3.द्विजश्रेष्ठे प्रशान्तोपद्रवं परिपूर्णद्विजमण्डलसनाथम् काद.। 4.पक्षिश्रेष्ठे 5.गरुडे च। (वा)

*द्विजराजः* : द्विजराजस्तु चन्द्रेऽनन्ते गरुत्मति। (मे) द्विजराजः शशधरे सुपर्णेऽनन्तभोगिनि। (वि) द्विजराजस्तु शशाङ्के गरुडेऽपि च। (हे) हंसेऽग्रौ गरुडे चन्द्रे द्विजराज इति ध्वनिः। (अने) द्विजराजः खगेऽश्वरे चन्द्रेऽपि। (नाना.र) द्विजराजः शशधरः। (अ) द्विजानां ब्राह्मनानां राजा द्विजराजः। (गु.बा) पुं.6 त. टच् समा. 1.चन्द्रे 2.अनन्ते 3.गरुडे च। (श) पुं. 6 त. टच् समा. 1.चन्द्रे अमरः। द्विजपति शब्दे दृश्यम्। ''इत्थं द्विजेन द्विजराजकान्तिः'' रघु.। 2.कर्पूरे 3.द्विजश्रेष्ठे 4.द्विजोत्तमे विप्रे 5.पक्षीन्द्रे गरुडे च। (वा)

*द्विजेन्द्रः* : पुं. द्विज इन्द्र इव उपमित समास.। 1.द्विजश्रेष्ठे 6 त. 2.चन्द्रे 3.कर्पूरे च। ''द्विजेन्द्रकान्तं श्रितवक्षसं श्रिया'' माघः। (वा)

*द्विजेशः* : पुं. 6त। 1.गरुडे 2.चन्द्रे हेमच 3.कर्पूरे च। द्विजेश्वरादयोऽप्यत्र। ''तमृक्षयोगानुगुप्तं शिशिरांशुं द्विजेश्वरम्'' हरिवं. 45 अ.। (वा)

*ध्वान्तशात्रवः* : पुं. ध्वान्तस्य अन्धकारस्य शात्रवः। 1.सूर्ये शब्दार्ण 2.अग्नौ 3.चन्द्रे च शब्दार्थचि.। तद्रूपवर्णे 4.श्वेतवर्णे पुं. शब्दच. ध्वान्ताराति प्रभृतयोऽप्यत्र। सूर्यादौ ''ध्वान्तारिं सर्वपापघ्नम्'' सूर्यनतिः। (वा)

*नक्षत्रनाथः* : पुं. 6 त.। 1.चन्द्रे ''नक्षत्रनाथः समुपाजगाम'' हरिवं. 316 अ. ''नक्षत्रनाथांशुरिवारविन्दे'' रघुः। तस्य नक्षत्राधिष्ठातृदक्षसुताश्विन्यादि नाथत्वम् तथात्वम्। (वा)

*नक्षत्रनेमिः* : नक्षत्रनेमिरुक्ता रेवत्यां ना ध्रुवे चन्द्रे। (मे) नक्षत्रनेमिः शीतांशौ रेवत्यां च ध्रुवे क्वचित्। (वि) नक्षत्रनेमिः शीतांशुरेवत्यौत्तानपादिषु। (हे) पुं. नक्षत्राणां नेमिरिव। ध्रुवाख्ये तारके, चन्द्रे, विष्णौ च। (श) पुं. नक्षत्रस्य तच्चक्रस्य नेमिरिव। 1.ध्रुवतारके 2.चन्द्रे 3.रेवत्यां च हेमच.। 4.विष्णौ नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः विष्णुस.। शिशुमारस्य ज्योतिश्चक्रस्य नेमिवत् प्रवर्तको हृदयस्थितो विष्णुरिति कथितो नक्षत्रनेमिः शिशुमारवर्णने। ''विष्णुर्हृदयमिति'' श्रुतेः। भा. (वा)

*नक्षत्रपतिः* : पुं. नक्षत्रं पाति पा.-ड ति। चन्द्रे शब्दार्थचि.। (वा)

*नक्षत्रराजः* : पुं. 6त. टच् समा. चन्द्रे ''नक्षत्रराजे वर्षान्ते''। (वा)

*नक्षत्रेशः* : नक्षत्रेशः क्षपाकरः। (अ) नक्षत्राणामीशः। (गु.बा) पुं. 6त. नक्षत्रपत्यादयोऽप्यत्र। (श) पुं. 6त.। चन्द्रे अमरः। ''नक्षत्रेशकृतेक्षणौ गिरिगुरौ गाढां रुचिं धारयन्'' ''उमावल्लभः'' सा.द.। (वा)

*नक्षत्रेश्वरः* : पुं. 6त. । 1.चन्द्रे नक्षत्राधिष्ठातृदेवताभिः काश्यां स्थापिते 2.शिवलिङ्गभेदे च। (वा)

***नभश्चमसः*** : स्यान्नभश्चमसश्चन्द्रे चित्रापूपेन्द्रजालयोः। (मे) (वि) नभश्चमस श्चन्द्रमाययोः । चित्रापूपे। (हे) (ना.सं) पुं. नभसश्चमस इव। 1.चन्द्रे 2.चित्रापूपे 3.इन्द्रजाले च मेदि.। (वा)

***नभोमण्डलदीपः*** : पुं. नभोमण्डले दीप इव रात्रौ प्रकाशकत्वात्। चन्द्रे "नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः। कलाभि वर्धमानाय नभश्चन्द्राय चारवे" तित. (वा)

***निशाकरः*** : पुं. निशां करोति क्त-टः। चन्द्रे, कुक्कुटे च। (श) पुं. निशां करोति "दिवाविभानिशेति" पा-कृ-ट.उप.स.। 1.चन्द्रे 2.कपूरे च अमरः। "द्विजावली बालनिशाकरांशुभिः" माघः। "बहुलेऽपि गते निशाकरः" कुमा 3.कुक्कुटे शब्दरत्ना.। (वा)

***निशानाथः*** : पुं. 6त. 1.चन्द्रे "अष्टमस्थे निशानाथे कण्टकैः पापवर्जितैः। प्रवासी सुखमायाति सौम्यैर्लाभसमन्वितः" षट् पञ्चाशिका। 2. कर्पूरे च अमरः (वा)

***निशापतिः*** : ओषधीशो निशापतिः। (अ) निशायाः पतिः निशापतिः इ.पुं.। (गु.बा) पुं. 6त.। चन्द्रे कर्पूरे च। (श) पुं. 6त. 1.चन्द्रे 2.कर्पूरे च अमरः। "स्वसन्धिभुक्तिसंशुद्धा मध्यभुक्ति र्निशापतेः"। सू.सि। (वा)

***निशामणिः*** : पुं. निशायां मणिरिव प्रकाशकत्वात्। 1.चन्द्रे तिका 2.कर्पूरे च (वा)

***निशारत्नम्*** : निशायां रत्नमिव प्रकाशकत्वात्। 1.चन्द्रे 2.कर्पूरे च (वा)

***निशीथिनीशः*** : पुं. 6त. चन्द्रे हला. कर्पूरे च। (वा)

***नीध्रम्*** : नीध्रं (नीव्रं) तु वलीकवननेमिषु। चन्द्रे च रेवतीभे च। (अने)

***नीव्रम्*** : नीव्रं नेमौ वलीकेन्दोः रेवतीभेऽपि कानने। (मे)

***पक्षचरः*** : अथ पक्षचरश्चन्द्रे पृथक्चारि गजेऽपि च। (मे) भवेत्पक्षचरो विधौ यूथभ्रष्टपृथग्वारिवारणेऽपि च प्रकीर्तितः। (वि) पक्षचरो यूथभ्रष्ट पृथग्चर गजे विधौ। (हे) अथ निशापतौ पृथग्चर गजे यूथभ्रष्टे पक्षचरः स्मृतः। (त्रि) (ना.सं.) पुं. पक्षे शुक्लादौ चरति चर-ट। 1.चन्द्रे 2.पृथग्चरे 3.गजे च मेदि.। (वा)

*पक्षजः* : पुं . पक्षे जायते जन्-ड 1.चन्द्रे त्रिका. 2.पक्षेजातमात्रे त्रि. पक्षजन्माप्यत्र। शब्दरत्ना.। (वा)

*पक्षधरः* : पुं. पक्षं धारयति धृ-अच्। चन्द्रे जटाध. पक्षं पञ्चदश तिथ्यात्मकं कालं तत् तिथिमानादिकं कालं धारयति। अच् तत् स्मारके विद्वद्भेदे स हि चिन्तामण्यालोकं प्रसन्नराघवं इति नाटके चकार। तस्य जयदेवेति नामान्तरम्। पक्षस्य तिथिमानादिधारणशक्तिमत्वात् तस्य तथा प्रसिद्धिः। (वा)

*परिज्वा* : परिज्वा तु पुमानिन्दौ याज्ञिके परिचारके। (मे) (ना.सं) पुं. परि-जु सौत्रधातुः कनिन्। 1.चन्द्रे 2.अग्नौ च उज्ज्वलदत्तः। अत्र परिजवन् इति परिजन्मन् इति शब्दकल्पनं प्रामादिकम्। श्वनुक्षन्नित्यादिके उणादि सूत्रे परिज्वन् इत्यस्यैव पाठात्। (वा)

*पुष्पदन्तः* : पुष्पदन्तस्तु चन्द्रार्कौ एकोक्त्या। (हे) (ना.सं.)

*पुष्पवन्तः* : पुष्पवन्तौ च चन्द्रार्कावेकोक्त्या (अने)

*फः* : तन्त्रे वर्णाभिधाने अस्य वाचकशब्दाः उक्ताः - यथा - फः सुखी दुर्गिणी धूम्रा वामपार्श्वो जनार्दनः। जया पादशिखा रौद्री फेत्कारः शाखिनीप्रियः। इला विहङ्गमः कण्ठः कुब्जिनीप्रियपावकौ प्रलयाग्नि र्नीलपादोऽक्षरः शशी पशुपतिः शशी। फूत्कारे यामिनी झञ्झापवने मोहवर्धनः। निष्पत्रवागहङ्कारः प्रयाणो ग्रामणी फलम्। (वा)

*बुधतातः* : पुं. 6त. चन्द्रे। शब्दच.। (वा)

*भः* : अस्य वाचकशब्दाः यथा-भः क्लिन्ना भ्रमरो भीमो विश्वमूर्ति र्निशाभवम्। द्विरण्डो भूषणो मूलं यज्ञसूत्रप्रवाचकः। नक्षत्रं भ्रमणा दीप्तिर्व्योमभूमिः पयो नभः। नाभि र्भद्रं महाबाहु र्विश्वमूर्ति र्वितण्डवः। घ्राणात्मातापिनी वज्रा विश्वरूपी च चन्द्रिका। भीमसेनः सुधासेनः सुखीमायापुरं हरः। वर्णाभिधानम्। "भश्चन्द्रो यश उज्ज्वलम्" वृ.र। (वा)

*भगः* : श्रियां यशसि सौभाग्ये योनौ कान्तौ महिम्नि च। सूर्ये संज्ञा विशेषे च शशाङ्के च भग श्रुतिः॥ (अने)

*भरण्युः* पुं. कण्डवा भ (भृ) रण्य उण्। 1.शरण्ये 2.मित्रे च शब्दमाला

*भुरण्युः* 3.अग्नौ 4.चन्द्रे 5.स्वामिनि च संक्षिप्तसा भुरण्युरिति पाठान्तरम्। (वा)

*भुः* : स्थानभूम्योस्तु भूः स्त्रियां भुः शम्भौ धातरीन्दौ वा। (नाना.र) पुं.न. भुज् - घ। 1.सूर्ये 2.अणिमाद्यष्टविधैश्वर्ये 3.वीर्ये 4.यशसि 5.श्रियां 6.ज्ञाने 7.वैराग्ये 8.योनौ 9.इच्छायां 10.माहात्म्ये 11.यत्ने मेदि 12.धर्मे 13.मोक्षे 14.सौभाग्ये 15.कान्तौ 16.चन्द्रे च ज्योतिषोक्ते योनिनक्षत्रदैवते 17.पूर्वोक्तफल्गुनीनक्षत्रे 18.गुह्यमुष्करयोः मध्यस्थाने च पुं. आद्युदात्तश्च। 19.धने 20.पदे च न. निघण्टुः (वा)

*भुवन्युः* : भुवन्युस्तु पुमान् भानौ ज्वलने शशलाञ्छने।(मे) भुवन्युर्ज्वलने भानौ भुवन्युः शशलाञ्छने। (वि) (ना.सं.) पुं.भू-वन्युच्। 1.स्वामिनि 2.सूर्ये च उज्ज्वल। वह्नौ चन्द्रे च मेदि. (वा)

*भूरिः* : स्वर्णेऽपि भूरि चन्द्रौ द्वौ।(अ) (ना.सं) प्राज्याच्युतविधातृषु चन्द्रे च भूरिरिति शेषः। (गु.बा)

*भेनुः* : भेनौ भानुनिशानाथौ। (नाना.र)

*मः* : मः शिवश्चन्द्रमा वेधा मा लक्ष्मीश्च प्रकीर्तिता। मा च मातरि माने च बन्धने मः प्रकीर्तितः।ए. (ना.सं) पुं.मा-कः। चन्द्रे, शिवे, ब्रह्मणि, यमे, समये, मधुसूदने च। शिवे हलन्तमकारोऽपि ''मकारस्तु महेश्वरः'' इति प्रणवान्तर्गतमकारार्थोक्तेः। (श) पुं.मा-क। 1.शिवे 2.चन्द्रे 3.चतुर्मुखे ब्रह्मणि एकाक्ष 4.यमे 5.समये 6.विषे 7.विष्णौ च मेदि.। छन्दश्शास्त्रोक्ते त्रिगुरुयुक्ते गणे ''मो भूमिस्त्रिगुरुः श्रियं दिशति यः''। वृ.र.टी. तस्य देवता भूमिः। काव्यादौ प्रथमप्रयोगे श्रीलाभः फलम्। कामधेनुतन्त्रे वर्णाभिधानेऽस्य पर्यायाः उक्ताः - मः काली क्लेशितः कालो महाकालो महान्तकः। वैकुंठो वसुधा चन्द्रो रविः पुरुषराजकः। कालभद्रो जया मेधा विश्वदा दीप्तसंज्ञकः। जठरं च भ्रमौ मानं लक्ष्मीर्मातोग्रबन्धनी। विषं शिवो महावीरः शशिप्रभा जनेश्वरः। प्रमत्तः प्रियसूः रुद्रः सर्वाङ्गो वह्निमण्डलम्। मातङ्गमालिनी बिन्दुः श्रवणा भरथो वियत्। (वा)

*माः* : चन्द्रे मासि च माः पुमान्। (नाना.र) माश्चन्द्रमासयोः पुमान्। (मे) माः स्मृतः चन्द्रमासयोः। (वि) मास्तु मासे निशाकरे। (हे) माश्चन्द्रमासयोः पुंसि। (ना.सं) पुं.माति परिच्छिनत्ति स्वगत्या कालम्। मा-असुन्। चन्द्रे, त्रिंशद्दिनात्मके कालरूपे मासे च। (श)(वा)

*मासः* : पुं. मा एव अण्। चन्द्रे, त्रिंशद्दिनात्मके काले च। स च सौर सावन चान्द्र नाक्षत्रभेदात् चतुर्विधः। मासश्चन्द्रस्यायं अण्। चान्द्रे मासे तु मुख्यः। मस्यते परिमीयते अनेन, मस्-परिमाणे, करणे घञ पञ्चगुञ्जात्मके शब्दार्थे। स्वार्थे कन् तत्रैवार्थे। (श)(वा)

*मिहिरः* : मिहिरो वायुचन्द्रार्काः। (नाना.र) पुं. मिह-किरच्। सूर्ये, अर्कवृक्षे, वृद्धे, मेघे, वायौ, चन्द्रे, विक्रमादित्यसभास्थे नवरत्नमध्यस्थे पण्डित-भेदे च। (श)(वा)

*मृगाङ्कः* : मृगाङ्को मारुते चन्द्रे। (वि)(ना.सं) ग्लौ र्मृगाङ्कः कलानिधिः। (अ) मृगः अङ्को यस्य सः मृगाङ्कः। (गु.बा)

*मृगराजः* : मृगानां पशूनां राजा टच् समा.। 1.सिंहे शब्दर. मृगेण गजेन राजते अच्। 2.चन्द्रे 3.सिंहराशौ च उपचारात् 4.मृगशिरानक्षत्रे च। (श) (वा)

*मृगलक्षणः* : पुं. मृगो लक्षणं यस्य। चन्द्रे। मृगाङ्कादयोऽप्यत्र। (श)

*मृगलाञ्छनः* : पुं. मृगो लाञ्छनं यस्य। चन्द्रे। शब्दर . मृगाङ्कादयोऽप्यत्र। (वा)

*यः* : कामधेनुतन्त्रे वर्णाभिधानेऽस्य पर्यायाः उक्ताः। यो वाणी वसुधा वायुः विकृतिः पुरुषोत्तमः। युगान्तः श्वसनः शीघ्रो धूमार्चिः प्राणिसेवकः॥ शङ्खा भ्रमो जटी लोला वायुनेमी यशस्करी। सङ्कर्षणः क्षपा बालो हृदयं कपिला प्रभा॥ आग्नेयो व्यापकस्त्यागो मोहो याता प्रभा सुखम्। चण्डः सर्वेश्वरी धूम्रा चामुण्डा सुमुखेश्वरी॥ त्वगात्मा मलयो मातङ्ग हंसिनी भृङ्गिनायकः। ङे नमः शोषको मीनो धनिष्टानङ्गमेदिनी। शिष्टः सोमः पङ्क्तिनामा पापहा प्राणसंज्ञकः॥ (वा)

*यामिनीपतिः* : पुं. 6त. 1.चन्द्रे शब्दर 2.कर्पूरे च। रजनीशादयोऽप्यत्र। (वा)

*राजा* : राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ यक्षे शक्रेऽपि पुंसि स्यात्। (मे) राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः। (वि) राजा तु पार्थिवे निशाकरे प्रभौ शक्रे यक्षक्षत्रिययोरपि। (हे) राजा मृगाङ्के क्षत्रिये नृपे। (अ) यक्षे चन्द्रे च राजा स्यात्। (त्रि) राजा चन्द्रो नृपो राजा। (अने) (ना.सं) राजा नृपे तालभेदे पतौ क्षत्रियचन्द्रयोः। (नाना.र) पुं. राजा-कनिन्। नृपे, चन्द्रे, शुचौ, क्षत्रिये, यक्षे, इन्द्रिये च। पूर्वपदस्थः ड उत्तरपदस्थश्च समभिव्याहृतपदार्थश्रेष्ठवाचकः। यथा राजमाषः मुनिराजः इत्यादि (श) राज-कनिन् रञ्जयति रञ्ज् कनिन् नि.वा। 1.नृपे "राजा प्रकृतिरञ्जनात्" रघुः। 2.चन्द्रे 3.प्रभौ 4.क्षत्रिये 5.यज्ञे 6.इन्द्रे च मेदि.। उत्तरपदस्थः पूर्वपदस्थः समभिव्याहृतपदार्थश्रेष्ठवाचकः। यथा राजमाषः मुनिराजः इत्यादि। 7.पृथुनृपे च "पित्रा न रञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः। अनुरागात् ततस्तस्य नाम राजेत्यभाषत॥" विष्णु. (वा)

*रजनीकरः* : पुं. रजनीं करोति कृ-ट। रजन्यां करः किरणोऽस्य वा। 1.चन्द्रे शब्दर. 2.कर्पूरे च। (वा) पुं. रजनीं सततं करोति कृ-टः। रजन्यां करः किरणोऽस्य वा। चन्द्रे। (श)

*राजराजः* : राजराजः कुबेरेऽपि सार्वभौमे सुधाकरे। (मे) (वि) राजराजो नृपेशेन्द्वोः कुबेरे। (हे) (ना.सं) पुं. राज्ञामपि राजा प्रभूतधनत्वात्, टच् समा.। कुबेरे, सार्वभौमनृपे चन्द्रे च। (श) पुं. राज्ञामपि राजा प्रभूतधनत्वात् टच् समा.। 1.कुबेरे अमरः। 2.सार्वभौमनृपे 3.चन्द्रे च मेदि.। (वा)

*रात्रिकरः* : पुं. रात्रिं करोति कृ-अच्। रात्रौ करः किरणः अस्य वा। 1.चन्द्रे च मेदि.। (वा)

*रात्रिमणिः* : पुं. रात्रौ मणिरिव दीप्तिमत्वात्। 1.चन्द्रे (हारा) 2.कर्पूरे च (वा) (श)

*रोहिणीपतिः* : पुं. 6त. 1.चन्द्रे 2.वसुदेवे च रोहिणीनाथादयोऽप्यत्र। (श) (वा)

*लः* : लः खण्डिते त्रिषु अदाने स्त्रीनेन्दौ लवणे तु लम्। (नाना.र) लश्चन्द्रः पूतना पृथ्वी माधवी शक्रवाचकः। बलानुजः पिनाकीशो व्यापको मांससंज्ञकः। परायणा ककुद्वक्त्रः खड्गो नादोऽमृतं दिवि। लवणं

वारुणी पीतशिखा वाणी क्रियाजिता। ज्वालिनी वेगिनी नादः प्रद्युम्नः शोषणे हरिः विशातन्द्रायणी चेतो मेरुर्गिरि कलो रसः। वर्णोच्चारतन्त्रम् (वा)

*लक्ष्मीसहजः* : पुं लक्ष्म्या सह क्षीराब्धौ जायते। जन-डः चन्द्रे, उच्चैः श्रवसि च। (श) 1.चन्द्रे शब्दच 2.उच्चैःश्रवसि 3.कर्पूरे च। (वा)

*विधुः* : विधुर्ना कर्पूरेन्दुविष्णुषु। (मे) विधुः शशाङ्के कर्पूरे हृषीकेशेऽपिराक्षसे (वि) विधुश्चन्द्रेऽच्युते। (हे)(ना.सं) विधुस्सुधांशुश्शुभ्राशुः। (अ) विधुस्सुधाकरे काले विष्णौ वातेऽग्निरक्षसोः। (नाना.र) देवाः एनं विशेषेण धयन्ति पिबन्ति इति विधुः। उ.पु.धेट् पाने। (गु.बा) पुं. व्यध्-कुः। चन्द्रे, कर्पूरे, विष्णौ, ब्रह्मणि, शङ्करे, वायौ, राक्षसे, युधि च (श) 1.चन्द्रे 2.कर्पूरे 3.विष्णौ मेदि. 4.ब्रह्मणि शब्दर. 5.शङ्करे 6.राक्षसे विश्वः 7.वायौ 8.युधि च संक्षिप्तमा.। (वा)

*विभावसुः* : विभावसुस्तु भास्करे,। हुताशने हारभेदे चन्द्रे। (हे)(ना.सं) विभायुक्ता वसवोऽस्य। 1.सूर्ये 2.अर्कवृक्षे 3.वह्नौ 4.चित्रकवृक्षे अमरः 5.चन्द्रे 6.हारभेदे च हेमच। (वा) विभा एव वसवोऽस्य। सूर्ये, अर्कवृक्षे, वह्नौ, चित्रकवृक्षे, चन्द्रे, हारभेदे च। (श)

*विरोचनः* : विरोचनः प्रह्लादस्यतनयेऽर्केऽग्निचन्द्रयोः। (मे) विरोचनोऽर्केदहने चन्द्रे प्रह्लादनन्दने। (वि) विरोचनोऽग्निसूर्ययोः। प्रह्लादनन्दने चन्द्रे (हे) चन्द्राग्न्यर्काः विरोचनाः। (अ)(ना.सं) वह्नीन्द्वर्काः विरोचनाः (नाना.र) विरोचते इति विरोचनः। रुच-दीप्तौ। (गु.बा) पुं.वि-रुच् युच्। सूर्ये, अर्कवृक्षे, बलिपितरि, प्रह्लादतनयेऽसुरभेदे, चन्द्रे, वह्नौ, च मेदि.। विरोचयति वि-रुच्-णिच्-ल्युः। रोहितकवृक्षे, श्येनावृक्षे, घृतकरुञ्जे च पुं. राजनि. रुचिकारके त्रि.। (श)(वा)

*विलासिन्* : विलासी भोगिनि व्याले विष्वक्सेनेऽग्निचन्द्रयोः। (मे)(ना.सं) स्त्री. विलासोऽस्त्यस्याः भूम्ना इनि ङीप् 1.नार्यां राजनि. 2.वेश्यायां

धरणिः। 3.भोगवति त्रि.। 4.सर्पे 5.कृष्णे 6.वह्नौ च पुं. मेदि. 7.चन्द्रे 8.स्मरे 9.महादेवे पुं. शब्दर.। (श) (वा)

*विश्वप्सन्* : विश्वप्सा वह्निचन्द्रयोः। समीरणे कृतान्ते च। (हे) विश्वप्सानल चन्द्रयोः। (वि) (ना.सं) विश्वं प्साति भक्षति प्सा-कनिन् 1.सर्वभक्षके वह्नौ 2.चन्द्रे हेमच 3.देवे 4.विश्वकर्मणि 5.भूमौ संक्षिप्तसा 6.सूर्ये शब्दर। (वा) (श)

*वृष्णिः* : वृष्णिः पाण्डवचन्द्रयोः। त्रिषु ना यादवे मेषे। (मे)

*शशधरः* : द्विजराजः शशधरः। (अ) शशस्य धरः। (गु.बा) पुं. शशं मृगभेदं धरति धृ-अच्। 1.चन्द्रे 2.कर्पूरे च अमरः। भृ-क्विप् शशभृदादयोऽप्यत्र (वा) (श)

*शशबिन्दुः* : शश इव बिन्दुः लाञ्छनमस्येति शशबिन्दुः चन्द्रः। (वि.शा)

*शशलाञ्छनः* : पुं. शशः मृगमेदो लाञ्छनं यस्य। 1.चन्द्रे 2.कर्पूरे च। शशाङ्कादयोऽप्यत्र। (श) (वा)

*शशी* : शशोऽस्त्यस्य इनि। 1.चन्द्रे 2.कर्पूरे च शब्दमा। (श) (वा)

*शीतकरः* : पुं.शीतः शीतलः करः यस्य। 1.चन्द्रे 2.कर्पूरे च। शीताकिरणादयो ऽप्यत्र लि। शीतं करोति कृ-अच् 3.शीतकारके। (श) (वा)

*शीतगुः* : पुं. शीताः गावः किरणाः यस्य। 1.चन्द्रे 2.कर्पूरे च। (श) (वा)

*शीतप्रभः* : पुं. शीतस्य हिमस्येव प्रभा यस्य। कर्पूरे, राजनि। (वा)

*शीतभानुः* : पुं. शीताः शीतलाः भानवोऽस्य 1.चन्द्रे 2.कर्पूरे च शब्दर (वा) (श)

*शीतमयूखः* : शीतमयूखश्चन्द्रे घनसारे चापि पुंलिङ्गः। (मे) शीतमयूखोऽपि शशाङ्कघनसारयोः। (वि) शीतमयूखः कर्पूरे चन्द्रे। (हे) (ना.सं) पुं. शीताः मयूखाः यस्य। 1.चन्द्रे 2.कर्पूरे च मेदि. शीतमरीच्यादयोऽप्यत्र। शब्दर। (श) (वा)

*शीतरश्मिः* : पुं. शीताः रश्मयोऽस्य। 1.चन्द्रे 2.कर्पूरे च ज्यो.त.। (श) (वा)

*शीतलः* : पुं. शीतं लाति गृह्णाति शीतमस्त्यस्य लच् वा 1.शीतस्पर्शे 2.तद्वति त्रि 3.मलयोद्भवे चन्दने न 4.शैलेये 5.पुष्पकासीसे च मेदि 6.पद्मके 7.मौक्तिके राजनि 8.वीरणमूले न शब्दच 9.असनपर्ण्यां अमरः 10.बहुवारवृक्षे 11.चम्पके 12.राले 13.चन्द्रे 14.कर्पूरे राजनि (श)(वा)

*शीतांशुः* : पुं. शीताः अंशवो यस्य। 1.चन्द्रे 2.कर्पूरे च राजनि (श)(वा)

*शुचिः* : शुचिर्ना शुक्रशृङ्गारचन्द्राषाढहराग्निषु। उपदाशुद्धसचिवे ग्रीष्मे श्वेतगणे रवौ अयं तु श्वेतगुणिनि शुद्धेऽनुपहते त्रिषु। (नाना.र)

*शुभ्रांशुः* : विधुः सुधांशुश्शुभ्रांशुः। (अ) शुभ्राः अंशवः यस्य सः उ.पु.शुभ्रांशुः। (गु.बा)

*शुभ्रकरः* : पुं. शुभ्रः करः अस्य। 1.चन्द्रे 2.कर्पूरे च। शुभ्रकिरण, शुभ्रांशुप्रभृतयोऽप्यत्र। (वा)(श)

*श्रीसहोदरः* : पुं. 6त. 1.चन्द्रे 2.उच्चेःश्रवसि अश्वे च 3.कर्पूरे च। (वा)(श)

*श्वेतधामन्* : श्वेतधामा कलानाथे घनसाराब्धिफेनयोः। (मे) श्वेतधामापुमानिन्दौ घनसाराब्धिफेनयोः। (मे) श्वेतधामा घनसारे कलानाथाब्धिफेनयोः (हे) (ना.सं) पुं. श्वेतं धाम यस्य। 1.चन्द्रे 2.कपूरे 3.समुद्रफेने च मेदि. श्वेतकरादयोऽप्यत्र। 4.कर्पूरे च। (वा)(श)

*श्वेतरोचिस्* : पुं. श्वेतं रोचिरस्य। 1.चन्द्रे 2.कर्पूरे च हला.। (वा)(श)

*श्वेतवाजिन्* : पुं. श्वेतो वाजी यस्य 1.चन्द्रे हेमच अर्जुने जटा श्वेताश्वादयोप्यत्र। 2.कर्पूरे च। (वा)(श)

*श्वेतवाह्* : पुं. श्वेतेन श्वेताश्वेन उह्यते वह्-ण्वि। 1.इन्द्रे 2.अर्जुने 3.चन्द्रे च 4.कर्पूरे। भत्वे ऊठ् श्वेतौहः हलि डसुड् श्वेतवा श्वेतोभिरित्यादि (वा)(श)

*श्वेतवाहनः* : श्वेतवाहन इत्येष सुधाधाम्नि धनञ्जये। (मे) श्वेतवाहन इत्याख्या सुधाधाम्नि धनञ्जये। (वि) श्वेतवाहनः शशी। पार्थे। (हे) पार्थेन्द्वोः श्वेतवाहनः। (त्रि) (ना.सं.) पुं.श्वेतं वाहनं यस्य। 1.चन्द्रे 2.इन्द्रे 3.अर्जुने च मेदि 4.कर्पूरे च। (वा)(श)

***षोडशिन्*** : पुं. षोडश कलाः विद्यन्तेऽस्य इनि। 1.सोमे 2.यज्ञाङ्गे तन्नाम सोमरसस्थापन पात्रे च ''अतिरात्रे सोमरसं गृह्णातीति'' श्रुतिः ''षोडशिनः पात्र खदिरम् चतुरश्रम्''। कात्या श्रो 1/3 कर्कपद्धतिः। (वा) (श)

***ष्ठ्यूमः*** : ष्ठ्यूमसूमौ जले चन्द्रे। (नाना.र)

***सः*** : भृगुः श्वेतस्तथाहंसो हृद्रो दक्षिणपादगः। समयः सामगः शुक्रं संगतिः सार्णकः शशी। (मा) (ना.सं) ''सो हंसः सुयशा विष्णुः भृग्वीशश्चन्द्रसंज्ञकः। जगद्बीजं शक्तिनामा सोहं वेशवती भृगुः। प्रकृतिरीश्वरः शुद्धः प्रभाश्वेताकुलोज्वलः। दक्षपादोऽमृतं ब्राह्मी परमात्मा परोऽक्षयः। सुरूपा च गुणेशो गौः कलकण्ठो वृकोदरी। प्राणाद्या च परा देवी लक्ष्मीः सोमो हिरण्यपूः। दुर्गोत्तारण सम्मोहा जीवो मूर्तिर्मनोहरः''। वर्णाभिधा. (वा)

***समुद्रनवनीतम्*** : समद्रनवनीतं क्लीबं स्यात् पीयूषचन्द्रयोः। (मे) समुद्रनवनीताख्या पीयूषामृतरोचिषोः। (वि) (ना.सं) समुद्रस्य नवनीतमिव। समुद्रमन्थनोद्धूतसारांशे। 1.अमृते 2.चन्द्रे च मेदि। (वा) (श)

***सारसः*** : सारसः पक्षिभेदेन्द्वोः क्लीबन्तु सरसीरुहे। (मे) सारसं सरसीरुहि। सारसः पुष्कराख्येन्द्वोः। (हे) अथ सारसं। पद्मे ना पक्षिणीन्दौ च। (त्रि) (ना.सं) न. सरो नियतवसतिरस्य 1.पद्मे अमरः। कट्याभरणेच। सह रसेन स्वार्थे अण्। 3.चन्द्रे 4.स्वनामख्याते पक्षिणि पुं स्त्री स्त्रियां ङीष्। सरस इदं अण् 5.सरोवरसम्बन्धिनि त्रि. नद्याः शैलवराच्चाम्भाय संश्रुत्य तिष्ठति। तत् सरोजं जलं छन्नम् सारसं परिकीर्तितम्। भाव प्र. उक्ते 6.जलभेदे ''सारसं सलिलं बल्यं तृष्णाघ्नं मधुरं लघु। रोचनं तुवरं रूक्षं बद्धसूत्रमलहितम्'' तत्रोक्ताः तद्गुणाः। (वा) न. सरोऽभिजनो नियतवसतिरस्य अण्। पद्मे, कट्याभारणे च। सह रसेन स्वार्थे अण्। चन्द्रे। स्वनामख्याते पक्षिणि च पुं. तद्योषिति स्त्री.। सरसः इदं अण् सरोवरसम्बन्धिनि। त्रि. (श)

***सितकरः*** : पुं. सितः करः किरणः यस्य। 1.चन्द्रे 2.कर्पूरे च राजनि सितमयूखादयोऽप्यत्र। (वा) (श)

*सिताभः* : पुं. सिता आभा यस्य। 1.कर्पूरे रायमुकुटः 2.चन्द्रे च 3.तक्रे स्त्री. राजनि। (वा) (श)

*सुधांशुः* : विधुः सुधांशुश्शुभ्रांशुः। (अ) सुधारूपा अंशवो यस्य सः सुधांशुः उ.पुं. (गु.बा) पुं. सुधैवाह्लादकाः अंशवो अस्य 1.चन्द्रे 2.कर्पूरे च अमरः सुधाकरादयोप्यत्र। (वा) (श)

*सुधाङ्गः* : पुं. सुधेवाप्यायनमङ्गमस्य। 1.चन्द्रे त्रिका 2.कपूरे च। (वा) (श)

*सुधाधारः* : पुं. 6त. 1.चन्द्रे शब्दर 2.कर्पूरे च 3.अमृताधारपात्रे च। (वा) (श)

*सुधानिधिः* : पुं. सुधा निधीयतेऽत्र नि-धा-आधारे कि 6त. 1.चन्द्रे शब्दर 2.कर्पूरे च। (वा) (श)

*सुधाभृ (सू)तिः* : पुं. सुधा भ्रियते पुष्यते सूयते वाऽनेन भृ-सू-वा क्तिन्। 1.यज्ञे 2.चन्द्रे मेदि 3.कर्पूरे च। (वा) (श)

*सुधावर्षिन्* : पुं. सुधां वर्षति वृष्-णिनि 1.चन्द्रे 2.कर्पूरे च 3.ब्रह्मणि च शब्दर 4.बुद्धभेदे त्रिका। (वा) (श)

*सुधावासः* : पुं. 6त. 1.चन्द्रे 2.कर्पूरे च। सुधायाः इव वासो गन्धो यस्याः। त्रपुष्यां राजनि। (वा) (श)

*सुधासूतिः* : सुधासूतिः पुमान् मखे। चन्द्रे (मे) सुधासूतिर्मखे विधौ। (वि) (ना.सं)

*सूमः* : ष्यूमसूमौ जले चन्द्रे। (नाना.र)

*सोमः* : सोमः कुबेरे कर्पूरे लताभेदे निशाकरे। (नाना.र) सोमस्तु हिमदीधितौ। वानरे च कुबेरे च पितृदेवे समीरणे। वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ। (मे) सोमः कुबेरे पितृदेवतायां वसुप्रभेदे च सुधाकरे च। दिव्यौषधी सोमलता समीरकर्पूरनीरेषु च वानरे च। (वि) सोमस्त्वौषधीतद्रसेन्दुषु दिव्यौषध्यां घनसारे समीरे पितृदैवते। वसुप्रभेदे सलिले वानरे किन्नरेश्वरे। (हे) (ना.सं) सोमरूपेणौषधीः पोषयन् सोमः। (वि.शा) अब्जो जैवातृकः सोमो (अ) सूतेऽमृतमिति सोमः षू प्राणिप्रसवे, सूयते इति वा सोमः (गु.बा) पुं. सु-मन् 1.चन्द्रे 2.कर्पूरे अमरः 3.कुबेरे 4.यमे 5.वायौ 6.वसुभेदे 7.जले 8.सोमलतौषधौ 9.वानरे मेदि 10.सौमरसे हेमच 11.अमृते दीधितौ उणा. सह उ(ऊ)मया 13.शिवे 14.वानरेशे सुग्रीवे च (वा) (श)

*हः* : अव्य हा-ड पादपूरणे अमरः 2.सम्बोधने 3.नियोगे 4.क्षेपे 5.निग्रहे 6.निन्दायां मेदि 7.सिद्धौ च 8.शिवे पुं. 9.जले 10.शून्ये 11.आकाशे 12.रक्ते 13.स्वर्गे 14.धारणे पुं. मेदि. 15.पापहरणे 16.चन्द्रे शब्दर 17.सकोपवारणे 18.शुष्के च एकाक्षरकोशः। हः शिवो गगनं हंसो नागलोकेऽम्बिकापतिः। नकुलीशो जगत्प्राणः प्राणेशः कपिलामलः। परमात्मात्मजो जीवः वराकः शान्तिदोऽकुलः। मृगोऽभयोऽरुणो स्थाणुः कूटकूपनिवारकाः। लक्ष्मीर्हरिहरश्शम्भुः प्राणसन्धिर्ललाटजः। स्वकोपवारणः शूली चैतन्यं पादपूरणम्। महालक्ष्मीः परंनादो मेघनादो विमर्दनः। बिन्दु र्दुर्गा प्रिया देवी मेघश्यामः महेश्वरः। दक्षपादः सदा शम्भुः श्यामो यः सोममण्डलम्॥ वर्णाभिधानम्। इमे तन्त्रोक्ताः हकारवाचकाश्शब्दाः। (वा)

*हरिः* : हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु। कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान्। वाच्यवत् पिङ्गहरितोः (मे) हरि र्दिवाकरसमीरयोः। यमवासवसिंहासु शशाङ्ककपिवाजिषु। पिङ्गवर्णे हरिद्वर्णे भेकोपेन्द्रशुकाहिषु। लोकान्तरे च। (हे) हरि र्वातार्कचन्द्रेन्द्र-यमोपेन्द्रमरीचिषु। सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च। हरि र्वाच्यवदाख्यातो हरित्कपिलवर्णयोः। (वि) यमानिलेन्द्रचन्द्रार्क-विष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु। (अ) हरिरिन्द्रो हरिर्भानु र्हरिर्विष्णु र्हरिर्मरुत्। हरिःसिंहो हरि र्भेको हरिर्वाजी हरिःकपिः। हरिरंशु र्हरिर्भीरु र्हरिःसोमो हरिर्यमः। हरिः शुक्रो हरिः सर्पः स्वर्णवर्णो हरिः स्मृतः। (अने) अर्कमर्कटमण्डूक-विष्णुवासव वायवः। तुरङ्गसिंहसितांशुयमाश्च हरयो दश। (हे)(ना.सं.) हरिर्यमार्काश्वाग्नीन्दुविष्ण्वंद्रांशु शुकेषु ना। वायुभेकाहिसिंहेषु कपौ च कपिले त्रिषु। कलांशमात्रे शिल्पादौ कलना कालभेदयोः। इन्दोश्च षोडशे भागे स्यान्मूलधनवर्धने। (नाना.र) पुं.हृ इन् 1.विष्णौ 2.सिंहे 3.सूर्ये 4.वानरे 5.भेके 6.शुकखगे अमरः 7.चन्द्रे 8.सूर्ये 9.वायौ 10.अश्वे 11.यमे

12.हरे 13.ब्रह्मणि 14.किरणे 15.जम्बूद्वीपस्य वर्षभेदे 16.इन्द्रे च मेदि 17.मयूरे 18.कोकिले 19.हंसे 20.वह्नौ शब्दर भर्तृहरिनामके वाक्यपदीयग्रन्थकारके 21.पण्डिते त्रिका 22.पिङ्गलवर्णे 23.हरिद्वर्णे हेमच. तद्वति त्रि "हरिं विदित्वा हरिभिश्च वाजिभिः" रघुः 25.पीते अनेकार्थको (वा)

*हरिणाङ्कः* : पुं. हरिणः शशनामको मृगः अङ्कश्चिह्नम् अङ्के क्रोडे वा अस्य। 1.चन्द्रे शब्दर 2.कर्पूरे च। (वा)

*हंसः* : जीवे राज्ञि विधौ धर्मे तपस्विनि तुरङ्गमे। सिते पक्षिविशेषे च हंस शब्दो हरेऽपि च। (अने)(ना.सं)

*हिमकरः* : पुं. हिमः करः किरणो यस्य। हिमं करोति निवेषणात् कृ-अच् वा 1.चन्द्रे 2.कर्पूरे च राजनि हिमकिरणादयोऽप्यत्र.

*हिमांशुः* : हिमांशुश्चन्द्रमाश्चन्द्रः (अ) हिमाः शीताः अंशवो यस्य सः हिमांशुः। उ.पुं. (गु.बा) हिमा अंशवो अस्य 1.चन्द्रे अमरः 2.कर्पूरे च राजनि. (वा)

## *निष्कर्षः*

कोशेषु चन्द्रार्थकपदानि बहूनि समुपलभ्यन्ते। तत्र अ ऊ गौः ग्लौः ङः चः टः ठः थः फः भः भुः मः माः यः लः सः ह इत्येकाक्षराणि पदानि चन्द्रार्थकानि दृश्यन्ते। एवं च द्व्यक्षरेषु अब्जः इन्दुः कान्तः कूटः क्लेदः खगः गौरः चन्दः चन्द्रः जर्णः नीव्रं भगः भूरिः भेनुः मासः राजा विधुः वृष्णिः शशी शुचिः छ्यूमः सूमः सोमः हरिः हंसः इतीमानि पदानि चन्द्रार्थकत्वेनोच्यन्ते। त्र्यक्षरेषु अमतिः उडुपः उडूपः उड्वीशः कलापः कलाभृत् कलावत् खदिरः चदिरः चन्दिरः चन्द्रांशुः चन्द्रमाः तपसः तमोऽघ्नः तमोऽरिः तमोनुद् तमोहन् तुङ्गीशः द्विजेन्द्रः द्विजेशः पक्षजः परिज्वा भरण्युः भुरण्युः भुवन्युः मिहिरः मृगाङ्कः विलासी विस्वप्सा शीतगुः शीतलः शीतांशुः शुभ्रांशुः श्वेतवाट् षोडशी सारसः सिताभः सुधांशुः स्रुधाङ्गः हिमांशुः इत्येवंक्रमेण चन्द्रार्थकानि पदानि बहूनि सन्ति। इतोऽप्यधिकाक्षराणि समस्तपदानि च चन्द्रपर्यायत्वेन कानिचन विराजन्ते॥

अब्ज इत्यादिनी कानिचन यौगिकानि पदानि, चन्द्र इत्यादीनि योगरूढानि पदानि, अपि च कानिचन खग इत्यादि योगिकरूढानि, किञ्च निशामणिः समुद्रनवनीत-मित्यादीन्युपमागर्भितानि पदानि, इत्येवंक्रमेण नानाविधानि चन्द्रार्थकानि पदानि संस्कृतवाङ्मये विलसन्ति ॥

अपि च साकल्येनैभिः पदैः अब्ज इत्यादिभिः चन्द्रमा अप्सुजात इति, अमतिः ग्लौः माः इत्यादिभिः कालप्रवर्तक इति, पक्षचर इत्यादिपदैः कलावृद्धिक्षयैः चन्द्रः कृष्णशुक्लपक्षकारक इति, इन्दुरित्यादिपदैरयं चन्द्रिकया भुवं क्लिन्नं करोतीति, शीतांशुरित्यादिभिरस्य किरणाः शीतला इति, चन्द्र इत्यादिभिर्मनसश्शरीरस्य चायं चन्द्रः आह्लादकर इति, ग्रहराज इत्यादिपदैः ग्रहाणां नक्षत्राणां ओषधीनां मृगानां द्विजानां च अधिपोऽयमिति, कलाभृत् इत्यादिपदैरयं कलाधर इति, षोडशीत्यादिभिरसौ षोडशकलावानिति, मृगाङ्कः शशाङ्क इत्यादिभिः पदैः चन्द्रगोलगतं लक्ष्म मृगशशादिरूपेण सम्भाव्यते इति, रोहिणीवल्लभ इत्यादिभिः पदैः चन्द्रमसः दक्षजासु रोहिण्यां प्रेमातिशयो विद्यत इति, लक्ष्मीसहजः इत्यादिपदैः चन्द्रो लक्ष्म्यास्सहोदरः इत्येवंक्रमेणानेके विषयाः चन्द्रार्थकपदैरस्माभिः गृह्यन्ते ग्राह्यन्ते च ॥

एवञ्च चन्द्रार्थकपदैः कोशेषु चन्द्रमसः देवतामयं तथा गोलमयमिति रूपद्वयं समुपलभ्यते ॥

# द्वितीया कला

# वेदेषु चन्द्रः

## प्रस्तावना

संस्कृतसाहित्यस्य मूलभूताः वेदाः। तेषामाधारेणैव भारतीयः धर्मः प्रचलति। एते विश्वसाहित्येऽनन्यं स्थानमुपगताः। ते च वेदाः चत्वार इति सिद्धम्। तेषु ऋग्वेदः देवतास्तोत्ररूपः। यतो हि यजुर्वेदः यज्ञकर्मविनियोगरूपः। सामवेदो गानयोग्यः। अथर्ववेदस्तु कामनानामस्माकं पूरणाय देवताप्रार्थनपरत्वेन वैज्ञानिक-समालोचनात्मकत्वेन विद्यते। एवञ्च ऋग्वेदेन भावनानां पवित्रत्वं, यजुर्वेदेन कर्मणां पवित्रत्वं, सामवेदेन हि उपासनानां पवित्रत्वं, एवञ्चाथर्ववेदेन समता अथवा स्थितप्रज्ञता[1] भवतीति विदुषां वचनम्[2]। वेदत्रयी पारलौकिकसुखसन्धायिका किन्त्वथर्ववेदः ऐहिकसुखसौभाग्यसन्धायक इति सायनोऽपि अभिप्रैति[3]।

## वेदेषु चन्द्रार्थकशब्दविचारः

ऋग्वेदे चन्द्रः प्रधानतया सोमपदेन कथितः। यजुरथर्ववेदयो श्चन्द्र-चन्द्रमाशब्दौ प्रायशः उपलभ्येते। अथर्ववेदस्तु सोमं चन्द्रमश्शब्दख्यातमिति वदन्, देवताविषये चन्द्रमश्शब्दस्य प्रसिद्धिं सूचयति[4]। यास्कोऽपि ''इन्दुः'' ''गौः'' ''चन्द्रः'' ''चन्द्रमाः'' ''सोमः'' इति पञ्चपदानि चन्द्रार्थे निरुक्तवान्[5]। तत्र क्रमशः तेषां प्रयोगाः पश्यामः -

---

1. थवति गतिकर्मा न थर्व इत्यथर्वः। अतोऽथर्वस्यार्थः निश्चलता समता स्थितप्रज्ञता॥
ऋ.वे.सात्वलेकर् भूमिका.पु.3
2. ऋ.वे.सात्वलेकर् भूमिका.पु.3,
3. अ.वे.(ति.ति.दे.प्रति) प्र.भा. भूमिका.पु.8,
4. सोमो मा देवो मुञ्चन्तु यमाहुश्चन्द्रमा इति ॥अ.वे.॥ 11-6-7,
5. द्रष्टव्या अत्रैव षष्ठी कला॥

**इन्दुः** :- अयं द्योतयदद्युतो व्यक्तून् दोषावस्तोः शरद इन्दुरिन्द्र।
इमं केतुमदधुर्नू चिदह्नां शुचिजन्मन उषस श्चकार ।।ऋ.वे ।।[1]
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ।। य.वे ।।[2]
तस्मै त इन्दो हविषो विधेम वयं स्याम पतयो रयीणाम् ।।य.वे ।।[3]
आयं विशन्तीन्दवो वयो न वृक्षमन्धसः।
विरप्शिन् वि मृधो जहि रक्षस्विनीः ।।अ.वे ।।[4]

**गौः** :- विरलतया दृश्यते इन्दुशब्दः चन्द्रार्थे वेदेषु। ततोऽप्यधिकविरलतया केवलं लाक्षणिकार्थे गोशब्दः चन्द्रार्थे प्रयुक्त इति निरुक्तवचनैरवगम्यते। यथा - ''अत्राह गोरमन्वत नाम त्वष्टु रपीच्यं। इत्था चन्द्रमसो गृहे ।।ऋ.वे. ।।[5] इति। अत्र हि मन्त्रे गो शब्दस्य चन्द्रार्थकत्वं निरुक्तवानेवं हि यास्कः। ''सोऽपि गौरुच्यते'' स एव सुषुम्णाख्यः सूर्यरश्मिरपि गौरुच्यते। तत्सम्बन्धात् स चन्द्रोऽपीत्यपि शब्दार्थः।[6] इति। ''अत्राहास्मिन्नेव गोर्गंतुश्चन्द्रमसो गृहे मण्डले त्वष्टु र्दीप्तस्यादित्यस्य संबंध्यपीच्यं रात्रावन्तर्हितं स्वकीयं यन्नाम तेजस्तदादित्यस्य रश्मय इतीत्थमनेन प्रकारेणामन्यत अजानन्।'' इति सायनः ।।[7]

**चन्द्रः** :- चन्द्रार्थे चन्द्रशब्दप्रयोगो वेदेषु विद्यते। यथा-
चन्द्रमग्निं चन्द्ररथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदं।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ।।ऋ.वे. ।।[8]
चन्द्राय स्वाहा ।।य.वे. ।।[9]
अग्निः प्राणान्त्सं दधाति चन्द्रः प्राणेन संहितः।
व्यहं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ।।अ.वे ।।[10]

**चन्द्रमाः** :- चन्द्रशब्दापेक्षया चन्द्रमश्शब्दो वेदेषु चन्द्रार्थे समधिकतया समायाति। यथा -

---

1. ऋ.वे.6.39.3, 2. य.वे.19.52, 3. य.वे.19.54,
4. अ.वे.6.2.2, 5. ऋ.वे.1.84.15, 6. निरु.पु.74,
7. ऋ.वे.1.84.15.मन्त्रव्याख्या
8. ऋ.वे.3.3.5, 9. य.वे.22.28, 10. अ.वे.3.31.6

चन्द्रमा मनसो जातः चक्षोः सूर्यो अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत॥ ऋ.वे., य.वे., अ.वे.[1]

***सोमः*** :- सर्वाधिकतया चन्दार्थे चन्द्रश्चन्द्रमशशब्दयोरपेक्षया सोमशब्दः प्रयुक्तो वेदवाङ्मये। सोमलतायाः सोमस्य चाभेदता स्वीक्रियते बहुषु मन्त्रेषु। सोमशब्दः लताविशेषविषये एवाधिकतया प्राधान्येन च बहुषु मन्त्रेषु पठितः, तथापि तत्र देवतारूपेण सोमश्चन्द्र एवेति विज्ञायते। अत एव ऋग्वेदे देवताविषये सोमस्य तृतीयं स्थानं कथयन्ति विचारकाः[2]। अयं सोमः ऋग्वेदानन्तरसाहित्ये एव चन्द्रत्वेन स्वीकृत इति "आल्फ्रेड् हिल्लेब्राण्ड्" महोदयानां मतम्[3]। तत्र चन्द्रार्थे सोमशब्दप्रयोगो यथा - सोमो धेनुं सोमो अर्वंतमाशुं सोमो वीरं कर्मण्यं ददाति।

सादन्यं विदध्यं सभेयं पितृश्रवणं यो ददाशदस्मै॥ ऋ.वे[4]

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः।

त्वमा ततंथोर्वाऽन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ॥ ऋ.वे[5]

वयं सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि॥ य.वे[6]

आचार्यो मृत्यु र्वरुणः सोम ओषधयः पयः।

जीमूता आसन्त्सत्वानस्तैरिद स्वराभृतम्॥ अ.वे[7]

ऋग्वेदे नवममण्डलं सर्वं पवमानसोमविषयकमेव[8]। सामवेदे कथितः प्रमुखसंस्कारवर्णनात्मकः मन्त्रसमूह[9] एव तत्रोपवर्णितः। अत्र प्रधानतया सोमरस एव सोमशब्देन कथितः। किन्त्वधिदेवतात्वेन तत्र चन्द्रं कथयामास वेदपुरुषः। प्रायशोऽत्रहि रसात्मकं सोमं विहाय देवताविषयकः सोम एवास्माभिः स्वीक्रियते।

---

1. ऋ.वे.10.90.13, य.वे.31.12, अ.वे.19.6.7
2. वै.माइ.पु.198,
3. This soma is identical with the moon in the latter hymns of the R.V. only. V.M. Vol. - 1 P.185.
4. ऋ.वे.1.91.20,
5. ऋ.वे.1.91.22,
6. य.वे.3.56,
7. अ.वे.11.5.14,
8. 114 सूक्तानि,
9. 1108 मन्त्राः

## ऋग्वेदे चन्द्रः

नृणां शतस्य कृते पर्याप्ताय तेजोबलप्रदायान्नाय, धनाय, स्वेषामन्नविघातकानां विनाशाय प्रार्थ्यते चन्द्रः[1]। एवं चन्द्रं यः स्तौति सः सत्यामृताभ्यां युक्तस्सन् लोके विराजते। अयं हि चन्द्रः पितृदेवताभ्यो देवैस्समं भोगमुपकल्पयति[2]। आकाशपृथ्वीपर्वतौषधीजलेषु यत्रकुत्रापि स्थाने भवत्यपि विद्वेषस्मासु विहाय आनन्देनागच्छन् हविषां स्वीकारायायं चन्द्रः प्रार्थ्यते[3]। सोमस्यानुकूलकः कदापि न म्रियते[4]। तरुणभक्ताः दीर्घजीवनं बलं भाग्यं चानेन प्राप्नुवन्ति[5]। अस्माभिर्यज्ञे स्तुतः समागतः अस्मान् संवर्धयति[6]। दातृजनानां कृते सोमः गां ददाति। अपि च कर्मणि कुशलं, सुवीरं, दक्षं, पितुः यशः प्रदातारं कुमारं समर्पयति[7]। अन्तरिक्षे अयं धावति[8]। सोमोऽस्मद्भ्योऽस्मद्पशुभ्यश्च रोगरहितं पुष्टिप्रदमन्नं प्रयच्छति[9]। श्रेष्ठमार्गेषु गन्ता सोमः देवतायोग्येषु समुन्नतेषु यज्ञस्थानेषु समागच्छति[10]। अस्माकमायु वर्धयन्, अस्मासु च अहङ्कारं विनाशयति[11]। सत्यव्रतानां आचारव्रतानां अन्नदातृणां च दूषकं नियमयितुमथवा

---

1. अस्मे सोम श्रियमधि नि धेहि शतस्य नृणां। महि श्रवस्तुविनृम्णं॥7॥
   मा नः सोम परिबाधो मारातयो जुहुरंत। आ न इंदो वाजे भज। ऋ.वे. I.43.8
2. त्वं सोम प्र चिकितो मनीषा त्वं रंजिष्ठमनु नेषिपंथां।
   तव प्रणीती पितरो न इंदो देवेषु रत्नमभजंत धीराः॥ ऋ.वे.1.91.1,
3. या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु।
   तेभिर्नो विश्वैः सुमना अहेळन्राजन्सोम प्रति हव्या गृभाय॥ ऋ.वे.1.91.4,
4. त्वं नः सोम विश्वतो रक्षा राजन्नघायतः। न रिष्येत्त्वावतः सखा।ऋ.वे.1.91.8,
5. त्वं सोम महे भगं त्वं यून ऋतायते। दक्षं दधासि जीवसे॥ ऋ.वे.1.91.7,
6. इमं यज्ञमिदं वचो जुजुषाण उपागहि। सोम त्वं नो वृधे भव॥ ऋ.वे.1.91.10,
7. सोमो धेनुं सोमो अर्वंतमाशुं सोमो वीरं कर्मण्यं ददाति।
   सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै॥ ऋ.वे.1.91.20,
8. चन्द्रमा अप्स्वंतरा सुपर्णो धावते दिवि॥ ऋ.वे.1.105.1,
9. सोमो अस्मभ्यं द्विपदे चतुष्पदे च पशवे। अनमीवा इषस्करत्।ऋ.वे.3.62.14,
10. सोमो जिगाति गातुविद्देवनामेति निष्कृतं। ऋतस्य योनि मासत।ऋ.वे.3.62.13,
11. अस्माकमायुर्वर्धयन्नभिमातीः सहमानः। सोमः सधस्थमासदत्।ऋ.वे.3.62.15,

निर्धनं कर्तुं सोमोऽस्माभिःप्रार्थ्यते[1]। दुष्टस्वप्नैः भीताः सोमसंरक्षणेन विजयिनः लाभमुपगताः पापविमुक्ताश्च भवन्ति। अतश्चन्द्रदेवतायाः स्तवनं अस्माकमुत्तमं संरक्षकं मनुते वेदर्षिः।

रसात्मकं सोमं पीत्वा जनः नितरां बुद्धियुक्तो भवति। अस्मदन्तःप्रविष्टः सोमः क्रोधं दूरीकरोति। इन्द्रसहायं स्वीकृत्यास्माकं धनप्रदानाय, रथिनमश्व इव तं वेगेन प्रवर्तयति[2]। रसात्मकं सोमं पीत्वा प्राणिनः तेजस्विनो देवताज्ञानिनः भवन्ति। तर्हि शत्रवो तेभ्योऽपकर्तुं न समर्थाः भवन्ति[3]।

धनाभिलाषी सोमं धनिनं जानाति। ये ये यदभिलषन्ति ते ते तत्तत् सोमे पश्यन्ति। सोमप्रभावादपगतधनाः पुनर्धनं लभमाणाः यज्ञेषु प्रवर्तन्ते। स्वेषां स्वल्पायुषं निर्जित्वा दीर्घायुषः भवन्ति [4]। सोमोऽस्मासु क्रोधरहितो भवितव्य इति भयं न प्रददात्विति, हृदयव्यथां मा करोत्विति जनाः एनं प्रार्थयन्ति। देवानां कृपाराहित्यमस्मासु यदा पश्यति सोमः तदा सद्यस्तेषां क्रोधदूरीकरणाय सोऽस्माभिः व्रियते। सुखदायकं सोममस्मद्भयोऽसज्जनदूरीकरणाय प्रार्थयति वेदपुरुषः[5]। एवं एव सोमोऽस्मान्

---

1. ये पाकशंसं विहरंत एवैर्ये वा भद्रं दूषयंति स्वधाभिः।
अहये वा तान्प्रदातु सोम आ वा दधातु निर्भृतरुपस्थे॥ ऋ.वे.7.104.9,
2. स्वादोरभक्षि वयसः सुमेधाः स्वाध्यो वरिवोवित्तरस्य।
विश्वे यं देवा उत मर्त्यासो मधु ब्रुवंतो अभि संचरंति॥
अंतश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य।
इंदविंद्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्याः॥ ऋ.वे.8.48.1,2,
3. ऋ.वे. 8-48-3.
4. अर्थिनो यंति चेदर्थं गच्छानिद्ददुषो रातिं। ववृज्युस्तुष्यन्तः कामं॥
विदधत्पूर्व्यं नष्टमुदीमृतायुमीरयत्। प्रमायुस्तारीदतीर्णं॥ ऋ.वे.8.79.5,6,
5. मा नः सोम सं वीविजो मा वि बीभिषथा राजन्। मा नो हृदि त्विषा वधीः॥
अव यत्स्वे सधस्थे देवानां दुर्मतीरीक्षे। राजन्नप द्विषः सेध मीढ्वो अप स्रिधः सेध॥ ऋ.वे.8.79.8.9.

मृत्योरधीनान्मा करोतु, वयमुपरि सरन्तं सूर्यं पश्यामः, अस्माकं वृद्धावस्थापि प्रतिदिनं सुखदायकमेव भवत्विति प्रार्थ्यते ऋषिणा सोमः[1]।

## यजुर्वेदे चन्द्रः

सोमाय हविरादिकं समर्पयन् यजुर्वेदपुरुषः एवं प्रतिज्ञां करोति। हे सोम ! वयं तव नियमे भवामः। शरीरे मनोरुपेण त्वां धारयन् जीवितं संघसेवायै उपयुज्मः[2]। अपि च लतात्मकं सोमं अग्नीषोमरुपाभ्यां मन्वानो याज्ञिकः विष्णुप्रीतये तां स्वीकरोति[3]। इन्द्रस्य वृद्ध्यै, मित्राणां धनवृद्ध्यै, यंज्ञसमाप्त्यै, सत्यवादिभिरैश्वर्यप्राप्त्यै, सन्मार्गनिर्देशाय चास्माभिः प्रार्थ्यते सोमः वेदमन्त्रैः[4]। यज्ञेषु घृतादिभिराहूयते सोमः। तत्र सः सर्वदेवतात्मकत्वेन, शत्रूणां राक्षसानां दण्डनदातृत्वेन भाव्यमानोऽस्ति। एनं सोमं तत्र वेदपुरुषः तेजस्विनं, स्वस्य शासकं, बलिनं सुन्दरं च मनुते[5]। यथायं पृथिव्यन्तरिक्षद्युलोकान् प्रकाशयति तथा दातृणां प्रकाशाय च प्रार्थ्यते वेदपुरूषेण[6]।

---

1. मो षु णः सोम मृत्यवे परा दाः पश्येम नु सूर्यमुच्चरन्तं।
   द्युभिर्हितो जीरमा सू नो अस्तु परातरं सु निर्ऋतिर्जिहीतां॥ ऋ.वे.10.59,4,
2. वयं सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहिं॥ य.वे.3.56,
3. अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वाग्नये त्वा रायस्पोषदे विष्णवे त्वा ।।य.वे.5.1,
4. अं शुरं शुष्टे दर्वे सोमाप्यायतामिन्द्रायैकधनविदे।
   आ तुभ्यमिन्द्रः प्यायतामात्वमिन्द्राय प्यायस्व।
   आप्याययास्मान्त्सखीन्त्सन्न्या मेधया स्वस्ति ते देव सोम सुत्यामशीय
   एष्टा रायः प्रेषे भगायऽऋतमृतवादिभ्योनमो द्यावापृथिवीभ्याम्॥ य.वे.5.7,
5. ज्योतिरसि विश्वरूपं विश्वेषां देवानाऽसमित्। त्वं सोम
   तनूकृदभ्यो द्वेषोभ्योऽन्यकृतेभ्यऽउरु यन्तासि वरूथं स्वाहा।
   जुषाणो अप्तुराज्यस्य वेतु स्वाहा॥ य.वे.5.35,
6. यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे।
   तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोचः॥ य.वे.6.33,

अन्नानि मधुरसयुक्तानि कर्तुं सोमाय हविरर्प्यते[1]। सूर्यमुभयपार्श्वतो द्रष्टुं यादृशी शक्तिरावश्यकी तादृशी शक्तिः प्रार्थ्यते चन्द्रात्[2]। सोमो यथैश्वर्यप्रकाशकः पराक्रमयुक्तः बलवान् जन्मादिरहितः तथा तेन तुल्यं प्रकाशः पराक्रमः बलं ऐश्वर्यं मृत्युञ्जयत्वं च प्रार्थ्यते तस्मात्[3]। सूर्याचन्द्रमसोस्समादध्यापकात् तथोपदेशकात् वयं पवित्रां बुद्धिं लभेम[4]। ओषधयः आत्मनो राजानं सोमं एवं प्रार्थयन्ति - राजन् यः पुरुषः विद्वान् अस्माकं मूलैः फलैः पत्रैः चिकित्सां करोति यस्मै, तस्मै रोगयुक्ताय वयं निश्चयेनाऽरोग्यप्रदात्र्यः भवामः इति[5]। विश्वव्यापकतेजसे यज्ञनिर्वहणाय अन्नप्राप्त्यै च सोमः प्रार्थ्यते। सोमानुग्रहेणपितरो देवतासु सर्वोत्तमं ऐश्वर्यं प्राप्नुवन्ति[6]। सोमार्थंहंसान् लवान् कुलङ्गान् आरण्यकमजं पुरुषमृगं अभिलषन्ति जनाः[7]। युद्धेष्वप्रतिद्वन्द्वपराक्रमः, सेनानां पालकः, द्युलोकवासी, जलप्रदाता, बालकानां रक्षकः, शत्रुविजेता, सुन्दरभवनोपेतः, मनोज्ञकीर्तिविलसितश्चायं सोमः, इन्द्राय हविर्दत्तवते यजमानाय धेनवः प्रयच्छति, शीघ्रगामिनमश्वं ददाति, कर्मणि दक्षं गृहकार्येषु कुशलं यज्ञेषु प्रवीणं पित्राज्ञापालकं कुमारं च प्रसादयति, सर्वाः ओषधयः जलं चोत्पादयति, धेनवः प्रकाशयति, दिव्यमनसाऽस्माभि र्धनं सम्पादयति, अन्तरिक्षं विस्तृतिं कृत्वा स्वतेजसा प्रकाशयति, अस्मान् च दानशीलिनः करोति[8]।

---

1. मधुमतीर्नऽइषस्कृधि यत्ते सोमादाभ्यं नाम जागृवि तस्मै।
   ते सोम सोमाय स्वाहा स्वाहोर्वन्तरिक्षमन्वेमि॥ य.वे.7.2,
2. उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम तऽइन्दोरिन्द्रियावतः। पत्नीवतो ग्रहांऽऽऋध्यासम्। अहं परस्तादहमवस्ताद्यन्तरिक्षं तदु मे पिताभूत्। अहं सूर्यमुभयतो ददर्शाहं दवानां परमं गुहायत्॥ य.वे.8.9,
3. सोमस्य त्विषिरसि तवेव मे त्विषि र्भूयात्।
   मृत्योः पाह्योजोऽसि सहोस्यमृतमसि॥ य.वे.10.15,
4. अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व।
   वायुः पूतः पवित्रेण प्रत्यङ्सोमो अतिसुतः। इन्द्रस्य युज्यः सखा॥ य.वे.10.31,
5. ओषधयः समवदन्त सोमेन सह राज्ञा।
   यस्मै कृणोति ब्राह्मणस्तंराजन् पारयामि॥ य.वे.12.96,
6. आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे॥ य.वे.12.112,
7. य.वे.31.12,
8. य.वे. 34.21-23.

## अथर्ववेदे चन्द्रः

जगदग्नीषोमात्मकम्[1]। अग्नीषोमौ यज्ञस्य पक्षाविव ऋषयोऽकल्पयन्[2]। अग्नीषोमाभ्यां यजमानो बलं धनं संघे उत्तमं स्थानं च प्रार्थयति। तदर्थं श्रेष्ठकर्माचरणाय सङ्कल्पयति च[3]। अग्नि सोम वरुण पूतदक्ष वात पर्जन्यानां शोभनानुग्रहेण नरः पालितो भवति[4]। इन्द्राग्निसोमभूतैस्सहात्मानं यशस्तमं मनुते वेदर्षिः[5]। राजानं राज्ये स्थिरीकरोति सोमः[6]। क्रतुविघ्नकरान् नाशयति। अस्मत्क्षेमायास्मान् सङ्ग्रामेषु शोभनमनस्कान् करोति[7]। अस्माकं शत्रून् इन्द्राग्नाविव बध्नाति सोमः[8]। उत्तरपृथ्व्यां सूर्याचन्द्रमसौ अस्मान् परिरक्षतः[9]। इन्द्रेण सह हिंसकान् राक्षसान् प्रति वज्रायुधं प्रेषयति चन्द्रः। अस्मद्रक्षणाय जागरूकश्च भवति। असज्जनान् प्रतिकूलदृष्ट्या पश्यति[10]। राजा

---

1. अहं जजान पृथिवी मुत धामह मृतूं रजनयं सप्त सिन्धून्।
   अहं सत्यमनृतं यद् वदामि यो अग्नी षोमवजुषे सखाया॥ अ.वे.6.61.3,
2. अग्नीषोमा वदधुर्या तुरीयासीद् यज्ञस्य पक्षावृषयः कल्पयन्तः॥ अ.वे.8.9.14,
3. अस्मै क्षत्रमग्नीषोमावस्मै धारयतं रयिम्।
   इमं राष्ट्रस्याभीवर्गे कृणुतं युज उत्तरम्॥ अ.वे.6.54.2,
4. त्रायध्वं नो अधविषभ्यो वधात् विश्वे देवा मरुतो विश्ववेदसः।
   अग्नीषोमा वरुणः पूतदक्षा वातापर्जन्ययोः सुमतौ स्याम॥ अ.वे.6.93.3,
5. यशाः इन्द्रो यशा अग्नि र्यशाः सोमो अजायत।
   यशा विश्वस्य भूतस्याहमस्मि यशस्तमः॥ अ.वे.6.58.3,
6. इन्द्र एतमदीधरत् ध्रुवं ध्रुवेण हविषा।
   तस्मै सोमो अधि ब्रवदयं च ब्रह्मणस्पतिः॥ अ.वे.6.87.3,
7. अभिभूर्यज्ञो अभिभूरग्निरभिभूः सोमो अभिभूरिन्द्रः।
   अभ्यहं विश्वाः पृतना यथासान्येवा विधेमाग्निहोत्रा इदं हविः॥ अ.वे.6.97.1,
8. ऐनान् द्यतामिन्द्राग्नी सोमो राजा च मेदिनौ।
   इन्द्रो मरुत्वानादानममित्रेभ्यः कृणोतु नः। अ.वे.6.104.3,
9. शिवास्ते सन्त्वोषधय उत् त्वाहार्ष मथरस्या उत्तरां पृथिवी मभि।
   तत्र त्वादित्यौ रक्षतां सूर्याचन्द्रमसावुभौ॥ अ.वे.8.2.15,
10. प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम्।
    रक्षभ्यो वधमस्यतमशनिं यातुमद्भ्यः॥ अ.वे.8.4.25,

सोमोऽस्माकं सुखदायी[1]। तस्मिन् चन्द्रमसि यशः परिनिष्ठितः[2]। सोमे भागं गताः आपः शुक्रं वर्चः अस्मासु प्रसरन्ति[3]। अस्मदपराधान् विस्मरन् स्वर्गे लोके स्थितस्सोमोऽस्मदिष्टापूर्तान् शोभनमनसा फलप्रदान् करोति[4]। प्रेमप्रापकं वीर्यप्रदं शिरः सोमेनास्मभ्यं दत्तं, ततो जातेन स्नेहभावेन हृदयं शुचि क्रियते[5]। विश्वपुरुषे चन्द्रो नवनवोन्मेषितो भवति[6]। प्राणं अमृतमयचन्द्रात्मकत्वेन भावयति जनः[7]। ब्रह्मचारी अग्नौ सूर्ये चन्द्रमसि वायौ जले समिधप्रक्षेपणं करोति[8]।

## चन्द्रस्योत्पत्तिः

चन्द्रः कुतो जातः ?[9] इति स्वस्मै प्रश्नमकरोत् वेदपुरुषः। एष विषयः को वा वेत्ति? इति पुनः स्वस्मै प्रश्नमकरोत् सः वेदर्षिः। क्रमशः तस्यैव कश्चन निश्चितः अभिप्रायः समागतः। तदनु सः कथयति "एनं विषयमहं वेद्मि" इति[10]। किन्तु तत्र तस्य समाधानं सः न कथयति, तथापि वेदेषु सर्वत्र तस्योत्तरं विद्यते यत् चन्द्रः परमात्मनः मनसः जात इति[11]।

## सूर्यचन्द्रयो र्गतिः

सूर्यचन्द्रौ स्वकीयतेजोभिः प्राक्पश्चिमदिशोश्चरतः शिशू इव क्रीडन्तावेतौ

---

1. सोमो राजाऽधिपा मृडिता च। भूतस्य नः पतयो मृडयन्तु॥ अ.वे.10.1.22,
2. यथा यश श्चन्द्रमस्यादित्ये च नृचक्षसि॥ अ.वे.10.3.18,
3. सोमस्य भागस्थ। अपां शक्र मापो देवीर्वर्चो अस्मासु धत्त। अ.वे.10.5.9,
4. नाके राजन् प्रति तिष्ठ तत्रैतत् प्रति तिष्ठतु।
   विद्धि पूर्तस्य नो राजन्त्स देव सुमना भव॥ अ.वे.6.123.5,
5. इदं यत् प्रेण्यः शिरो दत्तं सोमेन वृष्ण्यम्।
   ततः परि प्रजातेन हार्दिं ते शोचयामसि॥ अ.वे.6.89.1,
6. यस्य सूर्य श्चक्षु श्चन्द्रमाश्च पुनर्णवः॥ अ.वे.10.7.33,
7. प्राणो ह सूर्य श्चन्द्रमाः प्राणमाहुः प्रजापतिम्॥ अ.वे.11.4.12,
8. अग्नौ सूर्ये चन्द्रमसि मातरिश्वन् ब्रह्मचार्यप्सु समिधमा दधाति॥ अ.वे.11.5.13,
9. को वेद चन्द्रमसं यतोजाः॥ य.वे.23.59,
10. अथो वेद चन्द्रमसं यतोजाः॥ य.वे.23.66,
11. चन्द्रमा मनसो जातः॥ ऋ.वे.10.90.13, य.वे.31.112, अ.वे.19.6.7,

यज्ञेषु गच्छतः। अनयोः सूर्यः सर्वभुवनानि पश्यति। चन्द्रस्तु ऋतून् मासद्वयपरिमाणिनः कृत्वा वारं वारं समुद्यते। प्रतिदिनमुत्पद्यमानोऽयं चन्द्रः नवो नवो भवति। कृष्णपक्ष-रात्रिषु प्रातः कालपूर्वभागेषु समागच्छन् दिनानां सूचको भवति। आगच्छन् चन्द्रः यज्ञभागं कल्पयति देवानाम्। अपिचायमागच्छन् सर्वेषामानन्दं दीर्घायुषं च प्रददाति[1]।

## दिवि सोमो अधिश्रितः

देवानां मध्ये सत्यभूतेन ब्रह्मणा अधःस्थिता भूमिरुत्तमिता। तथा सूर्येण द्यौः उत्तमिता। एवं ऋतेन(यज्ञेन) अदितेः पुत्राः देवाः उपजीवन्ति। दिवि सोमो देवानामाप्यायकारी वल्लीरूपो देवतारूपश्च सन् अधिश्रितः। अस्यैकैककलाऽऽस्वादनात् अदितेः पुत्राः इन्द्रादयो देवाः बलिनो भवन्ति। अपि चायं सोमः नक्षत्राणां उपस्थाने द्युलोके आहितः[2]।

## वायुः सोमस्य रक्षिता :

यं ओषधिरूपं अभिषवग्रावभिः अध्वर्यादयो यजमानश्च सोमं मत्वा पीतवन्तः, सः सोमः अभिज्ञैः ज्ञातः सोमः न। यं हि चन्द्रमसं कथयन्ति न तस्य कश्चनादेवः मनुष्यादिः अश्नाति। आच्छद्विधानैः रक्षितः, तथा बार्हतैः स्वानर्भ्राजांधार्यादिभिः सप्तभिः सोमपालैः रक्षितः सोमः अभिषवग्राव्णां ध्वनिं शृण्वन्नेव तिष्ठति। तं हि पार्थिवो जनो नाश्नाति, यतो द्युस्थचन्द्ररुपोऽत्रत्यैः पानयोग्यो न भवति खलु। चन्द्रमा एव सोमः स हि देवानामन्नं भवति। यदा हि चन्द्रकलाः देवैः पीताः भवन्ति, अनन्तरमेव पूर्वपक्षे ताः कलाः पूरयन् वायुः सोमस्य रक्षको भवति। एवमेकैककलाक्षयसंवृद्धिभ्यां

---

1. पूर्वापरं चरतो माययैतौ शिशू क्रीळंतौ परि यातो अध्वरं।
   विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ॥18॥
   नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम्।
   भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरते दीर्घमायुः ॥19॥ ऋ.वे.10.85.
2. सत्येनोत्तमिता भूमिः सूर्येणोत्तमिता द्यौः
   ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः ॥1॥
   सोमेनादित्या बलिनः सोमेन पृथिवी मही।
   अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥2॥ ऋ.वे.10.85.

चन्द्रः मासस्य, तै र्मासैः संवत्सरस्य च कर्ता भवति[1]।

## सोमाय दत्ता सूर्या

रेभीः सूर्यदुहितुः सूर्यायाः दासी अभवत्। तस्याः विचित्रं दुकूलादिकं वस्त्रं गाथया परिष्कृतं आसीत्। तस्याः चितिर्देवता उपबर्हणपाः आसीत्। त्रैककुदेन अंजनसजातीयेन चक्षषी आंजते। द्यौश्च भूमिश्च कोश आसीत्। यदा सूर्या स्वकीयं नवं भर्तारं सोमं अयात्, तदा एवमुपकरणान्यासन्। सूर्यायाः रथस्य त्रिवृदादयः प्रतिधयः आसन्। कुरीरं नामकं छन्दः अनसः अभवत्। अश्विनौ तु वरावास्ताम्। तस्याः विवाहे पूर्वमेव प्रस्तावार्थं गन्ता अग्निरासीत्। सोमो वधूकामो वरोऽभवत्। अश्विनौ च तां कामयतः। तदा पर्याप्तयौवनां सूर्यां महिताय वराय सोमाय दातुं सविता सङ्कल्पयामास[2]। अस्याः सूर्यायाः पत्यु गृहगमनवेलायां मन एव रथ आसीत्। द्युलोकः उपरि पिधानमासीत्। शुक्रौ अनड्वाहौ रथस्य वोढारावास्ताम्। ऋक्सामाभ्यामभिहितौ गावौ सामानौ सन्तौ गच्छतः। वरस्यगुणग्राहिणी श्रोत्रे चक्रे आस्ताम्। एवं मनोरथस्य श्रोत्रे चक्रे आस्ताम्, द्युलोकश्च रथसंचारप्रदेशोऽभवत्। तस्य रथस्य व्यानो धारको, वायुश्चेष्टकोऽक्षोऽभूत्। कन्या प्रियार्थं सवित्रा दत्ताः गावः मखानक्षत्रेषु सोमगृहं

---

1. सोमं मन्यते पपिवान्यत्संपिंषंत्योषधिं। सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन॥
आच्छद्विधानैर्गुपितो बार्हतैः सोमरक्षितः ग्राव्णामिच्छृण्वन्तिष्ठसि न ते अश्नाति पार्थिवः॥
यत्त्वा देव प्रपिबंति तत आप्यायसे पुनः।
वायुः सोमस्स रक्षिता समानां मास आकृतिः॥ ऋ.वे. 10.85.3,4,5,
2. रैभ्यासीदनुदेयी नाराशंसी न्योचनी। सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतं॥
चित्तिरा उपबर्हणं चक्षुरा अभ्यंजनं। द्यौर्भूमिः कोश आसीद्यदयात्सूर्या पतिं॥
स्तोमा आसन्प्रतिधयः कुरीरं छंद ओपशः
सूर्याया अश्विना वराग्निरासीत्पुरोगवः॥
सोमो वधूयुरभवदश्विनास्तामुभावरा।
सूर्यां यत्पत्ये शंसंतीं मनसा सवितादात्॥ ऋ.वे. 10.85.6,7,8,9,

प्रापिताः। सूर्या तु फल्गुण्योः नक्षत्रयोः सूर्यस्य सकाशात् पत्युः सोमस्य गृहं नीयते रथेन[1]।

**सोमः - सोमलता**

वेदेषु तत्रापि प्रधानतया ऋग्वेदे सोमशब्दः लतार्थे एवं चन्द्रार्थे च प्रयुक्तः केषुचित् मन्त्रेषु सोमः केवलं लताविषयत्वेन, केषुचित् मन्त्रेषु पुनः केवलं देवताविषयकचन्द्रार्थकत्वेन, केषुचित् मन्त्रेषु तु उभयथाऽपि प्रयुक्तः। तत्र लतार्थे सोमो यथा-"वायवा याहि दर्शतेमे सोमा अरंकुताः। तेषां पाहि श्रुधी हव॥[2]" अर्थात्-

दर्शनीय वायो! अस्मिन् कर्मणि आगच्छ। त्वदर्थमिमे सोमाः अरंकृताः। तान् सोमान् पाहि। यद्वा तेषामेकदेशं स्वकीयं भागं पिब। तत्पानार्थमस्मदीयमाह्वानं शृणु। तथैवान्यः-

"स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इंद्राय पातवे सुतः॥ ऋ.वे.[3]"

हे सोम! इन्द्राय पातवे पातुमभिषुतस्त्वं स्वादुतमया मादयित्र्या धारया क्षर।

अपरोऽयं मन्त्रो सोमलतार्थे -

"नू नो रयिं महामिंदोऽस्मभ्यं सोम विश्वतः। आ पवस्व सहस्त्रिणं॥"

ऋ.वे. 9.40.3,

---

1. मनो अस्यां अन आसीद्द्यौरासीदुत च्छदिः।
   शुक्रावनड्वाहावास्तां यदयात्सूर्या गृहं॥ 10,
   ऋक्सामभ्यामभिहितौ गावौ ते सामनावितः।
   श्रोत्रं ते चक्रे आस्तां दिवि पंथाश्चराचर॥ 11,
   शुची ते चक्रे यात्या व्यानो अक्ष आहतः।
   अनो मनस्मयं सूर्यारोहत्प्रयती पतिं॥ 12,
   सूर्याया वहतुः प्रागात्सविता यमवासृजत्।
   अघासु हन्यंते गावोऽर्जुन्योः पर्युह्यते॥ 13, ऋ.वे.10.85.
2. ऋ.वे.1.2.1,
3. ऋ.वे.9.1.1

हे सोम! अभिषुतस्त्वं अस्मभ्यं क्षिप्रं महान्तं असंख्यातं धनं विश्वतः परिस्त्रव। एषो हि मन्त्रस्यास्यार्थः।

विशेषणपदेषु केषुचित् लताविषयकः सोमपदप्रयोगो यथा –

| | | |
|---|---|---|
| सुतसोमाः | = | अभिषुतेन सोमेनोपेताः[1] |
| सोमपीतये | = | सोमपानार्थं [2] |
| सोमपाः | = | सोमस्य पातः[3] |
| सोमासः | = | संपादिताः सोमाः[4] |
| सोमपातयः | = | अतिशयेन सोमस्यपाता [5] |
| सोमानं | = | अभिषवस्य कर्तारं [6] |
| सोमपावन् | = | सोमस्य पातः[7] |
| सोमपर्वभिः | = | सोमरसरूपैः[8] |
| सोमगोपाः | = | सोमस्य गोपाः[9] |

एते एवमन्ये च सोमपदप्रयोगाः वेदे सोमपदस्य लताविषयकत्वं बोधयन्ति।

## देवताविषये सोमो यथा

"स घा वीरो न रिष्यति यमिंद्रो ब्रह्मणस्पतिः।
सोमो हिनोति मर्त्यम्।" ऋ.वे.1.18.4,

देवः इन्द्रः यं यक्ष्यमाणं हिनोति अर्थात् प्राप्नोति वर्धयति वा, तथा ब्रह्मणस्पतिर्देवो हिनोति, तथाच सोमो हिनोति स एव यजमानो वीर्ययुक्तः सन् न रिष्यति। एषो हि मन्त्रार्थः सोमं देवतावाचकं कथयति। एवं च –
"त्वं तं ब्रह्मणस्पते इंद्रश्च मर्त्यं। दक्षिणा पात्वंहसः॥" ऋ.वे.1.18.5, अर्थात्–

हे ब्रह्मणस्पते! त्वं तं मर्त्यमनुष्ठातारं पापात् पाहि। तथा सोमः पातु, इंन्द्रः पातु, दक्षिणाख्या देवता च पातु। इति।

---

1. ऋ.वे.1.2.2, 2. ऋ.वे.1.2.3, 3. ऋ.वे.1.4.2,
4. ऋ.वे.1.5.5, 5. ऋ.वे.1.8.7, 6. ऋ.वे.1.18.1,
7. ऋ.वे.9.56.7, 8. ऋ.वे.1.9.1, 9. ऋ.वे.10.45.5,

अयमन्यो मन्त्रो देवताविषयकसोमपदप्रयुक्त :-

"त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः।
त्रयः स्कंभासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा॥"[1]

अत्र हि सायनः एवं विवृणोति। मधुवाहने मधुरद्रव्याणां नानाविधखाद्यादीनां वहनेन युक्तेऽश्विनोः संबंधिनि रथे पवयो वज्रसमाना दृढाश्चक्रविशेषास्त्रयस्त्रिसंख्याकाः सन्ति। इत् इत्थं चक्रत्रयसद्भावप्रकारं विश्वे सर्वे देवाः सोमस्य चन्द्रस्य वेनां कमनीयां भार्यामभिलक्ष्य यात्रायां विदुः जानंति। यदा सोमस्य वेनया सह विवाहस्तदानीं नानाविधखाद्ययुक्तं चक्रत्रयोपेतं प्रौढं रथमारुह्याश्विनौ गच्छत इति सर्वे देवा जानंतीत्यर्थः। तस्य रथस्योपरि स्कंभासः स्तंभविशेषास्त्रयस्त्रिसंख्याकाः स्कभितासः स्थापिताः। किमर्थं आरभे आरब्धुं अवलंबितुं। यदा रथस्त्वरया याति तदानीं पतनभीतिनिवृत्त्यर्थं हस्तावलंबनभूताः स्तंभाः इत्यर्थः। हे अश्विनौ युवां तादृशेन रथेन नक्तं रात्रौ त्रिर्याथः। त्रिवारं गच्छथः। तथा दिवा दिवसेऽपि त्रिर्याथः। रात्रावहनि च रथमारुह्य पुनः पुनः क्रीडय इत्यर्थः। इति॥ अत्र हि सोमशब्दश्चन्द्रार्थे प्रयुक्तः। अपरोऽयं मन्त्रो यथा -
"अग्नेरिंद्रस्य सोमस्य देवानामूतिभिर्वयं। अरिष्यंतः सचेमह्यभिष्याम पृतन्यतः॥"[2]

केनापि अहिंस्यमाना वयं अग्नेरिंद्रस्य सोमस्य देवानामन्येषामपि रक्षणाभिः युक्ता भवेम। तथारक्षायुक्ताः वयं पृतनामात्मनः इच्छन्तः शत्रून् अभिभवेम। अत्र हि सोमः देवतार्थे प्रयुक्तः। अपि च-
"शं नः सोमो भवतु।"[3] अर्थात् अस्माकं शान्त्यै सोमो भवतु, इति।
"शमिन्द्रासोमा"[4] इत्यादिप्रयोगाश्च सोमशब्दस्य देवताविषयकचन्द्रार्थकत्वं निर्दिशन्ति।
एवं - "इंद्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः।
देवसेनानामभिभंजतीनां जयंतीनां मरुतो यंत्वग्रम्॥"[5]

अस्मत्सहायार्थमागतानां इंद्रो नायको भवतु। तथा तस्य बृहस्पतिः पुर एतु। एवं दक्षिणा यज्ञः सोमश्च पुर एतु। तथा देवसेनानामभिभंजतीनां जयंतीनां अग्रे मरुतो गच्छंतु। एवं सेनायाः नायके इन्द्रे सोमोऽयं बृहस्पत्या साकं पुरोगामी भवति।

---

1. ऋ.वे.1.34.2, 2. ऋ.वे.2.8.6, 3. ऋ.वे. 7.35.7.
4. ऋ.वे. 7.35.1. 5. ऋ.वे.10.103.8

देवतार्थे तथा लतार्थे अन्वितः सोमपदप्रयोगो यथा :-
''सोम रान्मृळया नः स्वस्ति तव स्वस्मि व्रत्याऽस्तस्य विद्धि।
अलर्ति दक्ष उत मन्युरिंदो मा नो अर्यो अनुकामं परा दाः॥'' ऋ.वे.[1]

हे सोम राजन्! अस्मान् अविनाशाय सुखय। वयं तव व्रतिनो भवामः। अस्मान् स्वकीयान् विद्धि। हे इन्दो! प्रवृद्धोऽस्मच्छत्रु गच्छति। स हि शत्रुः कृद्धश्च गच्छति। तादृशशत्रोरनुकाममस्मान् मा परादेहि॥ अत्र सोमशब्दः देवतार्थे तथा लतार्थे चान्वेति। अन्यश्चायं मन्त्रो यथा-

''त्वं हि नस्तन्वः सोम गोपा गात्रेगात्रे निषसत्था नृचक्षाः।
यत्ते वयं प्रमिनाम व्रतानि स नो मृळ सुषखा देव वस्यः॥'' ऋ.वे.[2]

हे सोम देव! त्वं नोऽङ्गस्य रक्षिता खलु। अतो सर्वेष्वंगेषु कर्मनेतृणां द्रष्टा त्वं निषीदसि। यद्यपि ते कर्माणि वयं हिंस्मः तथापि हे देव! श्रेष्ठान्नः शोभनसखा सन् सुखय। एवम् -
''सोमं मन्यते पपिवान्यत्संपिंषंत्योषधिं। सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन॥''[3]

अत्र हि सायनः - सोमं मन्यते। कः। यः पपिवान्। मैथुनकामार्थं चिकित्साद्यर्थं पीतः सोमो येन। यद्यर्थमित्यर्थः। य सोममोषधिं वल्लीरुपं संपिंषंति। सामर्थ्याद्रासायनिकाः। न च स साक्षात्सोमः। तर्हि कः। उच्यते सोमं हि तं मन्यते यं ब्राह्मणः। यद्ब्रह्मशब्दो ब्राह्मणपर्यायोऽस्ति ''कुतो नु चरसि ब्रह्मन् तस्मै मा ब्रूया निधिपाय ब्रह्म'' न्नित्यादिप्रयोगात्। ब्राह्मणा इत्यर्थः। ते चर्त्विजो यजमानश्च यागसाधनभूतं संस्कर्तुं विदुः जानंति तस्यांशं। यद्वा। कर्मणि षष्ठी। तं सोमं कश्चन नाश्नाति। कश्चिदप्ययज्वेति शेषः। यज्वैनं भक्षयितुमर्हति नान्य इत्यर्थः। एवमोषधिपक्षे। अथ चन्द्रपक्षे उच्यते - तं सोमं मन्यते पपिवान् पीतवान् यजमानो यद्यमोषधिरूपं संपिंषंत्यभिषवग्रावभिरध्वर्यादयो यजमानश्च। न च स सोमः। कस्तर्हि। यं ब्रह्माणो ब्राह्मणा अभिज्ञा दैवज्ञा विदुः कथयंति चन्द्रमसं न तस्याश्नाति कश्चनादेवो देवेभ्योऽन्यो मनुष्यादिः। देवा अग्र्यादयो रश्मयो वा। यज्ञार्हसोमस्यासोमत्वं न निंदायै अपि त्वितरस्य स्तुत्या इति मंतव्यं।'' इति। एवमत्र सोमः उभयथा व्याख्यातः।[4]

---

1. ऋ.वे.8.48.8, 2. ऋ.वे.8.48.9
3,4. ऋ.वे.10.85.3.मन्त्रः, तस्य सायणकृतं भाष्यम्॥

**इन्दुः - सोमलता**

इन्दुशब्दोऽपि वेदेषु तत्रापि प्रधानतया ऋग्वेदे चन्द्रार्थे तथैव रासायनिकसोमलताविषये चानेकत्र प्रयुक्तः। तत्र प्रथमतः रासायनिकसोमार्थे यथा-
त्वामच्छा चरामसि तदिदर्थं दिवे दिवे। इंदो त्वे न आशसः।। ऋ.वे.9.1.5,

हे इंदो! अर्थात् यागेषु क्लिद्यमान सोम! त्वां प्रति वयं चरामः। प्रतिदिनमस्माकं तत्परिचरणमेव कार्यं नान्यत्कार्यमस्ति। अस्माकमाशंसनान्यपि त्वय्येव नान्यत्र।
एवं सोमलताविषयेऽन्यः प्रयोगः इन्दुशब्दस्य -
''अनु द्रप्सास इंदव आपो न प्रवतासरन्। पुनाना इंद्रमाशत॥'' ऋ.वे.9.6.4,

द्रुतगतयः क्षरंतः इन्दवः अर्थात् सोमाः प्रवणेन मार्गेण आप इवेन्द्रमनुगच्छंति, व्याप्नुवन्ति च। एवञ्चान्यः प्रयोगः लताविषयकेन्दोः-
''ता अभि संतमस्तृतं महे युवानमा दधुः। इंदुमिंद्र तव व्रते॥'' ऋ.वे.9.9.5,

हे इन्द्र! त्वदीये कर्मणि ताः अङ्गुल्यः विद्यमानं अहिंसंतं युवानं इंदुं अर्थात् सोमं महते अभिषवादिलक्षणाय कर्मणे अभ्यादधुः। एवं ऋग्वेदेनवममण्डले इन्दुशब्दः रासायनिकसोमार्थे बहुषु मन्त्रेषु प्रयुक्तः।
चन्दार्थे इन्दुशब्दप्रयोगस्तु -
''अयं द्योतयदद्युतो व्य क्तून्दोषा वस्तोः शरद इंदुरिंद्र।
इमं केतुमदधुर्नू चिदह्नांशुचिजन्मन उषसश्चकार॥'' ऋ.वे.ऋ.वे.6.39.3,[1]

हे! इन्द्र! त्वया नियम्यमानोऽयमिन्दुः द्योतमानान् पक्षमासादीन् रात्रिं दिवसं संवत्सरांश्च व्यदीपयत्। कुत इति चेत् पुरा देवा इमं चन्द्रात्मना नभसि वर्तमानं दिवसानां प्रज्ञापकं अकुर्वन्, तस्मादेवानेन पक्षमासादयः सर्वे प्रकाशन्ते। चन्द्रगत्यधीनत्वात् तिथिविभागाना
म्। अपि चायं इन्दुः उषः कालान् आत्मीयेन तेजसा शुद्धोदयान् करोति॥
उभयथा इन्दुशब्दप्रयोगो यथा -
''गिरस्त इंद ओजसा मर्मृज्यंते अपस्युवः। याभिर्मदाय शुंभसे॥'' ऋ.वे.9.2.7,

---

1. अत्रान्यो मन्त्र :- गोषा इंदो नृषा अस्यश्वसा वाजसा उत।
आत्मा यज्ञस्य पूर्व्यः॥ ऋ.वे.9.2.10,
अर्थात् हे इन्दो यज्ञस्य पूर्व्यः आत्मभूतस्त्वं नः गवां पुत्राणां अश्वानां अन्नानां च दाता असि।

हे इंदो! तव बलेन कर्मेच्छासंबंधिन्यस्ताः गिरः शोध्यंते। ताभिः गीर्भिः त्वं मदाय क्षरन् अलं क्रियसे। अत्र हि इन्दुशब्दश्चन्द्रार्थे ओषध्यर्थे च प्रयुक्तः।
अस्मभ्यमिंद विंद्रयुर्मध्वः पवस्व धारया। पर्जन्यो वृष्टिर्मा इव॥ [1]

हे इंदो! इन्द्रकामस्त्वं मदकरस्यामृतस्य धारया पर्जन्यो वृष्टिमानिवास्मभ्यं मेधातिथिभ्यः पवस्व। एवं वेदेषु सोमशब्दवत् रासायनिकसोमलतार्थे तथा देवताविषयकचन्द्रार्थे च इन्दुशब्दः समधिकतया तत्र तत्र मन्त्रेषु प्रयुक्तः।

**चन्द्रसोमलतार्थयोः अन्यत्र चन्द्रशब्दप्रयोगो यथा –**

## आह्लादार्थे चन्द्रः

वेदे केषुचिन्मन्त्रेषु चन्द्रशब्दः केवलमाह्लादार्थकविशेषणत्वेन समाख्यातः। तृतीयमण्डले ऋग्वेदे अग्नेः तद्रथस्य च चन्द्रशब्दः विशेषणत्वेन प्रयुक्तः। तथाहि –
''चंद्रमग्निं चंद्ररथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदं।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः॥'' [2] इति।
अत्र हि चन्द्रशब्दस्य विवृतिमेवं चकार सायणः – देवासो देवाः चन्द्रमाह्लादकरं चन्द्ररथं चन्द्र आह्लादकोरथो यस्येति तं पिङ्गलवर्णं अप्सुसीदन्तं सर्वज्ञं सर्वत्र व्याप्तं क्षिप्रगामिनं यद्वा शत्रूणां हिंसितारं बलैरावृतं भर्तारं शोभनदीप्तिं वैश्वानरमिहलोके आदधुः। इति। तथैव ऋग्वेदे पञ्चममण्डलेऽपि चन्द्रशब्दः आह्लादार्थे प्रयुक्तो यथा–
''ये अग्ने चंद्र ते गिरः शुंभन्तश्वराधसः।
शुष्मेभिः शुष्मिणो नरो दिवश्चिद्येषां बृहत्सुकीर्तिबोधति त्मना॥'' [3]
अत्र हि हे अग्ने चंद्र अर्थात् सर्वेषां प्राणिनामाह्लादकर! इति चन्द्रशब्दो आह्लादार्थको अग्ने र्विशेषणत्वेन गृहीतः। आह्लादकर हे अग्ने! ये नरः ते स्तोत्ररूपाः वाचः शोभनाः कुर्वन्ति ते अश्वधनाः स्वकीयै र्बलैश्शत्रुशोषकाः सर्वदिगंतरावर्तिकीर्तिमन्तश्च भवन्ति। एवंविधं त्वां ते स्वयमेव जानंति। एषो हि मन्त्रार्थः। एवम् आपः विशेषणत्वेनापि आह्लादार्थकश्चन्द्राशब्दोऽयं प्रयुक्तो यथा ''यश्चापश्चंद्रा बृहती र्जजान ..'' इति[4]। यश्च बृहती र्महतीश्चंद्रा आह्लादिनीरप उदकानि जजान जनयामासेति हि तस्यार्थः।

---

1. ऋ.वे.9.2.9;
2. ऋ.वे.3.3.5;
3. ऋ.वे.5.10.4;
4. ऋ.वे.10.121.9;

## हिरण्यार्थे चन्द्रः

"ये वध्वश्चंद्रं वहतुं यक्ष्मा यंति जनादनु। पुनस्तान्यज्ञिया देवा नयंतु यत आगताः॥" ऋ.वे.[1] इति ऋग्वेदीये मन्त्रे चन्द्रपदं हिरण्यरूपत्वेन कथितम्। तत्र हि वध्वश्चंद्रं हिरण्यरूपंप्राप्नुवंतु। अस्मद्विरोधिनःसकाशात् ये यक्ष्माः समागताः तान् यज्ञार्हाः देवाः इन्द्रादयः तत्रैव नयन्तु। इति हि मन्त्रार्थः समाख्यातः।

### देवताद्वन्द्वे

## सोमापूषणौ

इमौ सोमापूषणौ धनस्य द्युलोकस्य पृथिव्याः जनयितारौ। किञ्च जातमात्रावेवैतौ देवौ विश्वस्य कृत्स्नस्य गौप्तारौ सन्तौ अमृतस्य हेतुं अकार्षुः। द्योतमानौ देवाविमौ जातमात्रावेव सर्वे देवाः सेवितवन्तः। इमौ तमांसि नाशयतः। एतौ तरुणीषु स्त्रीषु गवां ऊधस्सु परिपक्कं पयो वर्धने इन्द्रस्य सहायकौ भवतः। कामानां वर्षितारौ सोमापूषणौ लोकस्य परिच्छेदकं सप्तर्तुचक्रं मनोमात्रेण युज्यमानं प्रसिद्धं रथं अस्मान् प्रति प्रेरयतः। अनयोरेकः पूषा उच्छ्रिते द्युलोके सदनं चकार। अन्यः सोमस्तु पृथिव्यां ओषधिरूपेण, अन्तरिक्षे च चन्द्ररूपेण सदनं चकार। अपि चायं भुवनानि भूतानि अजनयत्। पूषाऽऽदित्यस्तु विश्वमभिपश्यन् गच्छति। एतौ अस्माकं कर्म रक्षतः। अनयोः प्रभावात् जनः शत्रून् पराजयति[2]।

---

1. ऋ.वे.10.85.31;
2. सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः।
   जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम्॥
   इमौ देवौ जायमानौ जुषंतेमौ तमांसि गूहतामजुष्टा।
   आभ्यामिंद्रः पक्कमामास्वंतः सोमापूषभ्यां जनदुस्त्रियासु॥
   सोमापूषणा रजसो विमानं सप्तचक्रं रथमविश्वमिन्वं।
   विषूवृतं मनसा युज्यमानं तं जिन्वथो वृषणा पंचरश्मिं॥
   दिव्यं न्यः सदनं चक्र उच्चा पृथिव्यामन्यो अध्यंतरिक्षे।
   तावस्मभ्यं पुरुवारं पुरुक्षुं रायस्पौषं वि ष्यतां नाभिमस्मे॥
   विश्वान्यन्यो भुवना जजान विश्वमन्यो अभिचक्षाण एति।
   सोमापूषणाववतं धियं मे युवाभ्यां विश्वाः पृतना जयेम॥ ऋ.वे.2.40.1-5

पूषादित्यः विश्वस्य प्रीणयिता सन् अस्माकं कर्म जिन्वति। धनपतिः सोमस्तु अस्मभ्यं धनं ददाति। पूषा चास्मत्प्रातिकूल्यं निवारयति। सुवीराः वयं तेभ्यः स्तोत्रं कुर्मः[1]। एवं सोमापूषणौ देवताद्वन्द्वे प्रसिद्धौ वेदवाङ्मये।

## इन्द्रासोमौ

इन्द्रासोमौ मुख्यानि भूतानि चक्रथुः[2]। एतौ सूर्यं जलं च विविदतुः। अपि च विश्वानि तमांसि निन्दितॄन् असुरांश्च अहिंस्त। एतौ उषसं व्युच्छंतीं कारयतः। किंच सूर्यं ज्योतिषा सहोन्नयतः। दिवं अन्तरिक्षे अस्तंभयताम्। मातृभूतां पृथिवीं व्यप्रथयताम्। मेघस्थानि उदकानि परिवृत्त्य स्थितं वृत्रं हतः। नदीनां जलानि प्रेरयतः समुद्रान् उदकैरापूरयतः। गवां ऊधांसि पयःपूराणि कुरुतः। अस्मद्भ्यः तारकं सन्तानयुक्तं यशोमयं धनं क्षिप्रं धत्थः। नृभ्यो हितं शतृसैन्याभिभावुकं बलं च सन्तनुतः[3]। एवं इन्द्रासोमौ देवताद्वन्द्वे ख्यातौ।

## सोमारुद्रौ

सोमारुद्रावस्मासु आसुरं बलं धारयेताम्। अस्मद्गृहेषु सर्वेषु यज्ञाः पर्याप्तं व्याप्नुवतः। सप्तरत्नानि धारयन्तौ सोमारुद्रौ सुखकरावस्माकं भूत्वा, अस्मत्पुत्रादये पश्वादये च सुखं वितनुतः। रोगान् निवारयतः। अलक्ष्मीं दूरीकुरुतः। अस्मद्भ्यः भद्राणि अन्नानि यशांसि च प्रापयतः[4]। अस्मत्तनुषु सर्वाणि भेषजानि धारयतः। अस्मत्पापं च क्षपयतः। दीप्तधनुष्कौ तीक्ष्णशरौ शोभनसुखप्रदौ स्तूयमानौ सुमनसौ

---

1. धियं पूषा जिन्वतु विश्वमिन्वो रयिं सोमो रयिपतिर्दधातु।
   अवतु देव्यदितिरनर्वा बृहद्वदेम विदथे सुवीराः॥ ऋ.वे.2.40. 6;
2. इंद्रासोमा महि तद्वां महित्वं युवां महानि प्रथमानि चक्रथुः॥ ऋ.वे.6.72.1;
3. ऋ.वे.6.72.2-5;
4. सोमारुद्रा धारयेथामसुर्यं प्र वामिष्टयोऽरमश्नुवंतु।
   दमेदमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे॥
   सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश।
   आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि संतु॥ ऋ.वे.6.74.1-2;

सन्तौ सोमारुद्रौ सुखयतोऽस्मान्। अस्मान् वरुणस्य पाशात् मुञ्चतः, आपद्भ्यः रक्षतश्च[1]। एवं चन्द्रः रुद्रेण साकं सर्वप्राणिनां हितकरो भवति।

## सूर्याचन्द्रमसौ

सूर्याचन्द्रमसौ कालस्य ध्वजभूतौ। एतौ हि पूर्वस्मिन् कल्पे धाता यथा सृष्टवान् तथाऽस्मिन् कल्पे सुखरूपां दिवं पृथिवीं अन्तरिक्षं चेति त्रिभुवनं सृजतः[2]। एषोहि सूर्यान्द्रमसोः वेदोक्तः प्रभावः।

## भुवनपालकः सोमः

वेदर्षिः अश्विभ्यां भगात् अदितेः पूष्णः द्यावापृथिवीभ्यां आत्मनोऽविनाशं क्षेमं प्रार्थयन्, स्वस्तये वायुं स्तौति। तथैव सर्वलोकजीवनस्य सोमायत्तत्वात् भुवनस्य पालकं सोमं च स्वस्तये प्रार्थयति। अपि च यथा सूर्याचन्द्रमसौ निरालंबे मार्गे राक्षसादिभिरनुपद्रुतौ संचरतः तद्वत् पन्थानं क्षेमेनानुचरेमेति सङ्कल्पयति। किंच चिरकालविलम्बकोपं विस्मरन्तो वयं मदीयोऽयमिति बुद्ध्या बन्धुजनेन सङ्गमेमहि इति च प्रतिज्ञां करोति[3]।

---

1. सोमारुद्रा युवमेतान्यस्मे विश्वा तनुषु भेषजानि धत्तं।
अव स्यतं मुंचतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्॥
तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सुमृळतं नः।
प्र नो मुंचतं वरुणस्य पाशाद्गोपायतं नः सुमनस्यमाना॥ ऋ.वे.6.74.3-4;
2. सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
दिवं च पुथिवी चांतरिक्षमथो स्वः॥ ऋ.वे.10.190.3;
3. स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यतिदतिरनर्वणः।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति धावापुथिवी सुचेतुना॥
स्वस्तये वायुमुप बुवामहै सोमं स्वस्ति भुवनस्य यस्पतिः।
बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवंतु नः॥
स्वस्ति पंथामनुचरेमसूर्याचन्द्रमसाविव।
पुनर्ददताघ्नता जानता संगमेमहि॥ ऋ.वे.5.51.11,12.15;

## सोमः सोमस्य पुरोगाः

सर्वसुखवर्षकः राजा दिशैव शुद्धः, आदित्य इव कान्तिमान् भूत्वा राष्ट्रस्य नेता भवति। एवं चन्द्रः सर्वेषां प्रेरको भूत्वा ऐश्वर्यपूर्णस्य राष्ट्रस्य नेता भवति। अयं सोमः कदापि न विनश्यति। सदा जागरणशीलश्च भवति। तादृशं सोममादर्शं कृत्वा राजा अथवा यः कोऽपि मनुजः उत्तमं यशः प्राप्नोति। एवं सोमः राज्ञोऽथवा मनुजस्य दातृगुणं, कान्तिं, उत्तमविद्यां, पालनासामर्थं ददाति। अस्माकं सुहृद्भूत्वा सोमः समस्तदेवानां, विदुषां, पालकानां, प्रजानां चाभिमतं पदाधिकारं प्रसादयति[1]।

## यशोज्ञानदायी सोमः

वीरैः अश्वारोहिभिः सुवर्णरत्नादिधनैश्वर्येण च विराजमाणं पुरुषं पवित्रं कृत्वा तस्मै गवादिपशुसमृद्धिं ऐश्वर्यं उत्तमं यशः तस्य ज्ञानकर्मभ्यां सोमः प्रयच्छति।[2]

## मा सोमोऽमृतत्वेन गम्यात्

सर्वप्रेरकः सोमः मनुजस्य राजपदं ऐश्वर्यं ओषधीरसं वीर्यं प्रयच्छन्, तस्य रोगनिवारकदीर्घजीवनदायी च भवति। अतः प्रार्थितः सोमः एवं ऋषिणा यजुर्वेदे "मा सोमोऽमृतत्वेन गम्यात्" इति[3]। अर्थात् सोमो मां अमृतत्वेन गम्यात् इति।

---

1. ककुभंरूपं वृषभस्य रोचते बृहच्छुक्रः
   शुक्रस्य पुरोमाः सोमः सोमस्य पुरोगाः।
   यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा
   गृह्णामि तस्मै ते सोम सोमाय स्वाहा॥ य.वे.8.49;
   उशिक् त्वं देव सोमाग्नेः प्रियं पाथोऽपीहि
   वशी त्वं देव सोमेन्द्रस्य प्रियं प्रायोऽपी
   ह्यस्मत्सखा त्वं देव सोम विश्वेषां
   देवानां प्रियं प्रायोऽपीहि॥ य.वे.8.50;
2. आ पवस्व हिरण्यवदश्ववत्सोम वीरवत्।
   वाजं गोमन्तमाभर स्वाहा॥ य.वे.8.63;
3. मा सोमोऽमृतत्वेन गम्यात्॥ य.वे.9.19;

## प्रणिनामुज्जेष्टा सोमः

सोमः अ उ म् तथा अ मात्ररूपैश्चतुरक्षरैः जाग्रत्स्वप्रसुषि-स्तिुरीयरूप चतुरवस्थायुक्तान् चतुष्पदः प्राणिनः विराजमानान् चकार[1]। एवं सोमः सर्वप्राणिनां उज्जीवको भवतीति विज्ञायते।

## ताराशशाङ्ककथा

अकूपारसलिल स्समुद्रो बलवान् वायुः तेजस्वी अग्निः उग्रतापकरस्सूर्यः सुखदायी चन्द्रः दिव्यं जलं ऋतौ प्रथमप्रवर्तको देवस्तदन्याः देवताश्च कथयन्ति ब्राह्मणाय पापं मा करोत्विति। राजा सोमः प्रथमतो ब्रह्मजायामद्वेषेण प्रतियच्छत्। तदानीं वरुणो मित्रस्तेषामनुचराश्च होतुरग्रेः हस्तं गृहीत्वा गतवन्तः।

पाणिग्रहणं कर्तव्यमित्येव तस्याः प्रतिज्ञा। ब्रह्मजाया दूतेन प्रेषितुं न युक्ता। तथैव क्षत्रियराज्यं सुरक्षितं भवति। सा केशान् मुक्त्वा ''तारक'' इति यं ग्रामं कथयति, तं ग्राममापदो दौर्भाग्यं चावहति। उल्कैस्सांकं शशाः यदि गच्छेयुस्तर्हि सा ब्रह्मजाया राष्ट्रं नाशयति।

ब्रह्मचारी प्रजासेवं कुर्वन् लोकेषु चरति। ततस्स हि देवानामङ्गभूतो भवति। तद्द्वारा बृहस्पति स्स्वभार्यां ज्ञातवान्। हे देवाः एवं सोमो भवतां चमसत्वेनोपकारको भवति। इतः पूर्वं देवाः सर्वधर्मानुपदिष्टवन्तः। सप्तर्षयः तपः कुर्वन्तस्सन्ति। ते अपि तदेवाकथयन्। अपहृता ब्रह्मजाया भयप्रदा भवति। सा परलोकेऽपि दुःखकारिणी भवति। यः गर्भस्त्रावं करोति तान् प्राणनाशकान् परस्परं कलहमानान् ब्रह्मजाया संहरति। सा ब्रह्मजाया पूर्वं दशपत्नीभूत्वापि ब्राह्मणपाणिग्रहणानन्तरं तस्याः स एव पतिः भवति। ब्राह्मण एव भर्ता, क्षत्रियो वैश्यो वा न भवति। सूर्यः पञ्चभ्यो मानवेभ्यो बोधयन्नेनं विषयं गच्छति। देवताः पुनर्ददुः। मनुष्याः पुनर्ददुः। देवताः पापरहितां कृत्वा पुनर्ददुः। पृथिव्याः बलं विभागं कृत्वा बहुप्रशंसार्हां देवतामुपासन्ते प्राणिनः।।

यस्य राज्ये ब्रह्मजायाऽज्ञानेन निरुद्धा भवति तस्य राज्ञो तल्पे शतसन्तानप्रदायिनी कल्याणी भार्या न शेते। यस्मिन् राष्ट्रेऽज्ञानेन ब्रह्मजाया निरुध्यते तस्य गृहे श्रोतारः

---

1. सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्तानुज्जेषम्॥ य.वे.9.31;

वक्तारश्च पुत्राः न भवन्ति। यस्मिन् राष्ट्रेऽज्ञानेन ब्रह्मजाया निरुद्धयते, तस्मिन् राष्ट्रे वीराः सुवर्णालङ्कारयुक्तानां पुत्राणां सम्मुखं न यन्ति। यस्मिन् राष्ट्रेऽज्ञानेन ब्रह्मजाया निरुद्धा भवति तस्मिन् क्षेत्रे पुष्करिणी न भवति। पद्मानि बिसतन्तवश्च न जायन्ते। यस्मिन् राज्ये ब्रह्मजाया निरुद्धयते तत्र दोहको गां न दोग्धि। स्त्रीरहितो ब्राह्मणो यत्र रात्र्यां पापबुद्धया वसति, तत्र राष्ट्रे कल्याणकरी धेनु र्न भवति। वृषभाः धुरं न वहन्ति[1]। एवमत्र प्रतिपादितेषु अथर्ववेदीयमन्त्रविषयेषु ब्रह्मजाया तारेति, तन्निरोधकश्च सोम इति, ऋषिप्रार्थनया देवताप्रर्थनया गुरुस्तां स्वीचकारेति बहवः विषयाः पौराणिककथांशबीजभूताः सन्तोऽत्रोपलक्षिताः इति विज्ञायते।

## वीरुधां पतिः सोमः

वीरुधां पतिस्सोमो मां रक्षतु। अहमस्मिन् ब्रह्मयज्ञे, अस्मिन् कर्मणि, अस्मिन् पुरोहितानुष्ठाने, अस्यां प्रतिष्ठायां, अस्मिन् चिन्तने, अस्मिन् सङ्कल्पे, अस्मिन्नाशीर्वादे, अस्यां देवताप्रार्थनायां, अहं सर्वस्वमर्पयामि[1]। एवमधर्ववेदपुरुषः स्वसङ्कल्पितकार्यसिद्धयै वीरुधां पतिं सोमं प्रार्थयति। ''ओषधयः समवदन्त ..'' इति[2] यजुर्वेदमन्त्रोऽपि चन्द्रस्योषधि पतित्वं निर्दिशति। एष एव मन्त्रः ऋग्वेदेऽपि विद्यते - '' ओषधयः सं वदन्ते सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि॥'' ऋ.वे.[3] एवं ''या ओषधीः सोम राज्ञी र्बह्वीः शतविचक्षणाः। तासां त्वमस्युत्तमारं कामाय शं हृदे॥ ऋ.वे.[4] इति ऋग्वेदीयो मन्त्रोऽपि सोमस्य वीरुधां पतित्वं बोधयति।

---

1. अ.वे.5.4.17.1-18;

1. सोमो वीरुधामधिमतिः समावतु। अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधाया मस्यां प्रतिष्ठाया मस्यां चित्त्या मस्या माकुत्या मस्या माशिष्यां देवहूत्यां स्वाहा॥ अ.वे.5.24.7

2. य.वे.12.96 3. ऋ.वे.10.97.22 4. ऋ.वे.10.97.18

## आरोग्यप्रदाता चन्द्रः

आरोग्यकामः वेदर्षिः विविधदेवताभिः साकं चन्द्रं च प्रार्थयति। सह्यस्मान् एवं बोधयति – "वयं अनन्तवीर्यवन्तं तथा आनन्ददायकं चन्द्रं शरस्य पितरं विद्मः। तेन शरेणाहं त्वदीयरोगान् दूरीकरोमि। पृथिव्या ते निषेचनं सशब्दं बहिर्गच्छतु।" इति[1]। एवमत्रवेदे चन्द्रः आरोग्यप्रदायी भवति।

## सोमस्योपदेशः

सोमोऽस्माकमेवं बोधयति। "अप्सुसर्वरोगनिवर्तकाः ओषध्यस्सन्ति। एवं विश्वस्य सुखप्रदाताग्निश्च तासु विराजते।" इति[2]। अत्र हि सोमोपदेशकमन्त्रेण जलेषु विद्यमाना विद्युत् च सूचिता विद्यते।

## जलसारभूतस्सोमः

सोमो जलसारभूतः। अमृतात्मकं तं द्युलोके इन्द्रादयो देवाःउपभोगं कुर्वन्ति। ताः आपः अग्निं स्वगर्भे धृत्वा अस्मद्भ्यं आरोग्यप्रदाः सुखदायिकाश्च भवन्ति[3]॥

## शत्रुपराजयप्रार्थना

सांग्रामिकादिकर्मसु प्रार्थयत्येवं वेदर्षिः सोमम्। हे सोमदेव! मम शत्रवः स्थानभ्रष्टाः सन्तः कदापि स्वस्त्रियः नोपसर्पतु[4]। एवं संग्रामे स्वशत्रवो पलायिताः भवन्तु, ते कदापि स्वराज्यं आत्मीयं जनं च मेलने न समर्थाः भवन्त्विति प्रार्थयति जनः सोमम्।

---

1. विद्मा शरस्य पितरं चन्द्रं शतवृष्ण्यम्। तेना ते तन्वे3शंकरं। पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति॥ अ.वे.1.3.4

2. अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशंभुवम्॥ अ.वे.1.6.2

3. यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति।
   या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शं स्योना भवन्तु॥ अ.वे. 1.33.3.

4. अदारसृद् भवतु देव सोमास्मिन् यज्ञे मरुतो मृडता नः।
   मा नो विददभिभा मो अशस्तिर्मा नो विदद् वृजिना द्वेष्याया॥ अ.वे.1.20.1;

## शत्रुविनाशप्रार्थना

परसेनात्रासन विद्वेषणकर्मसु सोमः एवं प्रार्थ्यते। बलिष्ठाः भूपुत्राः मरुतः इन्द्रेण सह विध्वंसयन्ति। तत्र हि सोमः वरुणः महादेवः मृत्युः इन्द्रश्च मरुतां सहायकाः भूत्वा शत्रून् विनाशयन्ति[1]। शत्रुविनाशार्थं साक्षत् सोमं प्रार्थयति वेदर्षिः एवं क्रमेण। ''हे सोम! यो दुष्टाशयः शत्रुः अस्माकं सुन्दराशयान् निष्ठुरवचनैः धिक्करोति, तस्य मुखे त्वं वज्रप्रहारं कुरु, तेन सः छिन्नो भिन्नश्च भूत्वा दूरमपगच्छति। यः अस्माकं विनाशाय यतते, यः शत्रुरस्माकं संतापकारी भवति, त्वं तस्य बलं द्युलोकविस्तृतया विद्युता तिरस्कृत्य, तं विनाशय[2]।'' एवंविधानेन सोमः स्तोतुः शत्रुसंहारको भवति।

## नक्षत्रेषु पूर्णरश्मिश्चन्द्रः

गन्धर्वाप्सरो देवताके सूक्ते नक्षत्ररश्मयः अप्सरसां रूपेण चन्द्रश्च गन्धर्वत्वेनोपवर्णितः। तत्र वेदर्षिरेवं कथयति। ''हे नक्षत्ररूपरश्मयः! युष्मत्सु सम्पूर्णैश्वर्यवति चन्द्रमसि भवन्तस्संयुक्ताः भवन्ति। तादृशां भवतां नमस्कारयुक्तं हविर्ददामि।'' इति[3]। अत्र गन्धर्वो नाम चन्द्र एवेति श्रीरामशर्मा आचार्यस्याभिप्रायः। तथासत्यत्र चन्द्रमार्थे गन्धर्वशब्दः प्रयुक्तः।

## चन्द्रस्य पञ्चशक्तयः

तपन-हरण-दीपन-शोकद-तैजसेति पञ्चशक्तयश्चन्द्रस्य विराजन्ते। ताभिः शक्तिभिः पञ्चभिः स हि चन्द्रः शत्रून् पराजयति। तथाच प्रार्थ्यते चन्द्र एवम् - ''हे चन्द्र! योऽस्मान् यं च वयं द्विष्मः तं प्रति त्वदीयसंतापनशक्तिद्वारा

---

1. यूयमुग्रा मरुतः पृश्निमातर इन्द्रेण युजा प्र मृणीत शत्रून्।
   सोमो राजा वरुणो राजा महादेव उत मृत्युरिन्द्रः॥ अ.वे.5.21.11;
2. यो नः सोम सुशंसिनो दुःशंस आदिदेशति। वज्रेणास्य मुखे जहि स संपिष्टो अपायति॥
   यो नः सोमाभिदासति सनाभि र्यश्च निष्ट्यः।
   अप तस्य बलं तिर महीव द्यौ र्वधत्मना॥ अ.वे.6.6.2,3;
3. अप्रिये विद्युन्नक्षत्रिये या विश्वावसुं गन्धर्वं सचध्वे।
   ताभ्यो वो देवीर्नम इत् कृणोमि॥ अ.वे.2.2.4;

तपतात्। क्रोधरूपबलेन हर! दीपनशक्त्या विनाशय। शोकप्रदशक्त्या शोकाकुलं कुरु। हे चन्द्र! त्वदीयेन तेजसा मम शत्रुमतेजसं कुरू।'' इति[1]। एवं पञ्चशक्त्युपेतश्चन्द्रः शत्रून् पञ्चधा निर्वीर्यान् करोति।

## प्रातः स्मरणीयः

मेधाकामेन वर्चस्कामेन स्तूयते प्रातःप्रार्थनसूक्तमिदम्। सप्तमन्त्रात्मकेऽस्मिन् स्तोत्रे प्रथमे मन्त्रे एव अग्न्यादिभिस्साकं निर्दिष्टस्सोमः प्रातःस्मरणीयेषु देवेषु। यथाहि- ''वयं प्रातः अग्निं इन्द्रं मित्रावरुणौ अश्विनौ भगं पूषणं ब्रह्मणस्पतिं सोमं रुद्रं आह्वयामः'' इति[2]। एवं प्रातराहूतस्सोमोऽस्माकं मेधां वर्चश्च प्रयच्छति।

## सोमाय प्रार्थना

पुष्टिं सन्तानवृद्धिं तिस्रः देवीभ्यः प्रार्थयन् यजमानः सोमं शत्रुभ्यो रक्षणं प्रार्थयति। हे तिस्रःभारतीपृथ्वीसरस्वत्याख्याः देव्यः यूयं नः शर्म ददातु। यदस्ति अधिकं पोषकं पदार्थं तदस्माकं शरीराय सन्तानाय प्रसादयन्तु। अस्मत्सन्ततिः हीनतां नोपगच्छेत्। तथाच हे सोमराजन् वयं शत्रुभिः पीडां न लभेम[3]। एवं च सावित्रयागे विवाहे आज्यहोमे यजमानः एवं प्रार्थयति। ''वीरुधामधिपतिः सोमः अस्माकमस्मिन् ब्रह्मयज्ञे, अस्मिन् कर्मणि, अस्मिन् पौरोहित्ये, अस्मिन् चिन्तने, अस्यां प्रतिष्ठायां, अस्मिन् सङ्कल्पे, अस्मिन् आशीर्वादे, अस्यां देवीप्रार्थनायां, अस्मदाहुतीः स्वीकृत्य अस्मान् रक्षतु।[4]'' इति। एवमत्र सोमः रक्षार्थं प्रार्थ्यते।

---

1. चन्द्र यत् ते तपस्तेन तं प्रति तप। योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥1॥
   चन्द्र यत् ते हरस्तेन तं प्रति हर ॥2॥ चन्द्र यत्तेऽर्चस्तेन तं प्रत्यर्च ॥3॥
   चन्द्र यत् ते शोचिस्तेन तं प्रति शोच ॥4॥
   चन्द्र यत् ते तेजस्तेन तमतेजसं कुरु ॥5॥ अ.वे.2.22.1--5;
2. प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना।
   प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोम मुत रुद्रं हवामहे॥ अ.वे.3.16.1;
3. तिस्रो देवी र्महि नः शर्म यच्छत। प्रजायै नस्तन्वेति यच्च पुष्टम्।
   मा स्महि प्रजया मा तनूभि र्मा रधाम द्विषते सोम राजन्॥ अ.वे.5.3.7;
4. सोमो वीरूधामधिपतिः समावतु। अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधाया मस्यां प्रतिष्ठाया मस्यां चित्त्यां मस्या माकूत्या मस्या माशिष्यस्यां देवहूत्यां स्वाहा॥ अ.वे.5.24.7;

## चन्द्रमाः नक्षत्राणामधिपतिः

वैवाहिके आज्यहोमे, चातुर्मास्ये वैस्वदेवपर्वणि सावित्रयागे पठ्यते रक्षाप्रार्थनात्मकं स्तोत्रमिदम्। अत्र सप्तदशदेवताः संस्तुताः। तत्र वीरुधां पतित्वेन सोमाय प्रार्थना दर्शिता। अत्र तु चन्द्रः नक्षत्राधिपतित्वेन पुनः प्रार्थ्यते। अस्मिन् ब्रह्मयज्ञे, अस्मिन्, कर्मणि, अस्मिन् पौरोहित्ये, अस्यां प्रतिष्ठायां, अस्यां चित्त्यां, अस्यां आकूत्यां, अस्मिन् आशीर्वादे, अस्यां देवहूत्यां आहूतः नक्षत्राणामधिपतिः चन्द्रमाः अस्मान् रक्षति[1]।

## बलकामना

शत्रुविनाशकबलमभिलषन् पुरुषः सोममेवं स्तौति। हे सोम! अदितिः तस्याः पुत्राश्च लोकानुग्रहशीलिनो भूत्वा येन मार्गेण सञ्चरन्ति, तस्मिन् मार्गे अस्माकं रक्षकस्सन् त्वमागच्छ। हे सोम! येन बलेन त्वमस्मदर्थं असुरान् वशीकरोसि, तेन बलेन नः अधिवोचत[2]। अर्थात् असुरजेता त्वं तादृशं त्वदीयं बलं अस्मभ्यं प्रयच्छतु।

## देवताश्रेष्ठः

केशवृद्धिकामः चन्द्रदेवताकं ओषधिं प्रस्तौति। तत्रौपम्येन ओषध्याः श्रेष्ठतां कथयति। हरिद्रादिरूपे ओषधे! त्वं भेषजेभ्योऽन्येभ्यः श्रेष्ठासि। अहोरात्रविभागेन कालावच्छेदकौ सूर्यचन्द्रौ यथा प्रशस्तौ जातौ तथा त्वमपि प्रशस्तासि। देवतासु वरुण इवोत्तमा च विद्यसे[3]। अत्र हि चन्द्रः कालावच्छेदकत्वात् श्रेष्ठत्वेन प्रतिपादितः।

## अभीरमरश्चन्द्रः

ब्रह्मदेवताके निर्भयजीवनविधायके सूक्ते आयुष्कामः एवं प्रार्थयति। अत्र हि सूर्यचन्द्रौ भयविनाशरहितौ निर्दिष्टौ। यथा सूर्यः चन्द्रश्च न बिभीतः, न विनश्यतः तथा मम प्राणश्च भयेन मरणशङ्कया च विमुक्तो भवतु।[4] एषा हि कामनाऽत्र स्तोतुः।

---

1. चन्द्रमा नक्षत्राणा मधिपतिः स मावतु॥ अ.वे.5.24.10;
2. येन सोमादितिः पथा मित्रा वा यन्त्यदुहः। तेना नोऽवसा मह्रि॥
   येन सोम साहन्त्यासुरान् रन्धयसि नः। तेना नो अधि वोचत॥ अ.वे.6.7.1,2;
3. श्रेष्ठमसि भेषजानां वसिष्ठं वीरुधानाम्। सोमो भग इव यामेषु देवेषु वरुणो यथा॥ अ.वे.6.21.2;
4. यथा सूर्यश्च चन्द्रश्च न बिभीतो न रिष्यतः। एवा मे प्राण मा बिभेः॥ अ.वे.2.15.3;

## राज्यदाता

शत्रुभिः पराजितः राजा स्वराष्ट्रे पुनः प्रवेष्टुं क्रियमाणे कर्मणि स्तूयमानं षण्मन्त्रात्मकं सूक्तं अथर्ववेदे कथितम्। तत्र वेदर्षि रेवं प्रस्तौति। हे राजन्! त्वां राजा वरुणः अद्भ्यः, पर्वतेभ्यः सोमः, प्रजाभ्यः इन्द्रः आह्वयतु। एवमाहूत स्त्वं श्येन इव वेगेन त्वत्प्रजानां सकाशे समागच्छतात्[1]। एवमत्र सोमः उन्नतपर्वतेभ्यस्समागतः राज्यभ्रष्टस्य राज्यं ददाति।

## रक्षकस्सोमः

तेजस्कामो विश्वरक्षकेभ्यः आत्मनः रक्षणं प्रार्थयति। तत्र हि वेदर्षिरेवं प्रार्थयति। "वयं राजानं सोमं अग्निं च स्तुतिभिराह्वयामः। तथैव आदित्यं विष्णुं सूर्यं ब्रह्माणं बृहस्पतिं च आह्वयामः।" इति[2]। एवं सोमः अस्मद्रक्षकासु देवतासु अन्यतमत्वेन निर्दिष्टः।

## योद्धसंरक्षकस्सोमः

शत्रुसेनां भीतां कर्तुं सोमादिदेवताभिरभिमन्त्रितं कवचं राज्ञे युद्धगामिने महाव्रते दुंदुभिहवनानन्तरं ददाति याज्ञिकः। अत्र हि सूक्ते वेदर्षिरेवं स्तौति जयकाम! हे राजन्! ते मर्माणि वर्मणा आच्छादयामि। राजा सोमस्त्वां विनाशरहितेन स्वकीयेन तेजसा आच्छादयतु। तथैव वरुणः महान्तं सुखं, इन्द्रः तदन्याः देवताश्च शत्रुसेनाभयंकरं त्वां प्रोत्साहयन्तु।" इति[3]। अत्र हि चन्द्रः योद्धुः संरक्षकत्वेन कथितः।

## शिक्षकस्सोमः

चातगणेरक्षोग्रहपिशाचादिच्चिकित्सके सूक्ते सोमः राक्षसशिक्षकत्वेन कथितो वेदर्षिणा। सोमः पापिनं राक्षसं, मिथ्यावचनधारकं बलिनं राजानं च न हिनोति। सहि दुरितं राक्षसं, अनृतभाषिणं राजानं हन्त्येव[4]। एवं चन्द्रोऽत्र दुष्टशिक्षकत्वेन प्रस्तुतः।

---

1. अद्भ्रयस्त्वा राजा वरुणो ह्वयतु। सोमस्त्वा ह्वयतु पर्वतेभ्यः।
   इन्द्रस्त्वा ह्वयतु विड्भ्यः आभ्यः। श्येनो भूत्वा विश आ पतेमाः॥ अ.वे.3.3.3;
2. सोमं राजान मवसेग्निं गीर्भिर्हवामहे। आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्॥ अ.वे.3.20.4;
3. मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजाऽमृतेनानु वस्ताम्।
   उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वाऽनुदेवा मदन्तु॥ अ.वे.7.118.1;
4. ना उ सोमो वृजिन हिनोति न क्षत्रियं मिथुया धारयन्तम्।
   हन्तिरक्षो हन्त्यासद् वदन्त मुभाविन्द्रस्य प्रसितौ शयाते॥ अ.वे.8.4.13;

## सोमस्य भ्राता

पुरुषं वीर्ययुक्तं कर्तुं स्तूयमानं वनस्पतिदेवतात्मकं सूक्तं विद्यते वेदेऽथर्वणि चतुर्थकाण्डे। तत्र कपित्थमूलमेवं प्रस्तौति वेदर्षिः। हे कपित्थमूल! त्वं अपां प्रथमजः रसोऽसि। वनस्पतीनां च सारभूतोऽसि। ओषधीनामधिपस्सोमः त्वदीयः भ्राता। त्वं हि ऋषीणां मन्त्रप्रभावेनोत्पन्नोऽसि। एवमोषधिः कपित्थः सोमस्य सोदरत्वेन प्रतिपादितः[1]।

## सोमोत्पन्नः शङ्खमणिः

उपनयनानन्तरं आयुष्कामस्य माणवकस्य कृते शङ्खमणिबन्धकमिच्छन् सूक्तमिदं पठ्यते। तत्र हि शङ्खः एवं प्रार्थ्यते। हे शङ्ख! त्वं हिरण्यादिषु मुख्यतमोऽसि। त्वं हि अमृतमयात् चन्द्रमण्डलात् उत्पन्नोऽसि। रथे त्वं दर्शनीयोऽसि। इषुधौ[2] त्वं रोचनोऽसि। तादृशस्त्वं अस्माकमायुर्वर्धको भव[3]।

## सोमदायादः

गोहरणमारणादिदुष्कर्माचरतां शत्रूणां मारणाय पठ्यमाने सूक्ते सोमः एवं कथितः। ब्राह्मणो न हिंसितव्यः। स हि अग्निरिव प्रियतमरूपः। सोमोऽस्य दायादः। अत इन्द्रः एनं अघेभ्यः परिरक्षति[4]।

## वृत्रहननायाहूयते सोमः

अयं हि सोममुद्दिश्य अग्नेः वरुणस्य वा वचनानि। तत्रैवमाहूयते सोमः। ''हे सोम! इमं द्युलोकं पश्य। अयं हि वामं आस। अर्थात् वननीयं बभूव। अस्य प्रकाशस्याधारभूतं विस्तीर्णमन्तरिक्षं पश्य। अस्मिन् समये आवां वृत्रं हनाव। तदर्थं

---

1. अपां रसःप्रथमजोऽथो वनस्पतीनाम्। उत सोमस्य भ्रातास्युतार्शमसि वृष्ण्यम्॥ अ.वे.4.4.5:
2. इषुधौ = बाणकोशे
3. हिरण्यानामेकेऽसि सोमात् त्वमधि जज्ञिषे।
   रथे त्वमसि दर्शत इषुधौ रोचनस्त्वं प्रण आयूंषि तारिषत्॥ अ.वे.4.10.6
4. न ब्राह्मणो हिंसितव्योऽग्निः प्रियतनोरिव।
   सोमो ह्यस्य दायाद इन्द्रो अस्याभिशस्तिपाः॥ अ.वे.5.18.6.

निष्क्रम्यागच्छे'' ति। एतादृशमेनं प्रार्थयति यजमानः- ''लतारूपेण हविर्भवंतं देवतात्मानं त्वां वयं हविषा यजाम'' इति। एवं सोमो वृत्रहन्तेति ज्ञायते[1]।

## गोरङ्गेषु चन्द्रस्थानम्

अथर्ववेदे नवमकाण्डे वृषभदेवताकं सूक्तं विद्यते। मेध्यवृषभस्य भिन्नभिन्नाङ्गेषु भिन्नभिन्नदेवताः भवन्तीति वृषभं प्रशंसति वेदर्षिः। यथा गोशृङ्गयोः प्रजापतिपरमेष्ठिनौ, शिरसि इन्द्रः, ललाटेऽग्निः, कृकाटे यमः, मस्तिष्के राजासोमः, उत्तराधरहन्वोः द्यावापृथिव्यौ, एवमादिक्रमेण षष्ट्यधिकाः देवताः गोरङ्गेषुस्थिताः।[2] अपिच गोभ्यस्सम्पादितेषु तृणेष्वपि राजासोमो व्यवस्थितो भवति[3]।

## गोर्याचने चन्द्रः

''वशा'' इत्याख्या गौः देवतानां विशेषतयाऽभीष्टा। देवतार्थं तादुशीं गां याचमानाय ब्राह्मणाय यजमानः दानं कृत्वा श्रेयानवाप्नोति, अदत्वा तु ब्रह्मोपद्रवादिपापान् लभते। तत्र कथयति सूक्तमिदमेवम् - अग्नीषोमाभ्यां कामाय मित्राय वरुणाय च ब्राह्मणाः मां याचन्ति। अतस्तेभ्यः अदत्वा यजमानः देवै दूरीकृतो भवति[4]।

## पापघ्नौ सूर्याचन्द्रौ

सर्वभैषज्यादिकर्मणि पठ्यमाने सूक्ते सूर्याचन्द्रौ पापघ्नौ निर्दिष्टौ। तत्र वेदर्षिरेवं कथयति। ''अहोरात्रे इदं ब्रूमः सूर्याचन्द्रमसावुभा। विश्वानादित्यान् ब्रूम स्ते नो मुञ्चन्त्वंहसः॥'' इति। वयं अहोरात्रे सूर्याचन्द्रमसौ विश्वानादित्यान् बूमः ''ते अस्मान् अंहसः मुञ्चन्तु'' इति[5]।

---

1. इदं स्वरिदमिदास वाममयं प्रकाश उर्व तरिक्षं।
   हनाव वृत्रं निरेहि सोम हविष्ट्वासंतं हविषा यजाम॥ ऋ.वे.10.124.6;
2. प्रजापतिश्च परमेष्ठी च शृङ्गे इन्द्रः। शिरो अग्नि र्ललाटं यमः कृकाटम्॥
   सोमो राजा मस्तिष्को। द्यौरुत्तरहनुः पृथिव्यधरहनुः॥ अ.वे.9.7.1;2;
3. तृणानि प्राप्तः सोमो राजा॥ अ.वे.9.7.22;
4. अग्नीषोमाभ्याम्। कामाय मित्राय वरुणाय च।
   तेभ्यो याचन्ति ब्राह्मणास्तेष्वा वृश्चतेऽददत्॥ अ.वे.12.4.26;
5. अ.वे.11.6.5;

## अन्नरक्षणे चन्द्रः

अथर्ववेदे स्वर्गौदनसूक्तं विद्यते। तत्र वेदर्षिः स्वर्गे अनेन ओदनेन सह पुत्रादीनां समागमो भवतीति अभिप्रैति। स्वर्गौदनं षष्ठिवर्षानन्तरं फलप्रदं भवतीति, तथा तस्य पक्वं यः करोति सः निधिपति र्भवतीति वर्णयति ऋषिः। प्रागादिसर्वदिक्षु संरक्षणार्थमोदनस्य, जरापूर्वकमृत्युं चाभिलषन् देवताः स्तौति वेदर्षिः। तत्र प्रथमतः दम्पती उद्दिश्य कथयति ऋषिरेवम्। हे दम्पती! प्रतीची दिक् दिक्षु सर्वोत्तमा। तस्यां सोमः अधिपः। स हि सुखदाता च। तमाश्रित्य सुकृतं लभस्व। तस्य परिपाकानन्तरं युवां समुन्नतां स्थितिं लभेताम्[1]। एवं दम्पतीभ्यां कथयन् ऋषिः स्वर्गौदनरक्षकासु सोमस्य स्थानमेवं विवृणोति। स्वर्गौदनस्य उत्तरदिशिरक्षकत्वेन सोमो भवति। स हि तस्य स्वर्गौदनस्योत्तरदिशः अधिपतिः। रक्षणकर्ता स्वजनामकः सर्पः। अशनिः धनुर्धारी[2]।

## कुतो जातस्सोमः

ब्रह्मयज्ञजपे सृष्टि विषयोपदेशात्मकं सूक्तं पठ्यते। तत्र शरीर मध्ये आत्मरूपेण प्रतिष्ठितस्य ब्रह्मणः प्रतिबोधाय यतते ऋषिः। तदर्थं शरीरस्य तत्साधनभूतानां इन्द्रियाणां चाधिष्ठातॄणां प्रश्नप्रतिवचनैः सृष्टिं विवृणोति वेदर्षिः। तत्र सोमस्योत्पत्तिं प्रश्नोत्तरैरेवं विवृणोति। ''कुत इन्द्रः कुतः सोमः कुतो अग्नि रजायत। कुतस्त्वष्टा समभवत् कुतो धाताजायत[3]॥'' इत्येषो हि प्रश्नरूपो मन्त्रः। समाधत्ते तत्रानन्तरमन्त्रेण। ''इन्द्रादिन्द्रः सोमात् सोमो अग्ने रग्नि रजायत। त्वष्टा ह जज्ञे त्वष्टु र्धातु र्धाताजायत[4]॥'' इति। अर्थात् पूर्वकल्पगतेभ्यः इन्द्रादिभ्यो इन्द्रादिदेवताः अस्मिन् कल्पेऽपि समुद्भूताः इति। अतस्सोमोऽद्यतनः पूर्वस्मिन् कल्पे विद्यमानात् समजायतेति ज्ञायते। प्रलयेऽपि सृष्टि हेतूनां अविनाशात् क्रमश सैव सृष्टिः सञ्जायते इति विज्ञायते।

---

1. प्रतीची दिशामिय मिद् वरं यस्यां सोमो अधिपा मृडिता च।
   तस्यां श्रयेथां सुकृतः सचेथा मधा पक्का निमथुना संभवाथ॥ अ.वे.12.3.9.;
2. उदीच्यै त्वा दिशे सोमायाधिपतये स्वजाय रक्षित्रेऽशन्या इषुमत्यै।
   एतं परि दद्म स्तं नो गोपायतास्माक मैतोः। दिष्टं नौ अत्र जरसे नि नेष
   ज्जरा मृत्यवे परिणो ददात्वथ पक्केन सह सं भवेम॥ अ.वे.12.3.58;
3. अ.वे.11.8.8;
4. अ.वे.11.8.9;

## सुभाषितेषु सोमः

1. सोमो हिनोति मर्त्यम् ॥ ऋ.वे.1.18.4.
   यक्ष्यमाणं मनुष्यं सोमो वर्धयति।
2. सोमो न वेधा ॥ ऋ.वे.1.66.10.
   सोमं इव स्त्रष्टा अग्निरिति शेषः। सोमो यथा भोग्यजातं सृजति तथाऽग्निः भोक्तृजातं सृजतीत्यर्थः ॥
3. अभिमातीः सहमानः सोमः ॥ ऋ.वे.3.62.15;
   कर्मविघ्नकरान् शत्रून् सोमः पराभवति ॥
4. सोमं स्वस्ति भुवनस्य यस्पतिः ॥ ऋ.वे.5.52.12.
   भुवनपालकं सोमं स्वस्तये प्रार्थयामः ॥
5. स्वस्ति पंथामनुचरेम सूर्याचंद्रमसाविव ॥ ऋ.वे.5.5215.
   सूर्याचन्द्रमसाविव कल्याणप्रदे मार्गे गच्छामः। यथा सूर्याचन्द्रमसौ निरालंबे मार्गे राक्षसादिभि रनुपद्रुतौ गच्छत स्तथा क्षेमकरं पन्थान मनुचरेम ॥
6. शं नः सोमो भवतु ॥ ऋ.वे.7.35.7;
   सोमोऽस्माकं शान्त्यै भवतु।
7. यच्छंतु चन्द्राः उपमं नो अर्कम् ॥ ऋ.वे.7.39.7;
   आह्लादकाः देवाः अस्मद्भ्यं सर्वोत्कृष्टमन्नं ददतु। अत्र चन्द्रशब्दः आह्लादार्थकः।
8. न वाउसोमो वृजिनं हिनोति ॥ ऋ.वे.7.104.13.
   सोमः पापिनं कदापि न जहाति।
9. क्रतुं नः सोम जीवसे ॥ ऋ.वे.10.25.4;
   सोम! अस्माकं जीवनाय यागादिकं कर्म प्रज्ञां वा धारय।
10. पशुं नः सोम रक्षसि ॥ ऋ.वे.10.25.6;
    सोम! अस्माकं पशुं पालयसि।
11. त्वं नः सोम विश्वतो गोपा अदाभ्यो भव ॥ ऋ.वे.10.25.7.
    सोम! अहिंस्यस्त्वं सर्वतोऽस्माकं रक्षिता भव।
12. त्वं नः सोम सुक्रतु र्वयो धेयाय जागृहि ॥ ऋ.वे.10.25.8.
    सोम! शोभनप्राज्ञस्त्वं अस्माकं मन्त्रदानाय जागहि।

13. सोमेनादित्या बलिनः सोमेन पृथिवी मही। ऋ.वे. 10.85.2
सोमेन देवाः बलिनो भवन्ति। सोमेन पृथिवी महीयते।

14. वध्वश्चन्द्रं वहंतु॥ ऋ.वे. 10.85.31.
स्त्रियः हिरण्यरूपं वहंतु। अत्र चन्द्रशब्दः हिरण्यार्थकः।

15. सोमं राजानमवसेऽग्निं गीर्भि र्हवामहे॥ ऋ.वे.10.141.3.
राजानं सोमं अग्निं च स्तुतिभिः रक्षणार्थं आह्वयामः।

16. सोमः सोमस्य पुरोमाः॥ य.वे.8.49
सर्वप्रेरकः सोमः ऐश्वर्यपूर्णस्य राष्ट्रस्य नेता भवति।

17. मा सोमोऽमृतत्वेन गम्यात्॥ य.वे.9.19.
अमृतमयो भूत्वा सोमः मां उपगच्छतु।

18. सोमो हेतीनां प्रतिधर्ता॥ य.वे.15.3.
सोमो व्याधीनां निवारकः।

19. को वेद चन्द्रमसं यतोजाः॥ य.वे.23.59.
चन्द्रः कुत उत्पन्नः इति कः जानाति।

20. सोमाय हंसान् लभते॥ य.वे.24.22.
सोमाय हंसान् प्राप्नुवामः।

21. यथा सूर्यश्च चन्द्रश्च न विभीतो न रिष्यतः। एवा मे प्राणं मा बिभेः। अ.वे.2.15.3;
सूर्यचन्द्राविव मे प्राणो भयनाशरहितो भवेत्।

22. सोमो वीरुधामधिपतिः स माऽवतु॥ अ.वे.5.24.7.
ओषधीनामथिपतिः सोमो मां रक्षतु।

23. चन्द्रमा नक्षत्रणामधिपतिः स मावतु॥ अ.वे.5.24.10.
नक्षत्राणामधिप श्चन्द्रमाः मां रक्षतु।

24. सोमो युनक्तु बहुधा पयांसि॥ अ.वे.5.26.10.
बहुविधजलानि सोम स्संयोजयतु।

25. आ यं विशन्तीन्दवो वयो न वृक्षमन्यसः॥ अ.वे.6.2.2.
वृक्षं पक्षिण इव अन्नभूताः इन्दवोऽस्मदङ्गेषु प्रविशान्ति॥

26. येन सोम साहन्त्यासुरान् रन्धयासि नः। तेना नो अधिवोचत॥ अ.वे.6.7.2.
सोम! येन बलेनासुरान् अस्मभ्यं वशीकरोसि तेनास्मान् अधिवोचत।

27. पवमानः पुनातु मा क्रत्वे दक्षाय जीवसे। अथो अरिष्टऽतातये॥ अ.वे.6.19.2.
पवमानः सोमः शुभकर्माऽचारणाय समर्थजीवनाय अहिंसाचरणाय मां पुनातु।
अत्र पवमानशब्दः ओषध्यर्थकदेवतार्थकसोमयोः साधारण्येण प्रयुक्तः।
28. अभयं सोमः सविता नः कृणोतु॥ अ.वे.6.40.1.
सोमस्सविताचास्माकं अभयं प्रयच्छताम्।
29. चन्द्रमा नक्षत्रणामीशे॥ अ.वे.6.86.2.
चन्द्रमा नक्षत्राणां ईशः।
30. सोम राजन् सुमनसं मा कृणु स्वस्तये॥ अ.वे.6.100.3;
राजन् सोम! स्वस्तये मां सुमनसं कुरु।
31. यत्र सोमः सदमित् तत्र भद्रम्॥ अ.वे.7.18.2.
यत्र सोमो भवति तत्र कल्याणं भवति।
32. सोमस्त्वा राजाऽमृतेनानुवस्ताम्॥ अ.वे.1.118.1.
राजा सोमः त्वां अविनाशेन तेजसा आवृणोतु।
33. इन्द्रसोमा समघशं समभ्यघम्॥ अ.वे.8.4.2.
इन्द्रासोमौ अनर्थकारिणं पापिनं तिरस्कुरुताम्।
34. सोमो राजाऽधिपा मृडिता च॥ अ.वे.10.1.22.
राजा सोमोऽस्माकं अधिमः मृडिता अर्थात् सुखयिता च।
35. उत्तरात् त्वा सोमः सं ददाते॥ अ.वे.12.3.24.
सोमः त्वां उत्तरदिशः सुरक्षतु।
36. सोमाय पितृमते स्वधा नमः॥ अ.वे.18.4.72.
पितृमते सोमाय स्वधायुक्तं नमो भवतु
37. चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि॥ अ.वे.8.4.89.
सुषुम्णाख्येन किरणेन युक्तः चन्द्रः जलमये आकाशे शीघ्रं धावति।
38. पुर एतु सोमः॥ अ.वे.19.13.9.
शत्रुविनाशिनीसेनायाः अग्रे सोमो गच्छतु।
39. सोमं ते रुद्रवन्तमृच्छन्तु॥ 19.18.3
ते परपीडकाः रुद्रवन्तं सोममुपयन्तु। ततस्ते नष्टाः भवन्तीत्यर्थः।
40. सोमस्त्वा पात्वोषधीभिः॥ अ.वे.19.27.2.
ओषधीभ्य स्सहित स्सोम स्त्वां रक्षतु।

41. चन्द्रमा नक्षत्रैरुदक्रामत् यां पुरं प्रणयामि वः ॥ अ.वे.9.19.4.
पुरस्यास्य रक्षायै चन्द्रमा नक्षत्रै रुदितः।

42. सोम ओषधीभिरुदक्रामत् तां पुरं प्रणयामि वः ॥ अ.वे.9.19.5.
पुरस्यास्य रक्षायै सोमः ओषधीभिः उदितः।

43. त्वा चन्द्रं वर्च ॥ अ.वे.19.26.2.
हिरण्यं त्वां प्रकाशयतु।

44. सोमः पती रयीणां ॥ अ.वे.20.137.6.
धनानां पतिः सोमः।

45. यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह।
चन्द्रो मा तत्र नयतु मनश्चन्द्रो दधातु मे ॥ अ.वे.19.43.4.
कर्मणा तपसा ब्रह्मज्ञानी पुरुषो यत्स्थानं लभते, तत्स्थानं मां चन्द्रो प्रापयतु।
तदर्थंशोभनं मनो मे ददातु चन्द्रः।

46. पयः सोमो ददातु मे ॥ अमृतमयं पयः मे ददातु सोमः। अ.वे.19.43.5.

47. इंदो! त्वे न आशसः। ऋ.वे.9.1.5.
इन्दो! त्वयि अस्माकं आशसनानि।

48. सोमः पवित्रे अस्मयुः ॥ सोमः पवित्रे अभिषिच्यते। ऋ.वे.9.2.5.

49. सना च सोम जेषि च पवमान महि श्रवः ॥ ऋ.वे.9.4.1.
पवमान सोम! महदन्नं प्रयच्छन् यजनीयान् भज, विध्वंसकान् जय।

50. विश्वा च सोम सौभगा ॥ ऋ.वे.9.4.2.
सोम! सर्वाणि सौभाग्यानि अस्मभ्यं प्रयच्छ।

51. अभ्यर्ष स्वायुध सोम द्विबर्हसं रयिं ॥ ऋ.वे.9.4.7.
शोभनायुध सोम! द्यावापृथव्योः स्थानयोः परिवृढं धनमस्मान् अभिगमय।

52. आ पवस्व महीमिषं गोमदिंदो हिरण्यवत्। अश्वावद्वाजवत्सुतः ॥ ऋ.वे.9.41.4.
इन्दो! अभिषुतस्त्वं हिरण्यै रश्वै र्बलैरुपेतुं महदन्नं अस्मभ्यं प्रापय।

एवमादिक्रमेण वेदेषु चन्द्रसम्बन्धीनि सुभाषितानि बहूनि विराजन्ते। अत्र चन्द्रशब्दो हिरण्यार्थे आह्लादार्थे च प्रयुक्तः। सोम-इन्दु-पवमान शब्दाः चन्द्रार्थे ओषधिलतार्थे च सामान्यतया प्रयुक्ताः। अत एव सोमस्य गुणविवेचनेऽपि देवतार्थकलतार्थकसोमयोरभेदेनान्वयः परिदृश्यते।

## सोमस्य गुणाः प्रभावश्च

अत्र सोमश्चन्द्र एव। तस्य हि वेदेषु गणनीयाः गुणाः प्रतिपादिताः। अयं हि बुद्धिमान् ज्ञानी सर्वान् सरलमार्गे प्रवर्तयति। पितृदेवानां देवैस्समं भोगप्रदः। कर्मकर्तृष्वयमुत्तमकर्मकर्ता। चतुरजनेष्वतीव चतुरः। शक्तिमतामपि शक्तिमान्। धनप्रदः शुद्धः सर्वेषामस्माकं प्रियमित्रम्। अर्यमा इव कुशलः[1]। उत्तमपालकः राजा वृत्रहर्ता सर्वेषां हितकरः[2]। अस्माकं जीवनायौषधीरूपो भवति। सत्यपालकः। तरुणजनानां दीर्घजीवनाय बलं भाग्यञ्च प्रयच्छति। पापजनेभ्योऽस्मान् परितः परिरक्षति। अनेन रक्षितो न कदापि नाशमेति। स्तोतैः सुखप्रदाता भवति। गावो यथा क्षेत्रेषु, मनुष्याः यथा स्वसदनेषु सुखिनस्सन्ति तथाऽस्माकं हृदयेषु सन्तोषोत्पादकोऽयं सोमः। कीर्तिमान् अयं हि चन्द्रः। देवानामपि धारणपोषणकर्ता भूत्वा दिवि महीयते। युद्धेष्वपराजितः। सेनासु बलप्रदाता। वृष्टिप्रदः। कष्टकाले संरक्षकः। ऐश्वर्येषु प्रकाशमानः। विजयीचायं चन्द्रोविराजते[3]। सत्यासत्यस्पर्धायां चन्द्रोऽयं सत्यंरक्षति नाशयत्यसत्यम्। पापिनं कदापि न जहाति[4]। रसात्मकस्सोमो वीर्यं धैर्यमायुषं रोगराहित्यं तेजः चतुरतां मृदुक्रोधं शरीररक्षां अनलसतां आहारं उत्तमं पुत्रसन्तानं ददाति[5]। सोमोऽयं सर्वकर्मकर्ता विश्वजित् शत्रुभि र्न कदापि बध्यते। निर्वस्त्रं परितो वस्त्रेणाच्छादयति। रोगिणं सर्वरोगै र्विमोचयति। अन्धस्य दृष्टिप्रदः। पङ्गोः गतिप्रदाता। शरीरनाशकेभ्य श्शत्रुभ्य स्संरक्षको महान् कवचः[6]। सोमोऽयं हृदयस्य सुखाहर्ता। उन्मत्तापनोदकः। वायुरक्षितो भूत्वा शान्तिदायको भवति[7]। अयमुत्तमनियमै र्बद्धः। ऐश्वर्यवान् सर्वाह्लादकः शक्तिमान् पालकः ज्ञानदाता वाग्रक्षकः[8] स्सर्वव्याधीनां निवारकः[9]। एवमनन्ततया प्रतिपादिताः सोमस्य गुणाः प्रभावश्च॥ यो हि सोमः देवतौषधिरूपेण साधारण्यं गतः वेदवाङ्मये तृतीयं स्थानं लभते।

---

1. ऋ.वे. 1.91.1-3;
2. ऋ.वे.1.91.5;
3. ऋ.वे.1.91.6-22;
4. ऋ.वे.7.104.12,13;
5. ऋ.वे.8.48.4-15;
6. ऋ.वे.8.79.1-4;
7. ऋ.वे.8.79.7;
8. य.वे. 5.9;
9. य.वे.15.13;

## सोमगुणवाचकाः केचन वैदिकशब्दाः

| वै. प्रयोगः | शब्दार्थः | साम.सं |
|---|---|---|
| जागृविः | जागरूकः | 1357 |
| सक्षणिः वृत्राणि परि | साहसकः शत्रूणां क्षोभकश्च | 1357 |
| शुक्रः | वीर्यप्रदः | 1357 |
| दिव्यः | द्युलोकवासी | 1357 |
| पीयूषः | अमृतरूपः | 1357 |
| सोमः आव | सोमः रक्षणं करोति | 1358 |
| वर्धनः | बलवर्धकः | 1359 |
| दक्षसाधनः | सामर्थ्यकारकः | 1388 |
| वीरः | पराक्रमयुक्तः | 1395 |
| हरिः | दुःखहारकः | 1395 |
| प्रियः | सर्वैःप्रीयमानः | 1395 |
| कविः | ज्ञानी-दूरदर्शी | 1400 |
| रत्नधा | रत्नधारी | 1408 |
| शूरग्रामः | शूरसमूहेन विराजमानः | 1409 |
| सर्ववीरः | सर्वधा सर्वेषामपि पराक्रमवान् | 1409 |
| सहावान् | शत्रुपराजयकारकशक्तियुक्तः | 1409 |
| जेता | युद्धेषु जयशीलः | 1409 |
| तिग्मायुधः | तीक्ष्णशस्त्रधारी | 1409 |
| क्षिप्रधन्वा | धनुश्शीघ्रचालनसमर्थः | 1409 |
| समत्सु अषाळ्हः | युद्धेषु शत्रुदुर्धर्षः | 1409 |
| पृतनासु शत्रून् साह्लान् | युद्धेषु शत्रून् पलायिता | 1409 |
| वृषा | बलवान् | 1419 |
| सुमेधाः | उत्तमबुद्धिमान् | 1420 |
| तेजिष्ठाः | तेजस्वी | 1424 |
| यशसा यशस्तरः | यशसां यशस्वी | 1401 |
| बभ्रुः | बभ्रुवर्णः | 1444 |

| वै. प्रयोगः | शब्दार्थः | साम.सं |
| --- | --- | --- |
| स्वतवाः | स्वतेजसा तेजोयुक्तः<br>स्वशक्त्या शक्तिमान् | 1444 |
| अरुणः | प्रकाशमानः | 1444 |
| मनसः पतिः | मनसः पतिः | 1444 |
| शुष्मी | बलवान् | 1444 |
| सुमतिः | उत्तम बुद्धिमान् | 1444 |
| रक्षांस्यपघ्नन् | राक्षससंहर्ता | 1439 |
| अमित्रहा | शत्रुसंहारकः | 1447 |
| विश्वचर्षणिः | सर्वेषां हितकरः | 1447 * |
| | | ऋ.क् सं. |
| भुवनस्य पतिः | भुवनस्य पालकः | 5.52.12 |
| अदाभ्यः | केनापि अहिंस्यः | 10.25.7. |
| विश्वगोपा | सर्वतो रक्षिता | 10.25.7. |
| सुक्रतुः | शोभनप्रज्ञः | 10.25.8. |
| क्षेत्रवित्तरः | क्षेत्रस्यातिशयेन लंभकः | 10.25.8. |
| वधूयुः | वधूकामो वरः | 10.85.9. |
| अह्नां केतुः | दिवसानां प्रज्ञापकः | 10.85.19. |
| जायमानः | प्रतिदिनं अह्नामेकैककलाधि-<br>क्येनोत्पद्यमानः | 10.85.19. |
| अमृतस्य लोकम् | अमृतस्थानवन्तम् | 10.85.20. |
| स्योनं | सुखकरं | 10.85.20. |
| आपातमन्युः | आपातितमन्युः | 10.89.5. |
| तृपलप्रभर्मा | ग्रावादिभिःक्षिप्रप्रहारी | 10.89.5. |
| धुनिः | शत्रूणां कम्पयिता | 10.89.5. |
| शिमीवान् | कर्मवान् | 10.89.5. |
| शरुमान् | आयुधवान् | 10.89.5. |
| ऋजीषी | ऋजीषवान् | 10.89.5. |

* श्रीपाद दामोदर सात्वलेकरस्य सामवेदपीठिकातः पु. 17

| वै. प्रयोगः | शब्दार्थः | साम.सं |
|---|---|---|
| हविः संतं | लतारूपेण हविर्भवंतम् | 10.124.6 |
| राज्ञः | राजमानस्य | 10.167.3 |
| ध्रुवं | स्थिरं | 10.173.6 |

एवमादिक्रमेण बहूनि वैदिकपदानि चन्द्रगुणवाचकत्वे प्रयुक्तानि। अत्र हि तानि दिङ्मात्रेणैव एव दर्शितानि। केचनशब्दाः सोमरसान्विताः सन्त्यपि, सोमरससेवनेन तद्रसाधिदेवतायाः चन्द्रस्य गुणाः प्रवर्तन्ते मानवेषु इति च विज्ञायते। अतः चन्द्रस्य पृथिव्यां प्रतिनिधि स्सोमलतेति सर्वधा द्वयोरभेदत्वेनैव वेदवाङ्मये सोमेन्दुशब्दौ प्रयुक्तौ तद्गुणवाचकाश्च तथैव स्वीकृताः। एवं पवमानशब्दोऽपि विशेषणवाचकतया तथैव सोमलतासोमयोरर्थेऽपि तत्र तत्र प्रयुक्तः।

विशदतया परिशीलने वेदवाङ्मये चन्द्रशब्दः आह्लदार्थे हिरण्यार्थे एवं देवताविषयकचन्द्रार्थे च प्रयुक्तः। चन्द्रमशशब्दः सर्वथा देवतार्थे एव प्रयुक्तः। एवं क्वचित् गन्धर्वशब्दोऽपि यौगिकरूपेण चन्द्रार्थे प्रयुक्तः। एतादृशस्यास्य स्थानं ऋग्वेदो विवृणोत्येवम्।

## नक्षत्राणां निकटे चन्द्रः

सत्येन ब्रह्मणाऽनन्तात्माना अधस्स्थिता भूमिरुपरिप्रतिष्ठिताऽभवत्। एवं सूर्येण द्यौरुत्तभिता, एषो हि स्वस्थानं दिवं दधार। तथा यज्ञेन अदितेः पुत्राः देवाः तिष्ठंति। सोमस्तु द्युलोके देवानां आप्यायनकारी भूत्वा अधितिष्ठति। ततः एव सोमेन देवाः बलिनो भवन्ति। एवमाहुत्यात्मना अग्नौ हुतेन सोमेन मही महती भवति। एषो हि सोमः नक्षत्राणामुपस्थाने द्युलोके आहितः आसीत्[1]। एवं देवतारूपस्य सोमस्य स्थानं नक्षत्राणां निकटे द्युलोके विराजमानं विद्यत इति विज्ञायते।

---

1. सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः।
   ऋतेनादित्यास्तिष्ठंति दिवि सोमो अधि श्रितः॥
   सोमेनादित्या बलिनः सोमेन पृथिवी मही।
   अथो नक्षत्राणामेषमुपस्थे सोम आहितः॥ ऋ.वे.10.85.1.2;

## *निष्कर्षः*

संस्कृतसाहित्यस्य मूलभूतं वेदवाङ्मयम्। तस्मादेव भारतीयो धर्मः प्रादुर्भूतः प्रचलति। स्तोत्रकर्मगानकामनापूरकत्वेन तच्च वाङ्मयं चतुर्धा विभक्तम्। वेदत्रयी पारलौकिकसुखसन्धायिका। आथर्वणं त्वैहिकसुखभोगसन्धायकम्।

चन्द्रार्थकपदेषु सोमशब्दः ऋग्वेदे प्रधानतया प्रयुक्तः। तथैवेन्दु शब्दोऽपि। एतौ शब्दौ ऋग्वेदे सोमलतापरत्वेन चन्द्रपरत्वेन च प्रयुक्तौ। सोमरससेवनेन तद्रसाधिदेवताया श्चन्द्रस्य गुणाः प्रवर्तन्ते मानवेष्विति पृथिव्यां तत्प्रतिनिधित्वेन स्वीकृता सोमलता। अत एव सोमशब्दः ओषध्यर्थे देवतार्थे चाभिन्नत्वेनैव प्रयुक्तः। एवमेवेन्दुशब्दोऽपि सर्वथा सोमपदसाम्यं लभते वेदेषु। यजुरथर्ववेदयोः चन्द्रचन्द्रमशशब्दौ चन्द्रार्थे प्राचुर्यमुपगतौ। आह्लादार्थे तथा हिरण्यार्थे चन्द्रशब्दः प्रयुक्तो वेदेषु। चन्द्रमशशब्दस्तु सर्वदा चन्द्रार्थे एव प्रयुक्तः। गो-गन्धर्व-पवमानशब्दाः चन्द्रार्थे यौगिकरूपेण व्याख्याताः।

विश्वपुरुषस्य मनस श्चन्द्रमा स्समुत्पन्नः। अयं हि द्युलोके नक्षत्राणां निकटे विराजते। दिनप्रवर्तकेष्वन्यतमोऽयं चन्द्रः प्रतिदिनमुत्पद्यमानः ऋतून् मासद्वयपरिमाणिनः करोति। देवानां यज्ञभागं सर्वेषामानान्दं च कल्पयति। देवानामन्नभूतस्यास्य कलाः पिबन्ति देवाः। ताः कलाः पूरयन् वायु स्सोमस्य रक्षको भवति। एवमेकैक-कलावृद्धिक्षयाभ्यां चन्द्रो मासस्य, तै र्मासै स्संवत्सरस्य च कर्ता भवति।

देवताद्वन्द्वे सोमापूषणौ, इन्द्रासोमौ, सोमारुद्रौ, सूर्याचन्द्रमसौ वेदवाङ्मये विख्याताः। पूषेन्द्ररुद्रसूर्याग्निभि श्चन्द्रः प्राणिनां सर्वकामद श्शत्रुनाशकस्तथौषधीप्रदश्च भूत्वा द्युरन्तरिक्षपृथिवीनां स्रष्टा च भवति।

अयं हि चन्द्रो भुवनपालकः। यशोधनदायी चन्द्रो मनुजस्य दातृगुणं कान्तिं तथोत्तमविद्यां पालनासामर्थ्यं पालनाधिकारं वीर्यमारोग्ययुक्तं दीर्घजीवनं च ददाति। जाग्रत्स्वप्नसुषुप्तितुरीयरूपचतुरवस्थायुक्तानां प्राणिनामुज्जीवको भवति चन्द्रः। अयं हि चन्द्रो वीरुधां पतिः। अमृतात्मकोऽयं जलसारभूत स्सन् देवानामुपभोगाय भवति। अप्सरसां मध्ये गन्धर्व इव निशि नक्षत्राणां मध्ये चन्द्रोऽयं विराजते। तपन-हरण-दीपन-शोकद-तैजसेति पञ्चशक्तय श्चन्द्रमसि प्रकाशन्ते। ताभि श्शक्तिभिरयमस्मच्छत्रून्

तपति हरति विनाशयति शोकाकुलान् तेजोहीनान् च करोति। देवतासु पराक्रमवन्तमेनं वृत्रहननायाह्वयति वरुणः। प्रातस्स्मरणीयोऽयं चन्द्रो देवताश्रेष्ठत्वेन प्रतिपादितो वेदेषु। अयमिवास्योपासको भयमृत्युविमुक्तो भवति। एवं हि चन्द्रो वेदवाङ्मये सर्वकामनानां पूरकत्वेन प्रतिपादितः।

स्वदुहितरं सूर्यां चन्द्रमसे दत्तवान् सूर्यः। चन्द्रस्य भ्राता कपित्थः। अस्य दायादो ब्राह्मणः। शङ्खमणिरस्मादुत्पन्नः। गोरङ्गेषु मस्तिष्के, तथा गोभ्यस्सम्पादितेषु तृणेषु च चन्द्रो भाव्यते वेदर्षिणा। ब्राह्मणमुखेन कामाग्निवरुणमित्रैरयं चन्द्रो यजमानं गां याचते। तेभ्योऽदत्वा यजमानो देवैर्दूरीकृतो भवति। चन्द्रोऽयं सूर्येण साकं प्राणिनां पापं हरति। प्राणिना माहारभूत मन्नं चायं रक्षति, तेभ्य स्वर्गौदनं प्रयच्छन् लोकेष्विहपरेषु तेषां पालको भवति। एतादृशमेनं प्रतिकल्पं जायमानं कथयति वेदः।

चन्द्रविषयकानि सुभाषितवाक्यनि बहूनि वेदेषु समुपलभ्यन्ते। एवं, बहूनि चन्द्रगुणवाचकानि पदानि वैदिकानि तत्प्रभावसूचकानि च भूत्वा विराजन्ते। देवतौषधिरूपेण साधारण्यंगतस्सोमात्मकोऽयं चन्द्रः वेदवाङ्मये तृतीयं स्थानं लभते॥

# तृतीया कला

# ब्राह्मणेषु चन्द्रः

## प्रस्तावना

संहिताभागं सम्यक् ज्ञातुं ज्ञातं तं बहुविधकर्मसु विनियोक्तुं तत्र तत्र साङ्केतिकार्थान् विवृण्वन्तः ब्राह्मणग्रन्थाः प्रादुर्भूताः। एते गद्यमयाः एव। "मन्त्रब्राह्मणो यज्ञस्य प्रमाणं" इति "मन्त्रब्राह्मणात्मको वेदः" इति आपस्तम्बः ब्राह्मणभागेन सह वेदान् निर्धारितवान्[1]। अत्र ब्रह्मशब्दः संहिताभागं निर्दिशति[2]। अतः चतुर्वेदात्मक संहिताभागस्य व्याख्यानरुपेण तत्र तत्र यज्ञेषु विनियोगं दर्शयन्तः ब्राह्मणग्रन्थाः विद्यन्त इति केचन वदन्ति[3]। केचन ब्राह्मणपदमन्यथापि विवृण्वन्ति। ब्रह्मा–यागनिर्वाहकः। अयमेव ब्राह्मणः। चतुर्वेदाध्ययनं कृत्वा यज्ञस्वरूपं सम्यक् ज्ञात्वा प्रवर्तयत्ययम्। एवं ब्रह्मणा सशास्त्रीयेण प्रतिपादितं यागानुष्ठानविधानं ब्राह्मणमिति दयानन्द–सत्यव्रत–सामिश्र प्रभृतिभारतीयाः, जूलियस् एग्लिंग् (Julius Eggeling) मार्टिन् हाग् (Martin Haug) प्रभृतिपाश्चात्यविद्वांसश्च भावयन्ति[4]।

ऋग्वेदादिसंहितानां प्रतिप्रधानशाखं प्रत्येकतया ब्राह्मणग्रन्थाः सन्तीति विज्ञायते। तत्र ऋग्वेदस्य प्रधानतया विद्यमानैकविंशतिशाखानां एकविंशतिब्राह्मणानि भवेयुः। तथापि ऐतरेय - कौषीतकि - पैंगि - बह्वृच - आश्वलायन - गालव - इति षड्ब्राह्मणान्येव सम्प्रति सन्तीति ज्ञायते। तत्रापि सम्प्रति ऐतरेय – कौषीतकीति

---

1. सं.सा.च.(ते)पु.43. 2. ब्रह्म वै मन्त्रः श.ब्रा.7.1.1.5.
3. मन्त्रो मननात् ब्राह्मणमभिद्यानात् कपर्दिव्याख्या. आप.श्रौ.सू.32.
4. ब्रह्म वै ब्राह्मणः। श.ब्रा। समानार्थावेतौ ब्रह्मन् शब्दो ब्राह्मणशब्दश्च। महा.5.1.1. चतुर्वेदविद्भिः ब्रह्मभिः ब्राह्मणैः महर्षिभिः प्रोक्तानि यानि वेदव्याख्यानानि तानि ब्राह्मणानि। दयानन्दः ऋ.भा.भू.॥ आ.वि.स.पु.3, 4.

ब्राह्मणद्वयमेव समुपलभ्यते। अन्यानि नाममात्रावशिष्टानि। अत्र ऐतरेयब्राह्मणस्यैव बह्वृचब्राह्मणमिति नामान्तरमिति केचन भावयन्ति।

कृष्ण - शुक्ल भेदेन यजुर्वेदस्य शाखाद्वयं विद्यते। तत्र कृष्णयजुर्वेदीयतैत्तिरीय-शाखायाः तैत्तिरीयं ब्राह्मणमस्ति। माध्यन्दिन - काण्वभेदेन शाखाद्वयेन विराजितस्य शुक्लयजुर्वेदस्य माध्यन्दिनशतपथब्राह्मण - काण्वशतपथब्राह्मणमिति ब्राह्मणद्वयमस्ति। इतोऽपि विद्यमानाः यजुर्वेदीयाः चरक - श्वेताश्वतर - काठक - मैत्रायणी - जाबाल - खाण्डिकेय - औखेय - हरिद्रविक - तुमुरु - आह्वरक - कङ्कति - छागलेयेति द्वादशब्राह्मणग्रन्थाः कालगर्भे लीनाः आसन्॥

सामवेदस्य तलवकार-ताण्ड्य-छान्दोग्येति ब्राह्मणत्रयम्। सामविधान देवताध्याय -वंश-संहितोपनिषदिति चत्वारि सन्त्युपब्राह्मणानीति, भाल्लवि-कालबवि-रौरुकि - शाट्यायनेति ब्राह्मणचतुष्टयं तु नष्टमिति विज्ञायते। अत्र तलवकारब्राम्हनस्य जैमिनीयब्राह्मणमिति, ताण्ड्यब्राह्मणस्य पञ्चविंशब्राह्मणं तथा प्रौढब्राह्मणमिति, छान्दोग्यब्राह्मण्स्य मन्त्रब्राह्मणमिति नामान्तराणि प्रथितानि। अथर्ववेदस्यैकमेव ब्राह्मणं गोपथमिति[1]। एवं विस्तृते ब्राह्मणवाङ्मये विध्यर्थवादात्मके सम्प्रति चन्द्रप्रस्तावं परिशीलयामः॥

## चन्द्रस्य लयः उत्पत्तिश्च

पुरोहितसहितो राजा शत्रुक्षयार्थं कञ्चित् प्रयोगं करोति। स च प्रयोगः ब्रह्मणः परिमर इति। ब्रह्मशब्देनात्र वायुर्विवक्षितः। तस्य वायोः परितः विद्युदादीनां मरणप्रकारः परिमर इत्युच्यते। तद्भावनारूपस्यास्य कर्मविशेषस्य तदेव नामधेयम्। यः पुमान् ब्रह्मणः परिमरं यदा मनसा भावयति तदैनं परितः समवस्थितासु सर्वासु दिक्षु द्वेषं कुर्वन्तश्शत्रवो म्रियन्ते। इदानीमेनं जात्या सपत्नाः तेऽपि परितो म्रियन्ते।

योऽयं वायुरन्तरिक्षे सञ्चरत्येनं परितो विद्युद् - वृष्टिः - चन्द्रमाः - आदित्यः - अग्निरिति पञ्चदेवताः परिम्रियन्ते। तत्र या वै विद्युदस्ति सा प्रकाशं कृत्वा वृष्टिमनुप्रविशति। अत एव साऽन्तर्धीयतेऽस्माभि र्न दृश्यते। तां वृष्टौ प्रविष्टां विद्युतं क्व गता कुत्र स्थिता मृतेति मनुष्याः निश्शेषेण न जानन्ति। लोके कश्चिन्मनुष्यो यस्मिन् क्षणे म्रियते तस्मिन्नेव क्षणेऽन्यै र्न दृश्यते। यद्यपि देहमात्रं पश्यन्ति तथापि जीवात्माणं न जानन्त्वेव। तथैव विद्युद्विनाश इति द्रष्टव्यः। ततः इयं विद्युदिव मदीय

1. आ.वि.सं. ते पु.7,8.

शत्रु र्म्रियतां स पुनः केनापि न दृश्यताम्। विचार्यापि क्व गतः ? क्वाऽस्ते ? इति तं शत्रुं तदीया बान्धवो निश्शेषेण मा जानन्त्विवति जापकः ध्यानं करोति तदनु सद्यश्शत्रुस्तथैव नाशमेति। एवं विद्युत् वृष्टिं प्रविश्य म्रियते। तथैव वृष्टि श्चन्द्रमसमनुप्रविशति[1]। चन्द्रमा अमावाश्यायामादित्यमनुप्रविशति[2]। आदित्यो यदाऽस्तमेति तदाऽग्निं प्रविशति। अग्निश्चोपशमनं प्राप्नुवन् वायुं प्रविशति। एवं विद्युदादीनां लयं उत्तरोत्तरे कथयन् पञ्चनां तेषामन्ततो वायौ लीनतां सूचयति। एवञ्च क्रमशोऽग्न्यादीनां विद्युदन्तानां क्रमेणोत्पत्ति र्वायो र्भवति। तदानीं जापकः अयमग्नि र्वायो स्सकाशात् सुखेन जायतां मदीयश्शत्रु र्मोत्पद्यतामित्येवं क्रमेण जपति। एवं वायोरग्निः, अग्नेस्सूर्यः सूर्याच्चन्द्रमाः[3], चन्द्रमसो वृष्टिः[4], वृष्टेर्विद्युदुत्पद्यन्ते॥

अत्र पञ्चदेवतासु चन्द्रमा मध्यस्थः आसीत्। अस्य वृष्टिसूर्ययोरन्तरालत्वेन वृष्टिधारणा, सूर्यात् प्रकाशश्च प्रतीयेते। अत्र येयं वृष्टिरस्ति सेयं वृष्ट्वा स्वयमाप्यमण्डलरूपं चन्द्रमसमनुप्रविशति। चन्द्रमा तु अमावास्यायां तिथौ साकल्येनादित्यमनुप्रविशति। सोऽयं शुक्लपक्षप्रतिपद्यादित्याज्जायते। एवञ्च जलमये चन्द्रमण्डले प्रविष्टा वृष्टिः कालान्तरे चन्द्राज्जायत इति विज्ञायते ऐतरेयब्राह्मणात्।

---

1. वृष्टि वैं वृष्ट्वा चन्द्रमसमनुप्रविशति सान्तर्धीयते तां न निर्जानक्ति यदा वै म्रियतेऽधान्तर्धीयतेऽथैनं न निर्जानन्ति स बूयाद्वृष्टेर्मरणे द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति क्षिप्रं है वैनं न निर्जानन्ति इति।
ऐ.ब्रा.40-5
2. चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति सोऽन्तर्धीयते तं न निर्जानन्ति यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति स बूयात् चन्दरमसो मरणे ..
ऐ.ब्रा. 40.5
3. आदित्याद्वै चन्द्रमा जायते तं दृष्ट्वा ब्रूयाच्चन्द्रमा जायतां मा मे द्विषञ्जन्यत एव पराङ्प्रजिष्यत्वितो हैव पराङ्प्रजिष्यति। इति॥ ऐ.ब्रा. 40.5
4. चन्द्रमसो वै वृष्टिर्जायते तां दृष्ट्वा बूयाद्वृष्टिर्जायतां मा मे द्विषन् जन्यत एव .
ऐ.ब्रा. 40.5

## प्रजापतेः चन्द्रः

ऋग्वेदीये शाङ्खायनब्राह्मणे चन्द्रस्योत्पत्तिः प्रजापतेः कथिता विद्यते। प्रजातिकामः प्रजापतिस्तपोऽतप्यत। तस्मात् तदानीं अग्निः - वायुः - आदित्यः - चन्द्रमाः - उषेति पञ्चाजायन्त। तदनु प्रजापतिः यूयमपि तप्यध्वमिति तानवोचत्[1]। तेऽदीक्षन्त। तदानीं उषाः प्राजापत्याप्सरो रूपं कृत्वा पुरस्तात् प्रत्युदैत्। तस्यामेतेषां मनः समापतत्। ते रेतोऽसिञ्चन्त। ते प्रजापतिं पितरमेत्याब्रुवन् रेतो वा असिञ्चाम। स प्रजापतिः हिरण्मयं चमसमकरोत्। इषुमात्रमूर्ध्वमेवं तिर्यञ्च तस्मिन्नेतत्समसिञ्चत्। तत उदतिष्ठत् सहस्रपात् सहस्रेण प्रतिहिताभिः सहस्राक्षः।

## ब्रह्मणो मनसः

गौपथब्राह्मणे तु चन्द्रस्योत्पत्तिरेवं व्याख्याता। ब्रह्मणः भृग्वादि जनद् व्याहृतिपर्यन्तोत्पत्तिस्समभवत्। ततोऽङ्गिरसः प्रशस्तिः, दिग्भ्यः पञ्चानां वेदानां, तेभ्यः पञ्चानां व्याहृतीनां निर्मितिः, आवत् परावद्भ्यः ''शम्'' महाव्याहृतेरुत्क्रान्तिः समजायत। ततः स ब्रह्मा भूयोऽश्राम्यत्, भूयोऽतप्यत, भूय आत्मानं समपतत्। स मनसा एव चन्द्रमसं निरमिमीत[2]। एवं नखेभ्यो नक्षत्राणि, लोमभ्यः ओषधिवनस्पतीन्, क्षुद्रेभ्यो प्राणेभ्योऽन्यान् बहून् देवान् सृष्टवान्। एवमत्राथर्ववेदीये गोपथे ब्राह्मणे ब्रह्मणो मनसः चन्द्रमसः समुत्पत्तिस्सूचिता॥

## वकारमात्रया चन्द्रमसः प्रभवः

पुष्करे प्रादुर्भूतः ब्रह्मा केनाहमेकेनाक्षरेण सर्वांश्च कामान्, लोकान् सर्वांश्च, देवान् सर्वांश्च, वेदान् सर्वांश्च, यज्ञान् सर्वांश्च, शब्दान् सर्वांश्च, सर्वांश्च व्युष्टीः, सर्वाणि च भूतानि स्थावरजङ्गमान्यनुभवेयमिति चिन्तामापेदे। स ब्रह्मचर्यमचरत्। तदनु ''ओं'' इत्येतदक्षरमपश्यत्। चतुर्मात्रात्मकस्य तस्य वकारमात्रया आपः, चन्द्रमसं,

---

1. प्रजापतिः प्रजातिकामस्तपोऽतप्यत तस्मात्तप्तात्पञ्चाजायन्ताग्निर्वायुरादित्यश्चन्द्रमा उषाः पञ्चामी तानब्रवीद्यूयमपि तप्यध्वमिति ... श.ब्रा. 6.1
2. स मनस एव चन्द्रमसं निरमिमीत॥ गो.ब्रा.1.1.12

अथर्ववेदं, नक्षत्त्राणि, ओमिति स्वमात्मानं, जनदित्यङ्गिरसामानुष्टुभं छन्दः, एकविंशं स्तोमं, दक्षिणां दिशं, शरदं ऋतुं, मनः, अध्यात्मं, ज्ञानं, ज्ञेयमितीन्द्रियाण्यन्वभवत्।[1]

## प्रजापतिना चन्द्रसृष्टिः

प्रजापतिरिन्द्रमसृजत। तञ्च देवानामधिपतिं चकार। देवाधिपत्ये स्थापितस्येन्द्रस्यापेक्षितं कार्यं किम्? किम्? इति स इन्द्रमपृच्छत्। परमाह्लादकं तेजः मदर्थमाहरेत्येवं बालवत् प्रलापं कृतवानिन्द्रः। ततः प्रजापतिः आह्लादवाचि[2] चन्द्रशब्दोच्चारणात्, स्ववाचि "अस्मद्" शब्दोच्चारणाच्च, तदक्षरसदृशं 'चन्द्रमा' नाम्ना चन्द्रं सृष्टवान्॥[3]

## अण्डात् चन्द्रोत्पत्तिः

माध्यन्दिने शतपथब्राह्मणे सृष्टिनिरूपणे प्रजापतिकर्तृका चन्द्रमसः सृष्टिरेवं विद्यते। तत्र चन्द्रोत्पत्तिविषये माध्यन्दिनमुनिरेवं वक्ति -- "सोऽकामयत। भूय एव स्यात्। प्रजायेतेति स आदित्येन दिवं मिथुनं समभवत्। तत् आण्डं समवर्तत। तद् अभ्यमृशत् रेतो विभृहीति। ततश्चन्द्रमा असृज्यत्। एष वै रेतः। अथ यदश्रु संक्षरितमासीत्, तानि नक्षत्त्राण्यभवन्। अथ यः कपाले रसो लिप्त आसीत् ता अवान्तर दिशोऽभवन्। अथ यत् कपालमासीत् ता दिशोऽभवन्।" इति अस्यां ऋचि चन्द्रोत्पत्तिरण्डाज्जाता इति वर्णितम्[4]॥

## मनसः चन्द्रः

जैमिनीयोपनिषद् ब्राह्मणे तु ब्रह्मणः वागादिषु अग्न्यादि देवानां सम्भूतिं कथयन्, "अथ यत्तन्मन आसीत् स चन्द्रमा अभवत्" इति ब्रह्मणो मनसः चन्द्रमसः सम्भूतिः कथिता। तत्र हि वाग् अग्नित्वेन, मनः चन्द्रमस्त्वेन, चक्षुः आदित्यत्वेन श्रोत्रं दिशस्त्वेन, अपानः बृहस्पतित्वेन, प्राणः प्रजापतित्वेन, समभवन् प्रजापतेरिति विपुलीकृतम्[5]॥

---

1. गो.ब्रा.1.1.20. . .
2. चन्द्रमाह्लादकरं तेजो मीयतेऽत्रेति चन्द्रमाः॥ तै.ब्रा.सा.भा.2.2.10.3,
3. स चन्द्रमाहरेति प्रालपत्। तच्चन्द्रमसश्चन्द्रमस्त्वम्। तै.ब्रा.2.2.10.3,
4. श.ब्रा.6.1.2.4.पश्यतु चं.गो.वि.पु.9,
5. जै.उ.ब्रा.2.1.2

## वृत्रतः चन्द्रनिर्माणम्

गुरोरभावे त्वष्टृसुतो विश्वरूपः देवानां पौरोहित्ये इन्द्रेण नियुक्तः। परं स यज्ञे देवेभ्यः आहुतिं वितरन् मध्ये मध्ये दानवेभ्योऽपि आहुतिमदात्। इन्द्रेणेदं रहस्यं विज्ञाय तत्र स्थितः सोमपूरितः कलशः शोषितः। परममन्त्रैः पीतस्सोमः परिपक्वतां न गतः। मुखं विहाय सः सोमोऽन्यस्माद्बहिर्निर्गतः। अस्मादेव कारणात् इन्द्रस्य सौत्रामणिरिति नाम समभवत्। पश्चादिन्द्रः तस्य शिराणि चिच्छेद। विश्वरूपस्य त्रीणि मुखान्यासन्। एकेन मुखेन स सोमपानमकरोत्। द्वितीयेन मुखेन सुरापानं, तृतीयेन च भोजनमकरोत्। शिरश्छेदनानन्तरं, येन मुखेन सः सोमपानमकरोत् तस्मात् मुखात् कपिञ्जलः, तथाच येन मुखेन सः सुरापानमकरोत् तस्मात् मुखात् कलविङ्कः, येन मुखेन चान्नाहारमकरोत् तस्मात् मुखात् तित्तिरिश्चेति समुत्पन्नाः। एवं स्वसुतं विश्वरूपं विनष्टं दृष्ट्वा त्वष्टा ह्यत्यन्तरुषाऽभिचारात् यज्ञात् वृत्रं समुत्पादितवान् विनाशाय हि इन्द्रस्य। वृत्रः अग्नीषोमौ स्वोदरीकृत्य तयोः प्रभावेन स्वशरीरं विस्तारयन् देवानाच्छादयामास। पश्चादिन्द्रः अग्नीषौमावुक्तवान् यत् कथं युवां तस्य शरीरं वर्धयथ? भवन्तौ तु अस्माकं सहायकौ स्तः। तर्हि कथं राक्षसानां साहाय्यं कुरुथः? अग्नीषोमावुक्तवन्तौ यदयमावयोः स्वभावो वर्तते। यत्रावयोः निवासो भवति तत्रैव वृद्धिर्भवति। अत इदानीमस्य रक्षसः वृद्धिर्भवति। यदि, एवं न वाञ्छन्ति भवन्तस्तर्हि शीघ्रमेव नौ अस्योदरात् बहिः कुर्वन्तु। अनन्तरमिन्द्रः एकादशकपालयुक्तेन हव्येन यज्ञञ्चकार। तस्य प्रभावेनाग्नीषोमौ तस्योदरात् बहिः निर्गतवन्तौ। तौ प्राप्य देवाः प्रफुल्लिताः बभूवुः।

एवं पुनः शक्तिसम्पन्नाः भूत्वा देवाः वृत्रेण युद्धं चक्रुः। वर्षानन्तरं वृत्रः इन्द्रेण पराजितः। आसन्नमृत्युमात्मानमवलोक्य वृत्रेणोक्तं "हे इन्द्र! इदानीमहं आसन्नमरणोऽस्मि। अतः त्वमिदानीमीदृशीं व्यवस्थां कर्तुं प्रार्थये, यया मम शरीरस्य कश्चिदंशोऽपि व्यर्थो न भवेत्" इति। इन्द्रेणोक्तं यत्तथैव भविष्यति, त्वमद्य प्रभृति देवानां सम्बन्धि भविष्यसि। तदनुसृत्य तस्योत्तमाङ्गेन चन्द्रस्य निर्माणं कृतं, अपराङ्गेण लतावीरुधां जीवानाञ्च रचना कृता इन्द्रेण। चन्द्रमसि सोमभागस्य स्थापनमपि कृतम्। अस्मादेव कारणात् देवाश्चन्द्रलोकं सोमपानार्थं गच्छन्ति[1]॥

---

1. श.ब्रा.1.6.3.1-17.पश्यतु चं.गो.वि.पु.217.

## अथर्वणां देवता चन्द्रमाः

ऋग्यजुस्साम्नां क्रमशः अग्नि वायु आदित्याः देवताः। अथर्वणां तु चन्द्रमा देवतम्। तदेव ज्योतिः। सर्वाणि छन्दांसि, आपः स्थानं विद्यते[1]।

## ब्रह्मा - चन्द्रमाः

यज्ञेषु होता - अध्वर्युः उद्गाता - ब्रह्मेति - चत्वारः प्रधानाः। कदाचित् सोमेन यक्ष्यमानो प्रजापतिः वेदानुवाच हि कं वो होतारं वृणीय? कमध्वर्युं? कमुद्गातारम्? कं ब्रह्माणमिति। ते ऊचुः। ऋग्विदमेव होतारं, यजुर्विदमध्वर्युं, सामविदमुद्गातारं, अथर्वाङ्गिरोविदं ब्रह्माणं वृणीष्वेति। एवञ्च ते ऊचुः - ऋग्विद् होता हौत्रं जानाति। अग्निर्होता भवति। पृथिवी च ऋचामायतनं, देवता अग्निः। गायत्रं छन्दो, भूरिति शुक्रं भवन्ति। अपि च यजुर्विदध्वर्युः आध्वर्यवं वेत्ति। वायुरध्वर्युः भवति। अन्तरिक्षं यजुषामायतनं भवति। वायु र्देवता। त्रैष्टुम् छन्दः। भुव इति शुक्रम्। एवं हि सामवेत्ता औद्गात्रं वेत्ति। आदित्यः उद्गाता भवति। द्यौः साम्नामायतनम्। आदित्यो देवता। जागतं छन्दः। स्वरिति शुक्रम्। एवमेव अथर्वाङ्गिरोवित् ब्रह्मत्वं वेत्ति। चन्द्रमा ब्रह्मा भवति। वैद्युतश्चोष्णिक्काकुभे छन्दसी। ओमित्यथर्वणं शुक्रं, जनदित्यङ्गिरसाम्[2]॥

## दीक्षितः - चन्द्रमा :

सर्वलोकाधारः गृहपतिः प्रथमतः यदा दीक्षितो भवति तदा दीक्षितानां ब्रह्मोद्गातृहोत्रध्वर्यूणां चन्द्रादित्याग्निवायवोऽधिदैवत्वेन, मनश्चक्षुर्वाग्प्राणाः अध्यात्मत्वेन भवन्ति। तत्र चन्द्रमा अधिदैवं भूत्वा ब्रह्माणं दीक्षयति। मनोऽध्यात्मं भवति। मनसैव तदोषधीः संदधाति। तद्यथा ओषधीर्वेद, स एव ब्रह्मौषधीस्तदनेन लोकेन संदधाति। तस्मादेतावन्तरेणान्यो न दीक्षेत। स यदेतावन्तरेणान्यो दीक्षेत इमं तं

---

1. अथर्वणां चन्द्रमा देवतं, तदेव ज्योतिः, सर्वाणि छन्दांसि, आपः स्थानम्। "शं नो देवीरभिष्टय" इत्येवमादिं कृत्वाथर्ववेदमधीयते॥ गो.ब्रा.1.1.29.
2. अथर्वाङ्गिरो विदमेव ब्रह्माणं वृणीष्व। स हि ब्रह्मत्वं वेद। चन्द्रमा वै ब्रह्मा। आपो भृग्वंङ्गिरसामायतनं, चन्द्रमा देवता, वैद्युतश्चोष्णिक्काकुभे छन्दसी। ओमित्यथर्वणं शुक्रम्। जनदित्यङ्गिरसाम्॥ गो.ब्रा.1.2.24.

लोकमोषधिभिः व्यापादयेत्। उच्छोषुका ह स्युः। तस्मादेतावन्तरेणान्यो न दीक्षेत[1]।

## भृगुषु चन्द्रः

चन्द्रमा द्विपाद् भवति। तस्य पूर्वपक्षापरपक्षौ पादौ भवतः। अपि चायं अप्सु चरति। तासामोषधिवनस्पतयः काण्डानि भवन्ति। अद्भिः कर्माणि प्रवर्तन्ते। ज्योतिषा धूमायमानामिमां पृथिवीं वृष्टिः शमयति। एवञ्च यज्ञोऽद्भिरेव प्रवर्तते, अप्सु संस्थाप्यते च। एवं ब्रह्मा भृग्वंगिरोभिर्व्याहृतिभिः यज्ञस्य विरिष्टं शमयति। अग्निरादित्ययम इत्येते हि अङ्गिरसः। एते इदं सर्वं समाप्नुवन्ति। वायुरापश्चन्द्रमा इत्येते भृगवः। एते इदं सर्वं समाप्यायन्ति[2]।

## सोमस्य पत्नी

"सूर्येति" नामधेया सवितु र्दुहिता विद्यते। सा स्नेहातिशयेन प्रजापतेः दुहितेति कथ्यते। तां प्रजापतेः दुहितरं सावित्रीं सूर्यां विवाहार्थमभिलषन्तो देवाः प्रजापतेः सकाशमागच्छन्। स च प्रजापतिरेवं नियममकरोत्। यो वरः आश्विनशास्त्रमन्त्रान् एक एव पठति तस्मै इमां दास्यामि इति प्रतिज्ञातवान्। तदनुसृत्य राज्ञे सोमाय प्रजापतिस्स्वदुहितरं दातुमुद्युक्तवान्। एषैव सुषुम्नाख्यारश्मिरिति मेऽभिप्रायः। आख्यायिकैषा ऐतरेयब्राह्मणगता[3]।

---

1. अथ ब्रह्माणं दीक्षयति। चन्द्रमा वै ब्रह्माधिदैवं मनोऽध्यात्मम्॥ गो.ब्रा.1.4.2, अथ ब्रह्माणन्दीक्षयति। चन्द्रमा वै ब्रह्मा सोमो वै चन्द्रमा सौम्या ओषधयः ओषधीस्तदनेन लोकेन सन्दधाति तस्मादेतावन्तरेणान्यो न दीक्षैत स यद्वैतावन्तरेणान्यो दीक्षेतौषधीस्तदनेन लोकेन नानुंकुर्यादुच्छोषुका ह स्युस्तस्मादेतावन्तरेणान्यो न दीक्षेत॥ श.ब्रा.1.1.2
2. "चन्द्रमा द्विपाद्। तस्य पूर्वपक्षापरपक्षौ पादौ॥" "चन्द्रमा अप्स्वन्तः। सामौषधिवनस्पतयः काण्डानि"॥ "अग्निरादित्यायम इत्येतेऽङ्गिरसः।" "वायुरापश्चन्द्रमा इत्येते भृगवः।" गो.ब्रा.1.2.9.
3. प्रजापति र्वै सोमस्य राज्ञे दुहितरं प्रायच्छत्सूर्यां सावित्रीं ...। ऐ.ब्रा.17.1,

गोपथब्राह्मणे उत्तरभागे आग्नीन्ध्रकर्तृकं देवपत्नीनां व्याख्यानं विद्यते। तत्राऽग्नीन्ध्रो देवपत्नीर्व्याचष्टे यथा – "पृथिव्यग्नेः पत्नी, वाग् वातस्य पत्नी, सेनेन्द्रस्य पत्नी, धेना बृहस्पतेः पत्नी, पथ्या पूष्णः पत्नी, गायत्री वसूनां पत्नी, त्रिष्टुभ् रुद्राणां पत्नी, जगत्यादित्यानां पत्नी, अनुष्टुभ् मित्रस्य पत्नी, विराड् वरुणस्य पत्नी, पङ्क्तिर्विष्णोः पत्नी, दीक्षा सोमस्य राज्ञः पत्नी" इति दीक्षां सोमस्य पत्नीत्वेन व्याजहार[1]॥

## पञ्चजनेषु चन्द्रः

"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्" इति ऋग्वेदीय[2] मन्त्रस्य व्याख्यायां जैमिनीयोपनिषद्ब्राह्मणमेवं विवृण्वति – "ये देवाः असुरेभ्यः पूर्वे पञ्चजना आसन् य एवासावादित्ये पुरुषः, यश्चन्द्रमसि, यो विद्युति, योऽप्सु, योऽयमक्षन्नन्तः एष एव ते" इति। एवं पञ्चजनेषु निर्दिष्टः देवरूपोऽयं चन्द्रमा असुरेभ्यः पूर्वमतिष्ठदिति विज्ञायते[3]।

## रेतसः प्रतिरूपश्चन्द्रमाः

सृष्टेरग्रे प्रजापतिरासीत्। सः आत्मानं बहुधाकर्तुमिच्छन् प्रथमतः षोडशधाऽत्मनं व्यकुरुत। तच्च व्यकरणं भद्र समाप्ति आभूति संभूति भूत सर्व रूप अपरिमित श्रीः यशः नाम अग्र सञ्जाता पयः महीया रस रूपेण। तद्यत् भद्रं तदस्य हृदयम्। ततः संवत्सरमसृजत। तदस्य संवत्सरोऽनूपतिष्ठते। समाप्तिः कर्मास्य तत् कर्मणा हि समाप्नोति। ततः ऋतूनसृजत। तदस्य ऋतवोऽनूपतिष्ठन्ते। आभूतिरन्नमस्य तत्। तच्चतुर्धा भवति। ततो मासानर्धमासानहोरात्राण्युपसोऽसृजत। तदस्य मासा अर्धमासा अहोरात्राण्युपसोऽनूपतिष्ठन्ते। सम्भूतीरेतोऽस्य तद्। तद् रेतसो हि संभवति। ततश्चन्द्रमसमसृजत। तदस्य चन्द्रमा अनूपतिष्ठते। तस्मात् सः रेतसः प्रतिरूपः[4]। एवं भूतं प्राणस्ततो वायुम्। सर्वमपानस्ततः पशून्। रूपं व्यानस्ततः प्रजाः। अपरिमितं मनस्ततो दिशः। श्रीर्वाग् ततः समुद्रम्। यशस्तपस्ततोऽग्निम्। नाम चक्षुस्ततः आदित्यम्। अग्रं मूर्धा ततो दिवम्। सञ्जाता अण्डानि ततो वनस्पतीन्।

---

1. गो.ब्रा.2.2.9; 2. ऋ.वे.1.89.10; 3. जै.उ.ब्रा.1.13.2.4,5
4. ततश्चन्द्रमसमसृजत। तदस्य चन्द्रमा अनूपतिष्ठते। तस्मात् स रेतसः प्रतिरूपः॥ जै.उ.ब्रा.15.2.1;

पयो लोमानि ततः ओषधीः। महीया मांसानि ततो वयान्। सरो मज्जा ततः पृथिवीमसृजत। एवं परमात्मनः प्रजापतेः षोडशात्मके आत्मनः सृष्टौ चन्द्रमाः रेतसः प्रतिरूपोऽभवत्[1]। "रेतो वै सोमः" इति हि शतपथब्राह्मणम्॥[2]

## उद्गीथे चन्द्रः

उद्गीथः अधिदैवतमध्यात्मं चेति द्विधा भवति। तत्र अधिदैवते आदित्य एव उत्, अग्निरेव गी, चन्द्रमा एव थम्, भवन्ति। अपि च साम-ऋक्-यजूंषि क्रमशः उत्-गी-थम् भवन्त्यधिदैवते। अथाध्यात्मे तु प्राण-वाग्-मनांसि क्रमशः उत्-गी-थम् भवन्ति। स एषोऽधिदैवतं चाध्यात्मं चोद्गीथः[3]।

## उद्गातृषु चन्द्रः

देवानां षड् उद्गातारः आसन्। ते च वाङ्-मनो-चक्षु-श्श्रोत्र-मपानः-प्राण श्चेति[4]। एषु वाग् अग्निरभवत्। मनश्चन्द्रमाऽभवत्[5]। एवं चक्षुरादित्यः, श्रोत्रं दिशः, अपानः बृहस्पतिः, प्राणः प्रजापतिरभवन्। अत्र याः दिशः ताः एव विश्वेदेवाः। अत्र हि चन्द्रमाः मनोरूपोद्गातृत्वेन विवक्षितः[6]।

## देवानामन्नं चन्द्रमाः

शतपथे दर्शयागे सोमः देवानामन्नत्वेन कथितः। "अथ यथैव पुरा केवली - रोषधीरश्नन्ति केवलीरापः पिबन्ति ताः केवलमेव पयो दुह्र एवं तदैष वै सोमो राजा देवानामन्नमिति" [7]।

---

1. जै.उ.ब्रा.15 अनुवाकः 1,2,3 खण्डाः;
2. श.ब्रा.1.7.3.9;
3. जै.उ.ब्रा.1.18.2.7.8;
4. जै.उ.ब्रा.2.1.1.1;
5. अथ यत्तन्मन आसीत् स चन्द्रमा अभवत्॥ जै.उ.ब्रा.2.1.2.2;
6. जै.उ.ब्रा.2.1.2.1-6;
7. श.ब्रा.1.5.3.15;

## चन्द्रस्य पुनरावृत्तिः

"यत्रैषश्चन्द्रमाः एतां रात्रिं न पुरस्तात् न पश्चात् ददृशे यत् तदिमं लोक - मागच्छति, स इहापश्चौषधीश्च प्रविशति। तदेनमद्भ्यः ओषधिभ्यः सम्भृत्याऽहुतिभ्यो जनयति। स एष आहुतिभ्यो जातः पश्चात् ददृशे" इति अमावास्यातः चन्द्रः अद्भ्यः ओषधिभ्यः परिपुष्टस्सन् यज्ञीयाहुतिभ्यो पुनर्जातः दृष्टिपथमायातीति शतपथब्राह्मणतः विज्ञायते[1] ॥

## यशस्करः चन्द्रः

"सोमो यशस्कामः सः यशोऽभवत्। तस्माद्यश्च सोमे लभते यश्च नोभावेवागच्छतो यश एवैतद्द्रष्टुमागच्छन्ति। यशो ह भवति राज्यं गच्छति य एवं विद्वानाधत्ते"[2] इति पुनराधानविधौ राज्यकामो वरुणः, यशस्कामश्चन्द्रश्चेत्युभौ द्रष्टुमागतान् राज्यलाभेन, यशो लाभेन क्रमशः अनुगृह्णीत इति अकथयत्। तैत्तिरीयं ब्राह्मणं च सोमापरनामस्यास्य चन्द्रस्य यशस्करत्वं कथयति[3] ॥

## पितृणां ज्योतिश्चन्द्रमाः

प्राणिनः सर्वे प्रजापतिमुपासीदन्॥ तेषु यज्ञोपवीतिनो देवाः स्वेषां जीविकायै प्रार्थितवन्तः। तदनु प्रजापतिः तेषामन्नं यज्ञमुवाच। सूर्यं च ज्योतिरुवाच। पितृणा त्वन्नं मासि मासि स्वधामकथयत्। चन्द्रमसं ज्योतिरुवाच[4]। मनुष्यानां तु सायंप्रातरशनमकथयत्। प्रजाः मृत्युः। अग्नि र्वै ज्योतिरिति जगाद। पशूनां तु यदा

---

1. "यच्चन्द्रमाः स यत्रैष एतांरात्रिं न पुरस्तान्नपश्चाद्ददृशे तदिमं लोकमागच्छति स इहापश्चौषधीश्च प्रविशति तदेनमद्भ्य ओषधिभ्यः सम्भृत्याहुतिभ्योऽधिजनयति स एष आहुतिभ्यो जातः पश्चाद्ददृशिरे॥ तद्वा एतत्। अविक्षीणमेव देवनामन्नाघं परिप्लवतेऽविक्षीणंह वाऽअस्यास्मिंलोकेऽन्नं भवत्यक्षय्यममुष्मिंलोके सुकृतं य एवमेतद्वेद॥" श.ब्रा.1.5.3.15,16
2. श.ब्रा.2.2.1.1;
3. सोमो वै यशः। य एवं विद्वान् सोममागच्छति। तै.ब्रा.2.2.8.8;
4. अथैनं पितरः। प्राचीनावीतिनः सव्यं जान्वाच्चोपासीदंस्तानब्रवीन्मासि मासि वोऽशनं स्वधा वो मनोजवो न श्चन्द्रमा वो ज्योतिरिति॥ श.ब्रा.2.3.4.2;

कदापि प्राप्तमेवाशनं जगाद। असुराणां तु तमश्च मायां च प्रददौ। एवमत्र चन्द्रमाः पितृणां ज्योतिरूपेण निश्चित आसीत्[1]।

## चन्द्रमाः गन्धर्वः

राष्ट्रभृद्धोमे माध्यन्दिनीये शतपथे ब्राह्मणे मिथुनात्मकत्वेन देवताः जुहोति। तत्र चन्द्रनक्षत्रात्मकमिथुने चन्द्रः गन्धर्वः नक्षत्राणि चाप्सरसः। तन्मिथुनं नः ब्रह्मक्षत्रं पात्विति प्रार्थयति होता[2]॥

## अग्न्याधानकाले चन्द्रः

यज्ञादीनां संवत्सराद्यात्मना निरूपयन् कथयति शतपथब्राह्मणमेवम्। द्वादशमासाः हेमन्तशिशिरयोः समासेन पञ्चर्तवः तावत् संवत्सरः। स च सप्तदशा-वयवत्वसाम्यात् प्रजापतिरुच्यते। तयोः तादात्म्येन संवत्सरो वै यज्ञः प्रजापतिरित्युच्यते। तस्यैतद् द्वारं यदमावास्या। चन्द्रमा द्वारपिधानम्। योऽमावास्यायां ह्यग्निमाधत्ते, सः विवृतायां द्वारि पुरं प्रपन्न इव स्वर्गलोकमेति। अत्र हि अमावास्यायां अग्न्यादधीत, पौर्णमास्यामग्न्यारभेत, अमावास्यायान्दीक्षेत। एवमादिक्रमेण अग्न्याधानकालविषये चन्द्रमसः प्राधान्यं, प्रदर्शितमस्ति[3]।

## चन्द्रमसि कृष्णहेतुः

असुरैस्सङ्ग्रामे सन्निधास्यन्तो देवाः एवं भावितवन्तः। "पृथिव्याः अनामृतं देवयजनं यदस्ति तच्चन्द्रमसि निदधामहै। यदि असुराः नो जयेयुः ततोऽर्चन्तः श्राम्यन्तः

---

1. श.ब्रा.2.3.4.1-5;
2. चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसः। श.ब्रा.9.4.1.9;
3. संवत्सरो वै यज्ञः प्रजापतिः। तस्यैतद्द्वारे यदमावास्या चन्द्रमा एव द्वारपिधानः ॥1॥
   स योऽमावास्यायामग्नी आधत्ते। यथा विवृतायां द्वारि द्वारा पुरं प्रपद्येत
   स तत एव स्वर्गलोकमियादेवन्तद्योऽमावास्यायामाधत्ते ॥2॥
   यासौ वैशाखस्यामावास्या तस्यामादधीत सा रोहिण्या सम्पद्यत आत्मा वै प्रजा पशवो रोहिण्यात्मन्येवैतत्प्रजयाम्पशुषु प्रतितिष्ठत्यमावास्या वा अग्न्याधेयरूपन्तस्मा-दमावास्यायामेवाग्नी आदधीत पौर्णमास्यामन्वारभेतामावास्यायान्दीक्षेत ॥7॥
   श.बा.11.1.1.1,2,7

पुनरभिभवेम। '' इति मत्वा ते पृथिव्याः अनामृतं देवयजनं चन्द्रमसि न्यदधत। तदेतत् चन्द्रमसि कृष्णमभूत्[1]।

## सूर्यादुपरि चन्द्रस्थितिः

तैत्तिरीयब्राह्मणे पृथिव्यन्तरिक्षादीनां प्रतिष्ठा क्रमेणोपवर्णिता विद्यते। तत्र पृथिव्यां श्रितः। अन्तरिक्षस्य प्रतिष्ठा।
अन्तरिक्षमस्याग्नौ श्रितम्। वायोः प्रतिष्ठा।
वायुरस्यान्तरिक्षे श्रितः। दिवः प्रतिष्ठा।
द्यौरसि वायौ श्रिता। आदित्यस्य प्रतिष्ठा।
आदित्योऽसि दिवि श्रितः। चन्द्रमसः प्रतिष्ठा।
चन्द्रमा अस्यादित्ये श्रितः। नक्षत्राणां प्रतिष्ठा।

नक्षत्राणि स्युश्चन्द्रमसि श्रितानि। संवत्सरस्य प्रतिष्ठा युष्मासु॥ तै.ब्रा.3.11.7-13; एवमत्रादित्यादुपरि चन्द्रमाः, चन्द्रमसः उपरि नक्षत्राणि च कथितानि।[2] अयमेवांशः शतपथब्राह्मणेऽप्युपवर्णितोऽस्ति। तत्र गार्गी याज्ञवल्क्योः संवादः अमुमेवाशयं सङ्केतयति। अत्र हि सर्वस्य लोकस्य अप्सु ओतप्रोतत्वादि प्रश्नादारभ्य ब्रह्मलोकपर्यन्तं प्रश्नप्रत्युत्तररूपेण गार्गी याज्ञवल्क्योः संवादः समाप्तः। तथाहि - ''कस्मिन्नादित्यलोकाऽ ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति। कस्मिन्नु चन्द्रलोकाऽओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति'' एवं विधवर्णने चन्द्रलोकस्थितिः सूर्यादुपरि निर्धारिता विद्यते

---

1. तां प्रतिमार्ष्टि। देवा ह वै सङ्ग्रामं सन्निधास्यन्तस्तै होचुर्हन्त यदस्य पृथिव्या अनामृतं देवयजनं तच्चन्द्रमसि निदधामहै स यति न इतोऽसुरा जयेयुस्तत एवार्च्चन्तः श्राम्यन्तः पुनरभिभवेमेति स यदस्यै पृथिव्या अनामृतं देवयजनमासीत्तच्चन्द्रमसि दधत तदेतच्चन्द्रमसि कृष्णं तस्मादाहुश्चन्द्रमस्यस्यै पृथिव्यै देवयजनमित्यपि ह वाऽस्यै तस्मिन्देवयजनमिष्टं भवति तस्माद्वै प्रतिमार्ष्टि॥ श.ब्रा.1.2.3.18;
चं.गो.वि.पु.28

2. चं.गो.वि.पु.15;

ब्राह्मणग्रन्थेषु।[1] अयं चन्द्रः सूर्यादूर्ध्वस्थः न तु दृश्यमानश्चन्द्र इति चन्द्रगो लविर्शकाराणां श्री रामचन्द्रपाण्डेमहोदयानामभिप्रायः[2]।

## इदावत्सरश्चन्द्रमाः

प्रभवादिषष्टिसंवत्सराणां मध्ये संवत्सरपञ्चकमैकैकं युगम्। तस्मिन् युगे वर्तमानानां पञ्चानां संवत्सराणां क्रमेण संवत्सरः - परिवत्सरः - इदावत्सरः अनुवत्सरः - इद्वत्सरः इत्येतानि नामधेयानि। तत्रायं चन्द्रमाः इदावत्सरः भवति। अग्निरादित्यवायवः क्रमेण संवत्सर परिवत्सरानुवत्सराः भवन्ति [3]॥

## साकमेधैश्चन्द्रप्राप्तिः

चातुर्मास्यायवरूपाणि वैश्वदेवादीनि त्रीणि पर्वाणि सन्ति। प्रथमपर्वणः संवत्सररूपाग्निप्राप्तिहेतुत्वात् तद्यागकाले तदीयसूक्तवाक्यमध्ये "संवत्सरीणा" मिति वाक्यं पठेत्। द्वितीय-तृतीयपर्वणोः परिवत्सरेदावत्सररूपादित्यचन्द्रमसोः प्राप्तिः भवति। तत्र वरुणप्रघासैर्यजमानः परिवत्सररूपादित्यमाप्रोति। साकमैधैर्यजमानः इदावत्सररूपं

---

1. अथ हैनङ्गार्गी वाचक्नवी प्रपच्छ। याज्ञवल्क्येतिहोवाच यदिदं सर्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्न्वापऽओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु वायुरोतश्च प्रोतश्चेत्याकाश एव गार्गीति कस्मिन्नाकाश ओतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्न्वान्तरिक्षलोकाऽओताश्चप्रोताश्चेति द्यौर्लोकेषु गार्गीति कस्मिन्नु द्यौर्लोकाऽओताश्च प्रोताश्चेदादित्यलोकेषु गार्गीति कस्मिन्न्वादित्यलोकाऽ ओताश्चप्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु चन्द्रलोकाऽओताश्चप्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु नक्षत्रलोकाऽओताश्चप्रोताश्च देवलोकेषु गार्गीति कस्मिन्नु देवलोकाऽओताश्चप्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु गन्धर्वलोकाऽओताश्चप्रोताश्चेतिप्रजापतिलोकेषु गार्गीति कस्मिन्नु प्रजापतिलोका ऽओताश्चप्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु ब्रह्मलोकाऽओताश्च प्रोताश्चेति स होवाच गार्गि मातिप्राक्षीर्माते मूर्धा व्यपसदनति प्रश्र्या वै देवताऽअति पृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम। श.ब्रा.14.6.6.1;
2. चं.गो.वि.पु.16
3. अग्निर्वा व संवत्सरः आदित्यः परिवत्सरः।
   चन्द्रमा इदावत्सरः वायुरनुवत्सरः॥ तै.ब्रा.1.4.10.1;

चन्द्रमसमाप्नोति[1]। यस्मादस्मिन् यज्ञे पूज्यपूजकभावेन छन्दोदेवताः सोमश्च संभूय साकं वृद्धिं प्राप्ताः एधन्ते तस्मात् साकं एधन्ते वर्धन्ते एभिः हविर्विशेषैरिति तेषां साकमेधनाम सम्पन्नम्॥[2]"

## चातुर्मास्ये चन्द्रः

देवासुराश्च युद्धोद्युक्ताः सन्तः संवत्सरानुष्ठानसाध्ये फले विरोधमारभन्त। ततोऽस्माकमेवेदं फलं भवत्विति परस्परं कलहं कृतवन्तः। तदानीं तानसुरानभिलक्ष्य तेषां फलं वारयितुं चातुर्मास्यैरेवानुष्ठानं कृतवन्तः। तेषु च देवेषु त्रयो व्यूहाः आसन् तदानीम्। इन्द्रस्वामिकः प्रथमो व्यूहः। वरुणस्वामिको द्वितीयः। सोमस्वामिकः तृतीयः। एवं व्यूहत्रयेण चतुरश्चतुरो मासान् आसुरसम्बन्धिनो विनाशितवन्तः। विनाशितानेव तान् मासानभिलक्ष्य स्वशिरसि निवर्तनं[3] परिवर्तनं[4] च कृतवन्तः। त्रिविधमासचतुष्टयानुष्ठानेनैकस्मिन्संवत्सरे तैरसुरैरुपजीवनाय या धानादि संपद् संपादिता एषां असुराणां तां संपदं विनाशिवन्तः। ततो देवाः सम्पन्नाः अभवन्। असुराश्च पराभूताः। एवं ज्ञात्वा चातुर्मास्यानुष्ठानेन भ्रातृव्यसंबन्धिनो मासान् विनाश्य तद्विनाशनार्थं तु स्वशिरसि निवर्तनं परिवर्तनं कृत्वा वैरिणः संवत्सरोपजीव्यां संपदं सम्यक् विनाशयति। स च शतृरन्नाभावेन क्षुत्पीडितो भवति। एवं चातुर्मास्यानुष्ठाने चन्द्रस्य प्राधान्यं भासते॥[5]

---

1. अथ सोमो राजा छन्दांसि साकमैधैरयजत। स एतं लोकमजयत्। यस्मिंश्चन्द्रमा विभाति॥
तै.ब्रा.1.4.10.6, 7;
2. यत्सोमश्च राजा छन्दाँसि च समैधन्त। तत्साकमेधानाम्साकमेधत्वम्॥
तै.ब्रा.1.4.10.7, 8;
3. वपनीयानां केशानां स्यापनीयेभ्यः शिखागतकेशेभ्यः पृथक्करणं निवर्तनम्।
तै.ब्रा.सा.भा.1.5.6.पु.263.
4. पृथक् कृतानां वपनं परिवर्तनम्॥ तै.ब्रा.सा.भा.1.5.6, सूत्रस्य।
5. तै.ब्रा.1.5.6.3,4,5;

## इन्द्रियं वयश्च ददाति सोमः

ईड्यनामकोऽग्निः, मरणरहितः सोमः, अनुष्टुब् छन्दः, संवत्सरत्रयोपेतो गौः, एते देवाः अस्माकमिन्द्रियं वयश्च दधुः[1]।

## सोमस्य केशान् सविता क्षुरेणावपत

पुरा विद्वान् सविता राज्याभिषेकं प्राप्नुवतः राज्ञः सोमस्य वरुणस्य च केशान् अवपत। सम्प्रति राज्याभिषेकसमये राज्ञः केशान् प्रजापतिरूपाः पुरोहिताः, सविता येन क्षुरेणावपत तेन क्षुरेण वपत्विति प्रार्थ्यन्ते।[2]

## राज्याभिषेक काले चन्द्रः

राज्याभिषेककाले राज्ञः बाह्वोः बलं सविता ददाति। सोमस्त्वेनं पयसा घृतेन सुसंपन्नं करोति। अश्विनौ राज्ञः स्त्रीषु रमणीयं रूपं स्थापयतः। इमं तु राजानं पौम्स्येन वीर्येण च योजयतः।[3]

## सूर्याचन्द्रमसौ

अनयोः सूर्याचन्द्रमसोः देवयोः सम्वन्धिव्रतमेतावता फलेन युक्तमिति न कोऽपि परिच्छेत्तुं शक्नोति। तौ सूर्याचन्द्रमसौ द्युलोके दीप्येते। तौ विश्वस्य भर्तारौ, महान्तौ तेजस्विनौ, धनवन्तौ च। प्रजापालने सामोपायप्रधानौ। तेनैवोपायेन सर्वजगदनुग्राहकप्रकाशरूपेण परिभ्रमतः। उभौ पृथिव्याः पूर्वपश्चिमेत्यवसानभागौ परियातः, समुद्रसमानेऽन्तरिक्षे रश्मीन्वितनुत। प्राणिनामज्ञानं विनाशयन्तौ कविक्रतू एतौ। दीप्तिमन्तौ सर्वज्ञौ एतौ द्युलोकस्य पालकौ वर्तेते। एतौ विचक्षणौ सर्वैः वरणीयौ, मतिमन्तौ, महताकर्मणा युक्तावस्मान् रक्षतः। एतौ सूर्याचन्द्रमसौ परमेश्वरस्य शक्त्या प्राक्पश्चिमभागौ परिचरतः, बालकाविव क्रीडन्तः यज्ञं प्राप्नुतः। उभयोर्मध्ये एकः आदित्यः भुवनानि सर्वतः प्रकाशयति। अन्यश्चन्द्रः प्रतिपदादितिथि-शुक्लकृष्णपक्षचैत्रादिमासद्वारा क्रतून् विदधत्पुनः पुनः जायते। एवमत्र जगति सर्वेषां

---

1. इडाभिरग्निरीड्यः। सोमो देवोऽमर्त्यः।
   अनुष्टुप्छन्द इन्द्रियम्। त्रिवत्सो गौ र्वयो दधुः॥ तै.ब्रा.2.6.18.1, 2;
2. येनावपत्सविता क्षुरेण। सोमस्य राज्ञो वरुणस्य विद्वान्॥ तै.ब्रा.2.7.17.2;
3. सोमस्त्वानक्तु पयसा घृतेन॥ तै.ब्रा.2.7.17.3;

प्राणिनां चैतन्ये सूर्याचन्द्रमसोः प्राधान्यं कथितम्। अपि च कालमाने, क्रत्वाचरणे च चन्द्रस्य प्राधान्यं प्रतिपादितम्[1] ॥

## चन्द्रो मृगशीर्षश्च

तैत्तिरीयब्राह्मणे तृतीयकाण्डे देवनक्षत्राणां याज्यानुवाक्यस्तद्विभागश्चोपवर्णिताः तत्र तृतीयस्य मृगशीर्षनक्षत्रदेवस्य पुरोनुवाक्ये चन्द्रस्य प्रस्तावो विद्यते। कल्याणतरं मृगशीर्षनक्षत्रं तदस्य सोमस्य प्रियं धाम। अस्मिन् धाम्नि स्थितो सोमो जनेषु बहुधाऽऽप्यायमानो तेषु कारणरुपं रेतः कार्यरूपां प्रजां च स्थापयति। यजमानः याज्यमन्त्रे स्वमनुष्येभ्यः पशुभ्यश्च सुखं प्रार्थयन् प्रियतमं मृगशीर्षं नक्षत्रं चन्द्रश्चोद्दिस्य जुहोति[2]।

## देहे चन्द्रः

मर्त्यानां देहेषु अग्नि-र्वायु-स्सूर्य-श्चन्द्रमा-दिश-आपः-पृथि-व्योषधि-वनस्पति-इन्द्र - पर्जन्य-ईशान-आत्मेति द्वादश देवतारूपेण वाचि-प्राणे-चक्षुषि-

---

1. ता सूर्याचन्द्रमसा विश्वभृत्तमा महत्। तेजो वसुमद्राजतो दिवि। सामात्माना चरतः सामचारिणा। ययोर्व्रतं न ममे जातु देवयोः, इति॥ उभावन्तौ परियात अर्म्या दिवो न रश्मीस्तनुतो व्यर्णवे। उभाभुवन्ती भुवना कविक्रतू। सूर्या न चन्द्रा चरतो हतामती, इति। पती द्युमद्विश्वविदा उभादिवः। सूर्या उभा चन्द्रमसा विचक्षणा।(1) विश्ववारा वरिवौभा वरेण्यां। तानोऽवतं मतिन्ता महिव्रता, इति॥ विश्वपरी प्रतरणा तरन्ता। सुवर्विदा दृश्ये भूरिरश्मी। सूर्या हि चन्द्रा वसुत्वेष दर्शता। मनस्विनोभाऽनुचरतो नु सं दिवम्, इति॥ अस्य श्रवो नद्यः सप्त बिभ्यति। द्यावा क्षामा पृथिवी दर्शतं वपुः। अस्मे सूर्याचन्द्रमसाऽभिचक्षे। श्रद्धे कमिन्द्र चरतो विचर्तुरम्, इति।(2) पूर्वापरं चरतो माययैतौ। शिशू क्रीडन्तौ परियातो अध्वरम्। विश्वान्यन्यो भुवनाऽभिचष्टे क्रतून्यन्यो विदधज्जायते पुनः, इति। ..(3)
   तै.ब्रा.2.8.9.1,2,3;
2. सोमो राजा मृगशीर्षेण आगन्। शिवं नक्षत्रं प्रियमस्य धाम। आप्यायमानो बहुधा जनेषु। रेतः प्रजां यजमाने दधातु (2), इति। यत्ते नक्षत्रं मृगशीर्षमस्ति। प्रियं राजन्प्रियतमं प्रियाणाम्। तस्मै ते सोम हविषा विधेम। शं न एधि द्विपदे शं चतुष्पदे, इति। (3) तै.ब्रा.3.1.1.2,3;

मनसि-श्रोत्रे-रेतसि-शरीरे-लोमसु-बले-मूर्ध्नि-मन्यौ-आत्मनि इति द्वादशसु स्थानेषु विराजन्ते। अत्र लोमसु ओषधिवनस्पतयो भवन्ति। चन्द्रमा तु अत्र मनसि श्रितो भवति। मनस्तु हृदयमाश्रयति। हृदयं "अहं" कर्तरि जीवात्मनि श्रितं भवति। "अहं" चामृते विनाशरहिते जगत्कारणे मायाविद्याशक्त्यव्याकृतादि शब्दैर्वेदेषु श्रूयमाणे प्रधाने श्रितो भवानि। तच्चामृतं अव्याकृतं ब्रह्मणि सत्यंज्ञानमनन्तमित्यादि श्रुतिप्रतिपाद्ये वस्तुनि श्रितं भवति[1]। गोपथब्राह्मणमपि मनश्चन्द्रयोः सम्बन्धं विवृण्वन् "मनसि तृप्ते चन्द्रमास्तृप्यति" इत्युदाजहार[2]। चन्द्रमसः रश्मिर्मनो भूत्वा सर्वास्वासु प्रजासु पर्यवस्थितः। सः यः कश्च मनुते एतस्यैव रश्मिना मनुते इति जैमिनीयमुपनिषद् ब्राह्मणम्[3]।

## प्रजापतेः चक्षुश्चन्द्रः

अग्न्यादीन् देवान् प्रजापतेः वागादिषु निर्दिशति शतपथं ब्राह्मणमेवम्। अस्मिन् लोके योऽग्निः सोऽस्य प्रजापतेः वाक् भवति। अन्तरिक्षमस्य प्राणः। अन्तरिक्षे यो वायुस्सोऽस्य आत्मा। स एवास्यात्मन्प्राणः। द्यौरेवास्य शिरः। सूर्याचन्द्रमसौ चक्षुषी। यश्चक्षुरध्यशेत स चन्द्रः। अतः सः मीलिततरोऽत्रं हि तस्मादस्त्रवत्[4]॥

---

1. चन्द्रमा मे मनसि श्रितः॥ मनो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। तै.ब्रा.3.10.8.5,6;
2. यो ह वा एवं विद्वानश्नाति च पिबति च मनस्तेन तृप्यति। मनसि तृप्ते चन्द्रमास्तृप्यति। चन्द्रमसि तृप्ते आपस्तृप्यन्ति। अप्सु तृप्तासु यान्यप्सु भूतान्यन्वायत्तानि तानि तृप्यन्ति॥ गो.ब्रा.3.14;
3. स एष एतस्य रश्मिना भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः। स यः कश्च मनुते एतस्यैव रश्मिना मनुते॥6॥ अथ मनोमयो दक्षिणा प्रतिष्ठितः। तद्यत्तन्मनश्चन्द्रमाः सः। स दशधा भवति॥ जै.उ.ब्रा.1.9.1.5,6;
4. तस्यायमेव लोकः प्रतिष्ठा। अथ योऽस्मिंल्लोकेऽग्निः सोऽस्यवाक्प्राणोऽधास्यान्त रिक्षमात्माध योऽन्तरिक्षे वायुसूर्य एवायमात्मन्प्राणः सोऽस्य स द्यौरेवास्य शिरः सूर्याचन्द्रमसौ चक्षुषी यच्चक्षुरध्यशेत स चन्द्रमात्तस्मात्स मीलिततरो रत्रं हि तस्मादस्त्रवत्॥ श.ब्रा.7.1.2.7;

## हिङ्कारश्चन्द्रमाः

जैमिनीयोपषिद्ब्राह्मणे एकविंशं साम प्रसिद्धं वर्तते। तस्य त्रय्यैव विद्या हिङ्कारः। अग्निर्वायुरादित्य इत्येष एव प्रस्तावः। इमे एव लोकानामादिभूताः। एषु हीदं लोकेषु सर्वमाहितम्। श्रद्धा यज्ञो दक्षिणा एष उद्गीथः। दिशोऽवान्तरदिश आकाश एष प्रतिहारः। आपः प्रजा ओषधय एष उपद्रवः। चन्द्रमा नक्षत्राणि पितर एतन्निधनम्। तदेकविंशं साम। एवं एकविंशसाम्नि विद्यमानश्चन्द्रः तस्य त्रय्येव विद्यारूपेण हिंकारः भवति। अत एवास्मिन्नेव ब्राह्मणे त्रिवृत्साम्नः अधिदैवते चन्द्रमा एव हिङ्कारत्वेन कथितः।[1]

## देवानां श्रेष्ठेषु चन्द्रः

प्रजापतिः वेदत्रयमपीळयत्। पीळयतस्तस्यैकमेवाक्षरं नाशक्नोत् पीळयितुम्। तच्चाक्षरं "ओ" मिति। एष उ ह वाव सरसः सरसा ह वा एवंविधस्त्रयी विद्या भवति। स इमं रसं पीळयित्वापनिधायोर्ध्वोऽद्रवत्। द्रवन्तं तं देवानां चत्वारोऽन्वपश्यन्। ते हि इन्द्रश्चन्द्रो रुद्रः समुद्रः। तस्मादेते श्रेष्ठा देवानाम्[2]।

## शुद्धिहेतुस्सोमः

कृष्णयजुर्वेदीये तैत्तिरीये ब्राह्मणे प्रथमकाण्डे चतुर्थप्रपाठके अष्टमेऽनुवाके

---

1. चन्द्रमा वै हिङ्कारः। जै.उ.ब्रा.1.1.3.4;
   तस्य त्रय्यैव विद्या हिंकारः। अग्निर्वायु असावादित्य एष प्रस्तावः। इम एव लोका आदिः येषुहीदं लोकेषु सर्वमाहितम्। श्रद्धा यज्ञो दक्षिणा एष उद्गीथः। दिशोऽवान्तरदिश आकाश एष प्रतिहारः। आपः प्रजा ओषधय एष उपद्रवः। चन्द्रमा नक्षत्राणि पितर एतन्निधनम्। तदेकविंशं साम॥ जै.उ.ब्रा.1.5.1.2;
   अथाधिदैवतम्। चन्द्रमा एव हिंकारः। अग्निः प्रस्तावः। आदित्य उद्गीथः। आप एव चतुर्थः पादः। तद्धि प्रत्यक्षमन्नम्॥ जै.उ.ब्रा.1.11.1.5;
2. हन्तेमं त्रयं वेदं पीळयानीति। स इमं त्रयंवेदमपीळयत्। तंस्य पीळयन्नेकमेवाक्षरं नाशक्नोत् पीळयितुम् "ओम्" इति यदेतत्॥3॥ एष उ ह वाव सरसः। सरसा ह वा एवं विदस्त्रयी विद्या भवति॥4॥ स इमं रसं पीळयित्वा-पनिधायोर्ध्वोऽद्रवत्॥5॥ तं द्रवन्तं चत्वारो देवानां अन्वपश्यन्। इन्द्रश्चन्द्रोरुद्रः समुद्रः। तस्मादेते श्रेष्ठा देवानाम्। एते ह्येनमन्वपश्यन्। जै.उ.ब्रा.1.2.1.3-6;

शुद्धिहेतवो मन्त्राः उक्ताः। तत्र क्षेमप्रापिकया देव्या सह "सोमो मां पुनात्विति" यजमानो जपन् शुद्धिमेति। एवमत्र शोभनफलप्रापिकया देव्या सह इन्द्रः, क्षेमप्रापिकया देव्यासह चन्द्रः, अनुकूलया देव्या सह वरुणः, राजा यमस्तु प्रकर्षेण मारिकाभिः देवीभिः, जातवेदाः क्षीरादिरसप्रापिकया देव्या सह मां पुनात्वति प्रार्थयति यजमानः। एवमत्र चन्द्रः शुद्धिप्रदेषु देवेषु कथितोऽन्यतमत्वेन[1]।

## प्रतिग्रहीतृषु चन्द्रः

दातृप्रतिग्रहीतृषु कामस्य प्राधान्यं विद्यते। अत एव कामो दाता कामः प्रतिग्रहीता भवतः। अत एवोच्यते तैत्तिरीयं ब्राह्मणं "कामो दाता कामः प्रतिग्रहीता" इति[2]। तत्र वस्त्रादि षोडशद्रव्यविशेषाणां प्रतिग्रहीतृनकथयत्। यदा देवाः स्वयं ऋत्विजो भूत्वा वरुणं याजितवन्तः। तदा वरुणः एकैकस्यै देवतायै दक्षिणां दत्वा तां देवतां विशीर्णामकरोत्। तेषु देवेष्वग्नये हिरण्यं, सोमाय वासः, रुद्राय गां, वरुणायाश्वं, प्रजापतये पुरुषं, मनवे तल्पं, उत्तानायाऽऽङ्गीरसाय शकटं, एवमादिक्रमेण अत्र मन्त्रेषु द्रव्यधिपतीनां देवानामेव प्रतिग्रहीतृत्वेन निर्देशात् तत्तद्द्रव्यानां तास्ताः देवताः एवाधिपतयः। तथा च वासः सौम्यं भवति[3]। अत एव लोके हि जनः शुक्लपक्षे रेखामात्रतया दृश्यादृश्यत्वेन प्रथमतश्चन्द्रं वीक्ष्य "नवो नवो भवतीति" मन्त्रमुच्चारयन् धृतवाससि तन्तुमेकं समर्पयति लौकिकाचारे। "सोमस्य तनूरसी" ति वैदिकाचारेऽपि वासः सोमस्य शरीरत्वेन भाव्यते।

---

1. इन्द्रः सुनीती सह मा पुनातु। सोमः स्वस्त्या वरुणः समीत्या। यमो राजा प्रमृणाभिः पुनातु मा। जातवेदा मोर्जयन्त्या पुनातु 6, इति। तै.ब्रा.1.4.8.6;
2. कामः कामायेत्याह। कामेन हि ददाति। कामेन प्रतिगृह्णाति, इति। कामो दाता कामः प्रतिग्रहीतेत्याह ।5। कामो हि दाता। कामः प्रतिग्रहीता, इति। तै.ब्रा.2.2.5.5;
3. राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यमित्याह। आग्नेयं वै हिरण्यम्। स्वयैवैनद्देवतया प्रतिगृह्णाति। सोमाय वास इत्याह। सौम्यं वै वासः। स्वयैवैनद्देवतया प्रतिगृह्णाति। वरुणायाश्वमित्याह, 21 वारुणो वा अश्वः। स्वयैवैनं देवतया प्रतिगृह्णाति। प्रजापतये पुरुषमित्याह। प्राजापत्यो वै पुरुषः। स्वयैवैनं देवतया प्रतिगृह्णाति। मनवे तल्पमित्याह। मानवो वै तल्पः। स्वयैवैनं देवतया प्रतिगृह्णाति। उत्तानयाऽऽङ्गीरसायान इत्याह। इयं वा उत्तान आङ्गीरसः। तै.ब्रा.2.2.5.2,3;

## अग्नौ चन्द्ररश्मिः

यज्ञे दृश्यमानाऽग्निज्वाला सूर्यचन्द्ररश्म्यात्मना मन्यते। यतः सूर्यस्य गोशब्दाभिधेयो यो रश्मिरस्ति सः प्रतिदिनं रात्रावग्नौ, दिवा तु पुनः सूर्यं प्रविशति। एवं स एव सुषुम्णेति श्रुत्यन्तरैरुच्यमानः रश्मिः चन्द्रमसि अपि प्रविशति। अतः सूर्यरश्मेरेव चन्द्रगतत्वात् यः सूर्यरश्मिः यश्च चन्द्ररश्मिः तदुभयात्मिकेयमग्निज्वालेति मन्यते। एवञ्चाग्नौ चन्द्ररश्मेः स्थितिर्भाविता[1]॥

## पौर्णमासी - अमावास्या विशेषाः

गोपथेब्राह्मणे पौर्णमास्यादीनां विशेषाः एवं विद्यन्ते। अत्र या पूर्वा पौर्णमासी सानुमतिः, योत्तरा सा राका। या पूर्वाऽमावास्यायाः सा सिनीवाली, योत्तरा सा कुहूः। चन्द्रमा एव धाता च विधाता च। यत्पूर्णाऽन्यां वसत्यपूर्णोऽन्यां तन्मिथुनम्। यदमावास्यायाश्चन्द्रमा अधिप्रजायते, तन्मिथुनम्। यत् पश्यन्त्यन्यां नान्यां तन्मिथुनम्। तस्मादेवास्मै मिथुनात् पशून् प्रजनयति। एवमत्र मिथुनात्मके जगति अमावास्यापूर्णिमे मिथुनं भवतः। जैमिनीयब्राह्मणतः चन्द्रमा ह्यमावास्यायां रात्रिमादित्यं प्रविशति इति विज्ञायते। तथा च कथयति ऐतरेयं ब्राह्मणं हि चन्द्रमा अमावास्यायामादित्यं प्रविशति, ततः प्रतिपदि सूर्याज्जायते इति[2]।

---

1. अत्राह गोरमन्वत। नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे, इति। तै.ब्रा.1.5.8.1;
   "सुषुम्नः सूर्यरश्मिश्चन्द्रमाः" इति श्रुत्यन्तरात्। तै.ब्रा.सा.भा.1.5.8.1;
2. या पौर्णमासी सानुमतिः, योत्तरा सा राका। गो.ब्रा.उ.भा.1.10;
   वा एता देवता अमावास्यां रात्रिं संयन्ति। चन्द्रमा
   अमावास्यां रात्रिमादित्यं प्रविशति। आदित्योऽग्निम्। जै.उ.ब्रा.1.11.1.6;
   आदित्याद्वै चन्द्रमा जायते। ऐ.ब्रा.40.5; पु 968.
   तिथावमावास्यायामादित्ये प्रविष्टश्चन्द्रमाः,
   शुक्लपक्षप्रतिपद्यादित्याज्जायते। ऐ.ब्रा.सा.भा.40.5; पु.969.
   चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति। ऐ.ब्रा.40.5; पु.967.
   अयं चन्द्रमा अमावास्यायां तिथौ
   साकल्येनादित्यमनुप्रविशति। ऐ.ब्रा.सा.भा.40.5; पु.967.

## *निष्कर्षः*

संहिताभागं सम्यक् ज्ञात्वा ज्ञातं तं बहुविधकर्मसु विनियोगं कुर्वन्, तत्र तत्र साङ्केतिकार्थान् विवृण्वन् ब्राह्मणग्रन्थः प्रादुर्भूतः। ऋग्वेदादिसंहितानां प्रतिप्रधानशाखं प्रत्येकतया ब्राह्मणग्रन्थाः सन्तीति विज्ञायते। तथापि सम्प्रत्युपलभ्यमानाः बह्वल्पाः एव। एषु सोमसम्वन्धियागादिकविवरणानि विहाय केवलं विशेषांशाः एवात्र परिशीलिताः।

अत्रादित्यात् – प्रजापतेः – ब्रह्मणो मनसः – वकारमात्रायाः – अण्डात् च चन्द्राविर्भावः प्रस्तावितः। प्रजापतिना चन्द्रसृष्टिः, वृत्रेण तु चन्द्रनिर्माणं कृतमिति, चन्द्रः आविर्भावरूपेण – सृष्टिरूपेण – निर्माणरूपेण च ब्राह्मणेषु प्रतिपादितः। अयं वेदेषु अथर्वणां देवता। होताध्वर्यूद्गाताब्रह्मेति चतुर्षु प्रधानयाज्ञिकेष्वयं ब्रह्म स्वरूपः। वायुरापश्चन्द्रमा इत्येते भृगवः। एते लोकमाप्याययन्ति। सूर्यात् चन्द्रे प्रविष्टः सुषुम्ना रश्मिरेवात्र सूर्येति नाम्ना चन्द्रमसः पत्नीत्वेन प्रजापतिना चन्द्रमसे दत्तेति भाव्यते। अपि च यज्ञेषु ब्रह्मात्मकस्यास्य पत्नी दीक्षेति ज्ञायते। असुरेभ्यः पूर्वं ये देवतारूपाः पञ्चजनाः सन्ति तेष्वयमन्यतमः। प्रजापतेः रेतसः प्रतिरूपोऽयं चन्द्रमाः। उद्गीथे थम् चन्द्रः। वाङ्मनश्चक्षुश्श्रोत्रमपानःप्राणश्चेति देवानां षडुद्गातृषु मनश्चन्द्रमा अभवत्। अमावास्यातश्चन्द्रः अद्भ्यः ओषधिभ्यः परिपुष्टस्सन् यज्ञीयाहुतिभ्यो जायते पुनः। सोऽयममावास्यायामादित्यं प्रविष्टः प्रतिपदि सूर्यात् जायत इति चोल्लिखितः। यशस्कामोऽयं चन्द्रः यशस्करः आसीत्। पितृणां च ज्योतिरयम्। राष्ट्रभृद्धोमे चन्द्रनक्षत्रात्मके मिथुने अयं गन्धर्वः। अग्न्याधानारम्भकालेषु अमावास्यापूर्णिमे प्रधाने भवतः। देवासुरसङ्ग्रामे देवैश्चन्द्रमसि निक्षिप्तं पृथिव्याः अनामृतं देवयजनमेवात्र कृष्णहेतुरभूत्। सूर्यादुपरि चन्द्रस्थितिरिति तत्र तत्र ब्राह्मणेषु प्रतिपादितो विषयः सौरकुटुम्बान्यतरवर्तिचन्द्रविषय इति विमर्शकैः भाव्यते। मृगशीर्षं नक्षत्रमस्य प्रियं धामोच्यते। इन्द्रियं वयश्च सोमो ददाति। राज्याभिषेककाले राजानं पयसा घृतेन सुसम्पन्नं करोत्ययम्। परमेश्वरशक्त्या प्राक्पश्चिमभागयोः परिचरतोः सूर्याचन्द्रमसोः सूर्यः भुवनानि प्रकाशयति। चन्द्रस्तु तिथि–पक्ष–मासात्मना क्रतून् विदधत् पुनः पुनर्जायते। देहे चन्द्रो मनसि श्रितो भवति। अयं हिङ्कारत्वेन, प्रजापतेश्चक्षुत्वेन, शुद्धिहेतुत्वेन प्रतिपादितः। प्रतिग्रहे वासः सौम्यं भवति। सूर्यस्य सुषुम्णाख्यरश्मिरेवाग्नौ चन्द्रमसि च प्रविशति। तत्सम्बन्धेनाग्निज्वाला सूर्यचन्द्ररश्म्युभयात्मिका कथ्यते। या पूर्वा पौर्णमासी सानुमितिः। योत्तरा सा तिथिः राका। या पूर्वाऽमावास्यायाः सा सिनीवाली। योत्तरा सा कुहूः। एवञ्च अमावास्यायां सूर्ये चन्द्रप्रवेशकथनं ब्राह्मणग्रन्थकालवर्ति खगोलविज्ञानं सूचयति॥

चतुर्थी कला

# आरण्यकेषु चन्द्रः

## प्रस्तावना

भारतीयेषु चत्वारः आश्रमाः प्रसिद्धाः वर्तन्ते। ते हि ब्रह्मचर्यगृहस्थवानप्रस्थ-सन्यासाश्रमाः। वेदब्राह्मणारण्यकोपनिषद्भागश्च तैराश्रमैः क्रमशस्सम्बन्धितो विद्यते। यतो हि मन्त्रभागात्मको वेदः ब्रह्मचर्याश्रमिनां अध्ययनपरत्वं निर्दिशति। ब्राह्मणानि गृहस्थानां यज्ञादिकर्माणि निर्दिशन्ति। आरण्यको भागः पुरुषं आत्मोन्मुखं करोति, तन्मनो ध्याने स्थापयति। ततश्च इन्द्रियवशतारूपं वानप्रस्थं धर्मं बोधयति च। तद्विकासरूपो उपनिषद्भागस्तु आत्मज्ञानं वेदयति, मनः आत्मनि स्थापयति च। एवं भारतीयानां जीवनविधानं पूर्वाश्रमद्वये ज्ञानसमुपार्जनेन-कर्मानुष्ठानेन संघविकासायोपयुज्यते। उत्तराश्रम द्वयेतु मनसः निग्रहेण, मनसः आत्मनि स्थापनेन व्यक्तिविकासायोपयुज्यते। एवं धार्मिकजीवनक्रमेण जनं ज्ञानकर्मसमाध्यात्मदर्शनेषु प्रवर्तयति, एषः चतुराश्रमधर्मप्रतिपादकः वेदभागः। अत्र कश्चन क्रमो दृश्यते ज्ञानात् कर्म-कर्मणो ज्ञानमिति। एवं आलोच्य कर्मकर्तव्यमिति कृत्वा च कर्म आलोचनीयमिति।

''अरण्येऽध्ययनादेव आरण्यकमुदाहृत'' मित्युक्तेरारण्यकत्वमेषाम्। तानि च तत्तद्वेदभागभेदाः। ''इति तारानाथतर्कवाचस्पतिभट्टाचार्याः[1]।'' ''अरण्य एव पठ्यं स्यादारण्यकमितीर्यताम्[2]॥'' इति हि सायनाचार्याः। वैदिकसाहित्यचरित्र कारास्तु ''कर्मातिगानां वानप्रस्थाश्रमिणामेव तदध्ययनाधिकारात् तान्यारण्यशब्देनाभि-धीयन्ते'' इति कथयन्ति[3]। एवं तत्रैव ग्रन्थे ''ब्राह्मणग्रन्थानां पश्चात् आत्मविद्योपपादकानि विविक्तारण्ये पठितव्यानि आरण्यकानि उपपद्यन्त। तान्यपि क्रमेण श्रुतिपदवीमारोपितानि।'' इति प्रतिपादितमस्ति[3]। ऐतरेयारण्यकपरिशोधकेन

---

1. वा.पु.794;

2. ऐ.आ.सा.भाष्यारम्भश्लोकेषु 5;

3. वै.सा.च.पु.248, 38;

ए.बी.कीथ् महोदयेन स्वकीये उपोद्घाते "अरण्ये प्रतिपादनीयः उपदेशग्रन्थ एव आरण्यकं नाम" इति निर्देशितमस्ति[1]। ओल्डन् बर्गाचार्यस्तु "तेषामतिपवित्रत्वात् अरण्यैकान्तेऽध्येतव्यतया तथा व्यपदेश" इत्यभिप्रैति[2]। एवं स्थितेऽहि आरण्यकपदविवेचने "आरण्यकं च वेदेभ्यश्चौषधिभ्योऽमृतं यथा[3]।" इति भारतवचनं वेदेष्वारण्यकस्य सारभूतत्वं कथयति।

प्रत्येकवेदशाखानुसारेण ब्राह्मणानीव आरण्यकग्रन्थाः भिन्नाः सन्ति। तत्र ऋग्वेदस्य आरण्यकद्वयं विद्यते। ऐतरेयारण्यकम् शाङ्खायणारण्यकञ्च। कृष्णयजुर्वेदस्य तैत्तिरीयारण्यकमस्ति। सामवेदस्य जैमिनीयशाखायाः जैमिनीयोपनिषद्ब्राह्मणमेव तलवकाराण्यकनाम्ना प्रसिद्धं वर्तते। शुक्लयजुर्वेदस्य बृहदारण्यकमस्ति। अथर्ववेदस्य बहवः आरण्यकग्रन्थाः सन्ति, तथापि सर्वे च ते अलभ्याः एवेति ऐतिहासिकाः[4]। एष्वारण्यकग्रन्थेषु "जैमिनीयोपनिष्ब्राह्मणमिति सामवेदीयमारण्यकं ब्राह्मणभागे स्वीकृतम्। शुक्लयजुर्वेदीयं बृहदारण्यकं उपनिषद्भागे परिशील्यते। सम्प्रति ऐतरेयारण्यके चन्द्रप्रस्तावस्य विवेचना, तैत्तिरीयारण्यके तु चन्द्रप्रस्तावोपेतमन्त्रवाक्यानि च दीयन्ते।"

## सोमः क्रतुभिः सुक्रतुर्भूः

ऐतरेयारण्यके महत्वप्रापकं महाव्रताख्यं कर्म विद्यते। अत्र प्रातः सवनगतमाज्यप्रउगशस्त्रद्वयं निरूपयन्, माध्यन्दिनसवनगतं मरुत्वतीयादि निरूपणे धाय्यान्तरे वृष-शब्दं प्रशंसति एवमिदमारण्यकम्। "त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं वृष वृषात्वोभिर्महित्वेति"।[5] अत्र सोमः एवं प्रार्थितः। हे सोम! त्वमेतैः कर्मभिः शोभनकर्मा भव। तथात्वं वर्षकत्वैः कर्मभिः वर्षिता सन् महिवान् भव। इति॥

---

1. Originally an Aranyaka must have merely meant a book of instruction to be given in the forest [A.B.Kieth]
"The Aitaraya Aranyaka" Introduction P.16
2. वै.सा.च.पु.248;
3. भा.आदिपर्वणि.1.263;
4. सं.सा.च.(ते)पु.54;
5. ऐ.आ.1.2.1;

## देहे चन्द्रमसः स्थानम्

प्रजापतेः रेतो देवाः। देवानां रेतो वर्षम्। वर्षस्य रेत ओषधयः। ओषधीनां रेतोऽन्नम्। अन्नस्य रेतो रेतः। रेतसः रेतः प्रजाः। प्रजानां रेतो हृदयम्। हृदयस्य रेतो मनः। मनसः रेतो वाक्। वाचो रेतः कर्म। तदिदं कर्म पूर्वस्मिन् जन्मनि कृतं सत् इह जन्मनि वेदशास्त्रकर्मानुष्ठानब्रह्मोपासनब्रह्मज्ञानयोग्यः पुरुषो भवति। तस्मात् पुरुषात्मकब्रह्मणः वेदनीयस्य च लोकः स्थानमिति तस्य महत्वं सिद्धम्। सः पुरुषः इरामयः[1]। यद्धि इरामयः तंस्मात् सः हिरण्मयो भवति। यः पुमान् एवं हिरण्मयत्वगुणमुपास्ते स पुमान् स्वर्गलोके ज्योतिर्मयो भवति। तथाविधो भूत्वा सर्वप्राण्युपकारार्थं आदित्यमण्डलरूपेण सर्वदा दृश्यते। सः ब्रह्मा इमं पुरुषं प्रपदाभ्यां प्रापद्यत। तस्मात् पुरुषस्य प्रपदे प्रपदे इत्युच्येते। अन्येषां पशूनां तु पादाग्रौ शफ-खुराभिधेयौ स्तः। तत्पादाग्रयोः प्रविष्टं ब्रह्मोर्ध्वमुखेनोपसर्पत्। ततः तावूर्ध्वप्रदेशौ ऊरूशब्दवाच्यावभवताम्। ततो ब्रह्मा "उरु गृणीहीत्यब्रवीत्"। ब्रह्मणः सङ्कल्पात् उपरितनं स्थानं उदरशब्दवाच्यं विपुलछिद्रमभवत्। उर्वेव मे कुर्वित्यब्रवीत्, तदुरोऽभवत्। उदरं ब्रह्मेति शार्कराक्ष्याः उपासते। हृदयं ब्रह्मेति आरुणयः। ततो ब्रह्मा ऊर्ध्वमुपसर्पन् शिरोऽश्रयत। यच्छिरोऽश्रयत तच्छिरोऽभवत्। तच्छिरसः शिरस्त्वम्। ततः "चक्षुः श्रोतं मनो वाक् प्राणः" इति पञ्चदर्शनश्रवणादिव्यवहारश्रयः अस्मिन् शिरसि श्रयन्ते इति शिरसः शिरस्त्वं कथ्यते। एवं ताः श्रियः "अहमुक्थं अहमुक्थं" इति परस्परं कलहं कृतवन्तः। तदनु चक्षुरादिषु स्थिताः देवताः एवमब्रुवन्। "अस्मात् शरीरात् उत्क्रामाम तद्यस्मिन्न उत्क्रान्त इदं शरीरं पश्यति तदुक्थं भविष्यति" इति। ततो वागुदक्रामत् अवदन् अश्नन् पिबन्नास्तैव। ततश्चक्षुरुदक्रामत् अपश्यन् अश्नन् पिबन्नास्तैव। ततश्श्रोत्रमुदक्रामत् अशृण्वन् अश्नन् पिबन् आस्तैव। ततो मनः उदक्रामत् मीलित इव अश्नन् पिबन्नास्तैव। प्राणः उदक्रामत् ततः उत्क्रान्ते प्राणे पादादि शिरः पर्यन्ताः अवयवाः शीर्यमानाः आसन्। तदाश्रयं शीर्यत इति हेतोः शरीरमाख्यातम्। तदानीं वागादयः क्रमेण शरीरं प्रविष्टाः। तथापि शरीरं न चचाल। अन्ततः प्राणः शरीरं प्राविशत्। प्राणे प्रपन्ने शरीरमुदतिष्ठत्। ततः प्राणः उक्थमभवत्। ततो देवाः प्राणमूचुः "त्वमुक्थमसि त्वमिदं शरीरं सर्वमसि। तव वयं त्वमस्माकमसि"

---

1. ऐ.आ.2.1.3. इराशब्दोऽन्न वाची ॥ सा.भाष्यम् ॥;

इत्यूचुः। तं प्राणं देवाः प्रकर्षमुत्साहं प्रापितवन्तः। प्रणीतः सः प्रतायती प्रातरभवत्। समागादिती सायमभवत्। तत्र अहरेव प्राणः, रात्रिरपानः। वाग् अग्निः। चक्षुरसौ आदित्यः। चन्द्रमा मनः। दिशश्श्रोत्रम्। एते चत्वारः देवाः वागादिना देहे संमिलिताः[1]। किन्त्वेते बाह्ये विश्वे देवतारूपेण पृथक् पृथक्त्वेन परिदृश्यन्ते। एतेषां देहे प्रवेशनिर्गमादिकं प्राणः वेत्ति, न तु प्राणस्य सञ्चारं जानन्त्येते[2]।

अत्र हि देहे मनसः प्राणाधीनत्वमिव, तदधिदेवतायाः चन्द्रमसः सृष्टौ परमात्माधीनत्वं विज्ञायते।

## पुरुषस्य विभूतयः - तत्र चन्द्रः

प्रजापतिरूपस्य पुरुषस्य वाचा पृथिव्यग्निश्चेत्युभौ सृष्टौ। अस्यां पृथिव्यां व्रीहियवाद्याः ओषधयः उत्पद्यन्ते। अग्निश्च एनाः उत्पन्नाः ओषधीः स्वदयति। एवं प्रकारेणैतौ पृथिव्यग्नी पुरुषवाग्रूपं पितरं प्रत्युपकुरुतः। यावद्वस्तुजातमनुलक्ष्य पृथिवी प्रवृत्ता, अग्निश्च यावद्भोग्यजातमनुलक्ष्य प्रवर्तते तावान् वस्तुविशेषो देशविशेषोऽस्य वाग्विभूत्युपासकस्य भोगभूमि र्भवति। एवं च पृथिव्यग्न्यो र्भोगदेशो यावन्तं कालं न जीर्यते तावन्तं कालं उपासकस्यापि भोगदेशो न जीर्यते।

नासिकायामवस्थितो घ्राणेन्द्रियरूपो यः प्राणस्तेन अन्तरिक्षवायू सृष्टौ। अत्र अन्तरिक्षं प्राणिनां देशसंचारवार्ताश्रवणायोपकरोति। वायुश्च प्राणिभ्यः पुण्यं गन्धमावहति। एवं वाय्वन्तरिक्षौ पितरं प्राणं परिचरतः। अन्तरिक्षं वाय्वोः यावान् भोगभूमिस्तावान् तयोरुपासकस्य भोगभूमि र्भवति। तौ च यावन्तं न जीर्यतः तावन्तं कालं प्राण्युपासकस्य भोगदेशो न जीर्यते।

चक्षुषा सृष्टौ द्यौश्चादित्यश्च। द्युलोको हि मेघं सम्पाद्य वृष्टिद्वारेण व्रीह्याद्यन्नं, प्रयच्छति। आदित्यस्तु स्वकीयं ज्योतिः प्रसार्य वस्तूनां प्रकाशमभिव्यक्तीकरोति। तयोः द्युलोकादित्ययोः यावान् भोगभूमिस्तावान् तयोरुपासकस्य भोगभूमिर्भवति। तौ च यावन्तं कालं न जीर्यतः तावन्तं कालं चक्षुरुपासकस्य भोगदेशो न जीर्यते।

---

1. वागग्निश्चक्षुरादित्यश्चन्द्रमा मनो दिशः श्रोत्रं स एष प्रहितां संयोगोऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत्तदुक्थं भवति, इति॥ ऐ.आ.2.1.5;
2. ऐ.आ.2.1.3-5 खण्डाः ;

श्रोत्रेण सृष्टाः दिशश्च चन्द्रमाश्च। श्रोत्रोपासकं पुरुषं प्रति दिग्भ्यस्सकाशात् सेवकाः पुरुषाः, भोग्यवस्तूनि चाऽगच्छन्ति। तथा मूर्तद्रव्यव्यवधानाभावे सति दिग्भ्यः सकाशाद्दूरे प्रोक्तमपि वचनं विशषेण श‍ृणोति। चन्द्रस्तु श्रोत्रोपासकस्य पुरुषस्य दर्शपूर्णमासादिपुण्यकर्मार्थं बहुविधमासंगतान् शुक्लकृष्णपक्षान् संपादयति। दिक्चन्द्रयोः यावान् भोगभूमिस्तावान् तयोरुपासकस्य भोगभूमिर्भवति। दिक्चन्द्रौ यावन्तं कालं न जीर्यतः तावन्तं कालं श्रोत्रोपासकस्य भोगभूमि र्न जीर्यते।

आपश्च वरुणश्च मनसा सृष्टौ। तटाकपुण्यनद्यादिषु वर्तमानाः आपः स्नानाचमनमार्जनद्वारेणास्योपासकस्य श्रौतस्मार्तपुण्यकर्मानुष्ठानाय श्रद्धामुत्पादयन्ति। वरुणश्चास्य पुत्रादिरूपां प्रजां पापवृत्ते र्निवार्य धर्मे प्रवर्तयति। अप्वरूणयो र्यावान् भोगभूमि र्भवति, तावान् तयोरुपासकस्य भोगभूमि र्भवति। एवं च अप्वरुणौ यावन्तं कालं न जीर्यतः तावन्तं कालं मनसः उपासकस्य भोगभूमि र्न जीर्यते।

चक्षुष्-श्रोत्र-मनांसि च स्वस्वकर्मभिः स्वस्वपितॄन् परिचरन्ति। एवं पञ्चविध-पुरुषविभूतिषु श्रोत्रविभूतिविषयकश्चन्द्रः पुरुषस्य पुण्यकार्यार्थं आयुर्विचिनोति[1]।

## चन्द्रमसः सृष्टिः

सृष्टेरग्रे आत्मा एक एव आसीत्। सः लोकान् सृजामीति सङ्कल्प्य, इमान् लोकान् असृजत। ते च लोकाः ''अम्भो मरीचि मर मापः'' इत्याख्याः। द्युलोकस्योपरि महर्लोकजनोलोकतपोलोकसत्यलोकाः ये सन्ति, यश्च सर्वेषां देवानामाश्रयभूतो द्युलोकः, सर्वमेतत् अम्भशशब्दवाच्यम्। लोकेषु पञ्चभूतानां साधारणत्वेऽपि जलमस्मदुपलब्धि-योग्यत्वेन प्राधान्यमभिप्रेत्य '' अदोऽम्भ'' इत्युक्तम्। उपरितनलोकाद् वृष्टिद्वारेणाऽगताम्भ एव अस्माभिः साक्षादुपलभ्यते, न तु भूतान्तरम्। सूर्यमरीचीनामाधारत्वादन्तरिक्षलोको ''मरीचय'' इति शब्देनोच्यते। भूलोकवर्तिनां प्राणिनां सहसा म्रियमाणत्वात् ''मर'' शब्देन पृथिव्युपलक्ष्यते। पृथिव्याः अधस्तात् पातालविशेषरूपा भोगभूमयो याः सन्ति ताः सर्वास्तल्लोकवासिभि र्नागादिभिराप्यायमानत्वादाप इत्युच्यन्ते। सः परमेश्वरः पुनरप्येवं विचारितवान् ''इमे खलु लोका निष्पन्नास्तेषां भोगस्थानानामचेतनानां लोकानां रक्षणार्थं चेतनान् लोकपालान् देवान् सर्वथा स्रक्ष्यामी'' ति। तदनु सः परमेश्वरः

1. ऐ.आ.2.1.7;

अद्भ्य एव पुरुषं समुद्धृत्य मूर्तं कठिनमकरोत्। समिष्टिरूपोऽयं विराट्पुरुषः ब्रह्माण्डरूपस्य लोकस्य पालकः। तं विराट्पुरुषदेहमभितस्तत्तच्छिद्रतद्गतेन्द्रिय-तदभिमानिदेवतासृष्ट्यर्थं सः परमेश्वरः पर्यालोचितवान्। यथा पक्षिसर्पादीनां पक्वमण्डं भिन्नं भवति तद्वत्, अभितः पर्यालोचितस्य विराट्पिण्डस्य मुखछिद्रं विदारितमभूत्। तस्माच्च मुखछिद्रात् वागिन्द्रियं निष्पन्नम्। तस्माच्चेन्द्रियात् अग्निर्देवता निष्पन्ना। एवमेव नासिके निरभिद्येतां, नासिकाभ्यां प्राणः प्राणाद्वायुः। एवं अक्षिणी निरभिद्येतां, अक्षिभ्यां चक्षुः, चक्षुषः आदित्यः। कर्णौ निरभिद्येतां, कर्णाभ्यां श्रोत्रम्, श्रोत्राद्दिशः, दिशः त्वक् निरभिद्यत, त्वचो लोमानि, लोमभ्यः ओषधिवनस्पतयः, हृदयं निरभिद्यत, हृदयात् मनः, मनसः चन्द्रमाः। नाभिः निरभिद्यत, नाभ्या अपानः, अपानात् मृत्युः। शिशनं निरभिद्यत, शिश्नात् रेतः, रेतसः आपः[1]।

एवं प्रजापतिरेताः देवताः सृष्ट्वा, ताः विराट् देहे अपातयत्। तं च विराट्देहं क्षुत्पिपासाभ्यां संयोजितवान्। तदनु ताः इन्द्रियाभिमानिन्यो देवताः स्त्रष्टारं परमेश्वरं प्रत्येवं अब्रुवन् "आयतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिताः अन्नमदाम"[2] इति। ताभ्यः प्रजापतिः गामानयत्। "नायं अलं" इति तेऽब्रुवन्। ताभ्यः अश्वमानयत्। तदपि नालमिति तेऽब्रुवन्। ताभ्यः पुरुषमानयत्। सुकृतमिति देवताः प्रजापतिमूचुः। यथायतनं प्रविशेति ताः अब्रवीत् प्रजापतिः। अग्निर्वाक् भूत्वा मुखं प्राविशत्। वायुः प्राणो भूत्वा नासिके प्राविशत्। आदित्यः चक्षु र्भूत्वा अक्षिणी प्राविशत्। दिशः श्रोत्रं भूत्वा कर्णौ प्राविशत्। ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्। चन्द्रमा मनो भूत्वा हृदयं प्राविशत्। मृत्यु रपानो भूत्वा नाभिं प्राविशत्। आपो रेतो भूत्वा शिश्नं प्राविशत्। ये क्षुत्पिपासे परमेश्वरेण विराड्देहे संयोजिते ते उभे परमेश्वरं प्रति स्वार्थं स्थानविशेषमनुगृहाणेत्यब्रूताम्। ईश्वरस्तु स्थानविशेषमदृष्ट्वा "वां एतास्वेव देवतासु आभजामि, भागिन्यौ च करोमि" इति तेऽब्रवीत्। तस्मात् यस्यै कस्यै च देवतायै हविर्गृह्यते तत्र भागिन्यावेव अशनापिपासे भवतः[3]।

अत्र चन्द्रमसः प्रजापत्या सृष्टिः, पुरुषे तन्निवासकल्पनञ्च विज्ञायते। तत्र च तन्निवासः मन एवेति कथितः।

---

1. ऐ.आ.2.4.1; 2. ऐ.आ.2.4.2; 3. ऐ.आ.2.4.2;

## चन्द्रः आदित्यः

विश्वे चत्वारः पुरुषाः सन्तीति बाध्वः प्रोवाच। ते हि शरीरपुरुषः, छन्दः पुरुषः, वेदपुरुषः, महापुरुषः इति। अत्र शरीरपुरुष इति यमवोचाम स एवायं दैहिकः आत्मा, तस्य योऽयमशरीरः प्रज्ञात्मा सः रसः। छन्दः पुरुष इति यमवोचाम सः अक्षरसमाम्नाय एव,। तस्यैतस्य अकारो रसः। वेदपुरुष इति यमवोचाम सो हि येन वेदान् वेद वयम्, ऋग्वेदं यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मा रसः। तस्मात् ब्रह्माणं ब्रह्मनिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत्। महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन् अन्यानि भूतान्यैक्या भावयन् भवति, तस्यैतस्य महापुरुषस्य असौ मण्डले दृश्यमानः आदित्यः रसः। स यश्चायमशरीरः प्रज्ञात्मा, यश्चासावादित्यः एकमेतदिति विद्यात्। तस्मात् पुरुषं प्रत्यादित्यो भवति। तदप्येतदृषिणोक्तम् ''चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च'' इति एतामनुविधां संहितां संधीयमानां मन्ये इत्येवं बाध्वो महर्षिरुक्तवान्।

बह्वृचाः अध्यात्ममधिदैवतमेकमेव सन्तं परमात्मानं महत्युक्थे ध्यायन्ति। अध्वर्यवस्तु परमात्मानं इष्टकाचयनेन निष्पादितेऽग्नौ उपासते। छन्दोगास्तु महाव्रताख्ये कर्मणि एतमुपासते। एवं तत्तद्वेदगतकर्माङ्गेषु तैस्तैः एतं अस्यां दिवि वायौ आकाशे अप्सु ओषधीषु वनस्पतिषु चन्द्रमसि नक्षत्रेषु सर्वेषु भूतेषु च तत्तत्फलकामाः उपासते। वेदान्ताभिज्ञास्तु एतमेव चिदात्मानं जगत्कारणं ब्रह्मेत्याचक्षते। तस्मादादित्यमण्डले शरीरे च वर्तमानस्यैकस्य परमात्मनः उपासनं प्रशस्तम्। एवं संवत्सरनिष्पादकाऽदित्येन सहैकत्वेन चिन्त्मानत्वात् स एषः ध्येयः पुरुषः संवत्सररूपकालात्मकसदृशः चक्षुर्मयः मनोमयः श्रोत्रमयः छन्दोमयः वाङ्मयः आत्मा। ईदृशमात्मानं विदित्वोपास्य यः कोऽपि एतं संवत्सरसमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयं परस्मै शंसति[1] ॥

यः परार्थं शंसति तस्य गुरुमुखादधीताः अपि वेदाः निष्फलाः भवन्ति। एवं अध्ययननिमित्तं सुकृतं न निष्पद्यते, तथा अर्थज्ञानमपि न सम्पद्यते। अतश्च परार्थानुष्ठाने महान्प्रत्यवायोऽस्ति। तस्मात् विद्वान् अध्वर्युः परार्थं महाव्रताङ्गमग्निचयनं न कुर्यात्, उद्गाता च न स्तुवीत, होतापि महाव्रताख्येनाह्नोपलक्षितं शस्त्रं परार्थं न शंसेत्। कामं

---

1. ऐ.आ.3.2.3;

पित्रे वाऽऽचार्याय वा शंसेदात्मन एवास्य तत्कृतं भवति। इत्थमेतौ शंसनस्य विधिनिषेधौ।

आदित्यमण्डले श्वशरीरे च तत्वमेकमेवेति यदवोचाम तदेकत्वं तिरोधाय तावादित्यस्वशरीरपुरुषौ यदा विमुक्तौ भवतः तदा कानिचिदरिष्टानि आयुषः अल्पत्वज्ञापकानि भवन्ति। तत्रैकमरिष्टं कथितमिदमारण्यकमेवम्। यदा चन्द्रमा इव आदित्यो दृश्यते, आदित्यः शीतरश्मिर्भासते न तु दृष्टिप्रतिघातकरा उष्णरश्मयः प्रादुर्भवन्ति तदिदमेकं अरिष्टमायुषः अल्पत्वसूचकम्। एवं द्यौर्लोहिता दृश्यते, पायुद्वारमत्यन्तविस्तृतं भवति, काककुलायगन्धिकमस्य शिरः स्वकीयं दुर्गन्धं दूरदेशे प्रसारयति, एवमुत्पन्ने पुरुषः मृतप्राय एव, न दीर्घकालं जीवति।

अरिष्टदर्शनेन प्रत्यासन्नं मरणं निश्चित्यावस्थितः पुरुषः लौकिकं वैदिकं वा कर्तव्यशेषं यन्मनसि धारयति तदानीं तत्सर्वं सहसा कुर्वीत। तावदविलम्बसिद्ध्यै ''यदन्ती'' त्यादिका विहिता ऋचः तत्तत्संख्याकाः सर्वाः जपेत्[1]।

एवं च तत्तद्देवगतकर्माङ्गेषु तैस्तैः पुरुषैः आदित्ये आत्मनि च निष्ठं एतं परमात्मानं चन्द्रमसि च उपासत इति, ततः आदित्यं तेजः चन्द्रमसि भाव्यत इति, विज्ञायते। अपि च येनादित्यः चन्द्रमा इव अतीक्ष्णकरो दृश्यते सः चिरं न जीवतीति, मरणसुचकारिष्टेषु अन्यतमं अकथयत् आरण्यकमिदम्।

## अभिषिक्तेषु चन्द्रः

ऐतरेये पञ्चमारण्यके प्रथमाध्याये महाव्रतः प्रतिपादितः। तत्र होता अभिषिक्तान् सप्तदेवराजानः उच्चरन् आज्याहुतीर्जुहोति। ते हि वायुः पूषा वरुणः सोमः अग्निः सूर्यः नक्षत्राणि इति सप्त। अतश्चन्द्रः अभिषिक्तेषु देवराजेष्वन्यतम इति प्रतिभाति[2]।

## शिक्षकः चन्द्रः

ऐतरेयस्य पञ्चमारण्यके द्वितीयाध्याये द्वितीयखण्डे बृहतीपाठादूर्ध्वं पठनीयं मन्त्रजातं दर्शितमस्ति। तत्र नव ऋचः समाख्याताः। तासु नवमी ऋक् ''शं पदं मघं

---

1. ए.आ.3.2.4;
2. आदित्या मा विश्वे अवन्तु देवाः सप्त राजानो य उताभिषिक्ताः। वायुः पूषा वरुणः सोमो अग्निः सूर्यो नक्षत्रैरवत्विह माऽनु, इति॥ ऐ.आ.5.1.1

रयिषणि न सोमो अव्रतं हिनोति न स्पृशद्रयिः, इति।'' अर्थात् हे इन्द्र! हविर्लक्षणस्य धनस्य दातरि मयि सुखं निवासस्थानं धनं च सम्पादय। योऽयं सोमः सोऽयं अनुष्ठानरहितं न पणयति। ततः फलभूतं धनमपि अनुष्ठानरहितं पुरुषं न प्राप्नोति। एवं सोमः अव्रतस्य शिक्षकत्वेन प्रतिपादितः[1]।

एवं चन्द्रः ऐतरेयारण्यकेऽस्मिन् शुभप्रदत्वेन, वर्षकत्वेन, देहे मनो निष्ठत्वेन, पुरुषविभूतिषु श्रोत्रविभूतिविषयकश्चन्द्रः पुरुषस्य पुण्यकार्यार्थं आयुः प्रदत्वेन, एवं प्रजापतेः मनसः चन्द्रमसः प्रादुर्भावस्समजनीति, अपि च चन्द्रमाः मनोभूत्वा हृदयं प्राविशदिति, आदित्यं तेजः चन्द्रमसि भाव्यते इति, सूर्यः मरणासन्नसमये पुरुषस्य चन्द्रवत् अतीक्ष्णकरत्वेन अरिष्टसूचक इति, अव्रतस्य शिक्षकत्वेन, अभिषिक्तदेवतास्वन्यतमत्वेन सुविशदतया प्रतिपादितः!

## तैत्तिरीयारण्यकगतचन्द्रसम्बन्धि मन्त्रसूची

व्याख्योपेतः तैत्तिरीयारण्यकग्रन्थः नोपलब्धः मम। केवलं मूलग्रन्थाधारेण चन्द्रप्रस्तावमन्त्राणां समीक्षा कर्तुं न शक्यते मया। अतः चन्द्रेण तत्पर्यायपदेन विलसितस्य मन्त्रस्य भागः संख्या च दीयते मया॥

| क्र.सं. | मन्त्रभागः | मन्त्रसंख्या |
|---|---|---|
| 1. | चन्द्रमाश्चतुरुच्यते॥ | 1-29. |
| 2. | चन्द्रमा वा अपामायतनम्॥<br>यश्चन्द्रमस आयतनं वेद॥<br>आपो वै चन्द्रमस आयतनम्॥ | 1-84. |
| 3. | राज्ञः सोमस्य तृप्ता सः॥ | 1-114. |
| 4. | चन्द्रसमे नक्षत्रेभ्यः॥ | 1-129. |
| 5. | सोमस्सोमस्य पुरोगाः॥ | 3-3. |
| 6. | चन्द्रमाष्षड्होता॥ | 3-9. |
| 7. | चन्द्रमा ऋतूनन्नः | 3-11. |
| 8. | चन्द्रमसो रोहिणी॥ | 3-14. |

---

1. शं पदं मघं रयिषणि न सोमो अव्रतं हिनोति न स्पृशद्रयि, इति॥ ऐ.आ.5.2.2

| क्र.सं. | मन्त्रभागः | मन्त्रसंख्या |
|---|---|---|
| 9. | दीक्षा सोमस्य ॥ | 3-15. |
| 10. | सोमाय वासः ॥ | 3-16. |
| 11. | चन्द्रमा मनसो जातः ॥ | 3-37. |
| 12. | त्वं यज्ञस्त्वमुवेवासि सोमः ॥ | 3-43. |
| 13. | शर्मचन्द्रश्च सूर्यश्च ॥ | 4-1. |
| 14. | सोमाय त्वा रुद्रवते स्वाहा ॥ | 4-31. |
| 15. | विश्वावसु सोम गन्धर्वम् ॥ | 4-47. |
| 16. | चन्द्रमा शान्ति ॥ | 4-88. |
| 17. | सोमाय स्वाहा रुद्रवते स्वाहा ॥ चन्द्रमा वै सोमो रुद्रवान् तस्मादेवैनं जुहोति ॥ | 5-67. |
| 18. | सोमोऽभिकीर्यमाणः ॥ | 5-103. |
| 19. | चन्द्रमा भूत्वा नक्षत्राण्येति ॥ | 5-106. |
| 20. | सोमो भूत्वा सुत्यामेति ॥ | 5-108. |
| 21. | सोम एकेभ्यो पवते ॥ | 6-7. |
| 22. | अग्निष्टद्विश्वादनृणं कृणोतु सोमश्च यो ब्राह्मणमाविवेश ॥ | 6-10. |

## निष्कर्षः

ब्रह्मचर्यगृहस्थवानप्रस्थसन्यासाः इति चतुराश्रमानामनुबन्धिनः वेदभागाः वेदब्राह्मणारण्यकोपनिषद इति वक्तुं शक्यन्ते। आरण्यको भागः पुरुषमात्मोन्मुखं करोति, तन्मनो ध्याने स्थापयति च। ततश्चेन्द्रियवशतारूपं वानप्रस्थं धर्मं बोधयति। वानप्रस्थाश्रमे जनः अरण्येषु प्रायशः विविक्ततया जीवति। तदानीं तत्रैकान्ते अध्येतव्यत्वेन एषः वेदभागः आरण्यकत्वेन प्रतिपादित इति विदुषामभिप्रायः। वेदस्य सारभूतत्वेन महाभारते प्रतिपादितमिदं आरण्यकं वाङ्मयम्। प्रत्येकवेदशाखानुसारेण आरण्यकाः ग्रन्थाः भिन्नभिन्नाः विद्यन्ते। तत्र "ऐतरेयारण्यकम्" एवात्र प्रधानतया परिशीलितम्।

चन्द्रोऽस्माकं शुभप्रदः वर्षप्रदश्च। पुरुषस्य देहेऽस्य स्थानं मनः। एवञ्च देहे मनसः प्राणाधीनत्वमिव, सृष्टौ चन्द्रमसः परमात्माधीनत्वं विज्ञायते। वाक्-चक्षुष्-श्रोत्र-मनो-प्राणरूपेषु पुरुषविभूतिषु श्रोत्रविभूतिविषयकश्चन्द्रः पुरुषस्य आयुः पुण्यकार्याचरणाय विचिनोति। प्रजापति र्यदा देवताः सृष्ट्वा ताः देवताः विराट्देहेऽपातयत् तदा चन्द्रः मनो भूत्वा हृदयं प्राविशत्। आदित्ये आत्मनि च निष्ठं परमात्मानं चन्द्रमसि च पश्यन् पुरुषः, आदित्यं तेजः चन्द्रमसि भावयति। एवमादित्यं चन्द्रं इवातीक्ष्णकरत्वेन यः पश्यति सः चिरं न जीवति। सदाचारहीनं जनं दरिद्रं करोत्ययं चन्द्रः। एवं सः तत्र अव्रतस्य शिक्षकत्वेन दृश्यते। एतादृशोऽयं चन्द्रः अभिषिक्तेषु देवराजेषु अन्यतमत्वेन प्रतिपादितः आरण्यके वाङ्मये॥

## पञ्चमी कला

# उपनिषत्सु चन्द्रः

### प्रस्तावना

भारतीयसंस्कृतेः मूलाधारः वेदधर्मः। वेदेषु ये ज्ञानविषयाः सन्ति ते उपनिषत्सु समीकृताः इति विदुषामभिप्रायः। तच्च समीकरणं भगवता वेदव्यासेन कृत इति च श्री वाविल्ल रामस्वामि शास्त्रिणामभिप्रायः[1]। वेदानामन्तिमज्ञानोपदेशका इत्युपनिषदः "वेदान्ताः" इत्युच्यन्ते इति कथयन्ति मनीषिणः।

### 'उपनिषद्' शब्दविचारः

उपनिषद् शब्दस्तु मुख्यवृत्त्या ब्रह्मविद्यैव। उप समीपस्थं प्रत्यगात्मैकत्वं निश्चितं सत् तत्परान् सहेतु संसारं साधयतीत्युपनिषद् इत्युत्पत्तेः, ग्रन्थस्तु विद्यासम्पर्कत्वेनोपचारात् उपनिषदित्युच्यत इति श्री शङ्करभगवत्पादवचनानामेव विस्तृतिरूपेणोपनिषद् शब्दः प्रतिपादितः नित्यानन्दमुनिना[2]। आचार्यः रामचन्द्रमिश्रस्तु "उपनिषच्छब्दस्य रहस्यमर्थः, अध्यात्मविद्यारहस्यप्रतिपादकाः वेदभागाः उपनिषदः कथ्यन्त" इत्युदाजहार[3]। "उपनिषदः कर्माङ्गभूतं ज्ञानकाण्डं प्रतिपादयन्त्यः ब्राह्मणग्रन्थाङ्गभूतत्वेन प्रतीयन्ते तथापि वस्तुतस्ताः कर्ममार्ग परिपन्थिभूतमेव ज्ञानमार्गमुपदिशन्तीत्यवथेयम्" इति वैदिकसाहित्यचरित्रमभिप्रैति[4]।

उपनिषत्सु प्रतिपाद्यत्वेनाधिकुतो विषयः विश्वात्मतत्वम्। ऋग्वेदोक्तः पुरुषोऽत्रात्मत्वेन प्रतिपन्नः। तथा ऋग्वेदे साकारत्वेन वर्ण्यमानः प्रजापतिः जगत् स्रष्टृत्वेनाम्रातः। उपनिषत्सु पुनः, निराकारत्वेनावस्थितं परब्रह्मैव जगत्कारणत्वेन अभ्युपगतम्। अयमेवोपनिषत्सु प्राधान्येन प्रतिपाद्यो विषयः। न खलु उपनिषदां

---

1. द्वादशोपनिषत्तुलु आन्ध्रानुवादपीठिकायाम्।
2. बृ.आ.उ.मिताक्षरीव्याख्याभूमिका। 3. सं.सा.इ.पु.12 4. वै.सा.च.पु.266

परमोद्धेशः ऐहिकसुखानुभूतौ पारत्रिकफलप्राप्तौ वा किन्तु तत्वज्ञानेन जीवात्मनः संसारबन्धविच्छित्तिसंपादनद्वारा परमात्मनस्सायुज्यप्राप्तावेव। एतया दृष्ट्या कर्मणामपकृष्टत्वं तत्वज्ञानस्य सर्वोत्कृष्टत्वं च पर्यवस्यति।

## उपनिषद्संख्या

एतादृशोपनिषदां संख्या त्वष्टोत्तरशतमिति(108)मुक्तिकोपनिषदि कथिता। तत्र दश(10)ऋग्वेदसम्बन्धिन्यः, एकोनविंशतिः(19)शुक्लयजुर्वेदीयाः, द्वात्रिंशत्(32) कृष्णयजुर्वेदीयाः, षोडश(16) सामवेदीयाः, एकत्रिंशत्(31) अथर्ववेदसम्बद्धाः[1]।

---

1. ऐतरेयकौशीतकीनादबिन्द्वात्मबोधनिर्वाणमुद्गलाक्षमालिकात्रिपुरासौभाग्यबह्वृचानां दशसंख्याकानामुपनिषदां वाङ्मेमनसीति शान्तिः ॥ मुक्ति। 54;
ईशावास्य बृहदारण्यक जाबाल हंस परमहंस सुबाल मन्त्रिका निरालम्ब त्रिशिखिब्राह्मणमण्डलब्राह्मणाद्वयतारक पैङ्गल भिक्षु तुरीयातीताध्यात्म तारसार याज्ञवल्क्य शाट्यायनि मुक्तिकानां शुक्लयजुर्वेदगतानां एकोनविंशति संख्याकानामुपनिषदां पूर्णमिति शान्तिः ॥ 55; कठवल्ली तैत्तिरीयक ब्रह्म कैवल्य श्वेताश्वतर गर्भ नारायण अमृतबिन्दु अमृतनाद कालाग्निरुद्र क्षुरिका सर्वसार शुकरहस्य तेजोबिन्दु ध्यानबिन्दु ब्रह्मविद्या योगतत्व दक्षिणामूर्ति स्कन्द शारीरक योगशिखा एकाक्षर अक्षि अवधूत कठरुद्र हृदय योगकुण्डलिनी पञ्चब्रह्म प्राणाग्निहोत्र वराह कलिसंतरण सरस्वतीरहस्यानां कृष्णयजुर्वेदगतानां द्वात्रिंशत्संख्याकानामुपनिषदां सहनाववत्विति शान्तिः ॥ 56; केन छान्दोग्य आरुणि मैत्रायणि मैत्रीयी वज्रसूचिका योगचूडामणि वासुदेव महत् सन्यास अव्यक्तकुण्डिकासावित्रीरुद्राक्षबालादर्शना-जाबालीनां सामवेदगतानां षोडशसङ्ख्याकानामुपनिषदां आप्यायन्त्विति शान्तिः ॥ 57; प्रश्नमुण्डकमाण्डूक्याथर्वशिरोऽथर्वशिखाबृहज्जाबालनृसिंहतापिनीनारदपरिब्राजकसीता-शरभमहानारायणरामरहस्यरामतापिनीशाण्डिल्यपरमहंसपरिव्राजिकअन्नपूर्णासूर्याऽत्मापाशुपतपरब्रह्मत्रिपुरतापनदेवीभावनाभस्मजाबालगणपतिमहावाक्य गोपालतापिनकृष्णहयग्रीवदत्तात्रेयगारुडानामथर्ववेदान्तर्गतानामेकत्रिंशत्संख्याकानामुप-निषदां भद्रं कर्णेभिरिति शान्तिः ॥58; मुक्ति. 1.54, 55, 56, 57, 58.
उपनिषद्वाक्यकोशः - जि.ए.जाकब्;

एतास्वष्टोत्तरशतोपनिषत्सु वेदान्ताचार्याः स्वमतानुसारिव्याख्यया काश्चोपनिषदो भूषितवन्तः। तत्र दशोपनिषदः प्रसिद्धाः, प्रस्थानात्रये च स्वीकृताः आसन्। ताश्च ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य-बृहदारण्यकोपनिषदः। शाङ्करव्याख्योपेतत्वात् श्वेताश्वतरोपनिषदं एकादशत्वेन, नृसिंहतापिन्युपनिषदं द्वादशत्वेन स्वीकुर्वन्ति विद्वांसः।

## चन्द्रप्रस्तावोपेताः उपनिषदः

विस्तृते उपनिषद्वाङ्मयेऽस्मद्चन्द्रप्रस्तावः अनेकासूपनिषत्सु संप्राप्यते। तत्र प्रधानतः ईश-केन-माण्डूक्येत्युपनिषत्त्रयमपहायान्यत्र दशोपनिषदन्तर्गतासु सप्तसु उपनिषत्सु चन्द्रप्रस्तावस्समुपलभ्यते। एवञ्च मैत्रेय-राम-कौषीतक-श्वेताश्वतर-कैवल्य-नृसिंह-ब्रह्मवैवर्त-शीर्ष-नाद-प्राणाग्निहोत्र-हंसेत्येवमेकादशोपनिषत्सु चन्द्रप्रस्तावो विद्यते। भगवद्गीतापि उपनिषदिति सर्वामोदित विषय एव। तत्रापि चन्द्रप्रस्तावस्य सत्वात् साकल्येन एकोनऽविंशत्युपनिषदः चन्द्रविषयप्रतिपादकाः आसन् इति विज्ञायते। एवं विस्तृते औपनिषच्चन्द्रप्रस्तावे प्रधानतया दशोनिषदन्तर्गताः सप्त, यथालब्धमन्याश्च परिशीलिताः।

## कठोपनिषद् तत्र चन्द्रः

कठोपनिषदि चन्द्रप्रस्तावः एकदैवोपलभ्यते। ब्रह्मतत्त्वं निर्दिशन् यमः नचिकेतवे उपदिशति। स्वात्मभूते ब्रह्मणि सूर्यः चन्द्रः तारकाग्निविद्युतश्च न प्रकाशन्ते। ते सर्वे दीप्यमानं परमेश्वरमनुसृत्य भान्ति। तस्यैव दीप्त्या सर्वमिदं सूर्यचन्द्रादि जगत् विभाति[1]। एवं ब्रह्मणः स्वतो भारूपत्वं तस्यकार्यगतेन दीप्त्या चन्द्रादीनां प्रकाशत्वं समुपदिष्टम्।

## प्रश्नोपनिषदि चन्द्रः

प्रश्नोपनिषदि भरद्वाजस्य पुत्रः सुकेशः, शैब्यः सत्यकामः, गार्ग्यः सौर्यायणी, आश्वलायनः कौसल्यः, भार्गवः वैदर्भिः, कात्यायनः कबन्धी इत्येते षट् ऋषिकुमाराः ब्रह्मपराः ब्रह्मनिष्ठाः ब्रह्मान्वेषणतत्परा स्सन्तः तत्सर्वं वक्ष्यतीति भगवन्तं पिप्पलादं

---

1. न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतोभान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥ कठ.5.15:

समुपागताः। तदानीं स महर्षिः पिप्पलादः "तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्सथ, तदनु यथाकामं प्रश्नान् पृच्छत, यदि विज्ञास्यामः सर्वं वो वक्ष्यामः" इति जगाद। पश्चात् विहितगुर्वाज्ञः कात्यायनः कबन्धिः गुरुमुपेत्य पप्रच्छ "भगवन् कुतः इमाः प्रजाः प्रजायन्ते" इति। पिप्पलादः समाधत्ते। प्रजाकामः प्रजापतिः तपस्तप्त्वा मिथुनमुत्पादितवान्। रयिं प्राणरूपं तन्मिथुनं प्रजाः करिष्यतीति सोऽमन्यत। तत्र प्राणः एव आदित्यः। रयिरेव चन्द्रमाः। मूर्तामूर्तं सर्वं जगदन्नात्मकं रयिरेव[1]। एवंमिथुनात्मकसृष्टौ चन्द्रस्य पदार्थमयत्वेन (Materialist) प्राधान्यं विशदीचकार।

अपि चैतन्मिथुनमेव कालात्मकः संवत्सरः। तस्य द्वे अयने, एकं दक्षिणायनं अपरञ्चोत्तरायणम्। ये इष्टापूर्ते कृतमित्युपासन्ते, ते चन्द्रलोकमुपगच्छन्ति, पुनर्जन्म लभन्ते च। तस्मादेव ऋषयः प्रजाकामाः दक्षिणायनं प्रतिपद्यन्ते। यतोऽयं दक्षिणायनः पितृयानोपलक्षितश्चन्द्रो भवति[2]। मासरूपकालात्मके मिथुने कृष्णपक्षः शुक्लपक्षः इति पक्षद्वयं विद्यते। तत्रायं चन्द्र एव कृष्णपक्षः[3]। अहोरात्रात्मके मिथुने रात्रिरेव चन्द्रः[4] एवं जगतः सृष्टौ सूर्यचन्द्रात्मकमिथुनस्य कारणत्वं प्रतिपादयन्तीयमुपनिषद्, तत्र केवलकर्मठानां चन्द्रलोकप्राप्तिः, ज्ञाननिष्ठकर्मवतां सूर्यलोकप्राप्तिर्भवतीति विशदतया विशदीचकार॥

पञ्चमे प्रश्ने शिबिपुत्रः सत्यकामः महर्षिं पिप्पलादमुपेत्यैवमपृच्छत् "भगवन् मनुष्येष्वायुः पर्यन्तं ओङ्कारध्यानपरः कतमं लोकं गच्छति?" इति। तत्र समाधत्ते पिप्पलादः। त्रिमात्रात्मके ओङ्कारे ऋग्वेदस्वरूपस्य अकारस्योपासकःज्ञानीभूत्वा उत्तमं

---

1. आदित्यो ह वै प्राणो रयिरेव चन्द्रमा रयिर्वा एतत्सर्वं
   यन्मूर्तं चामूर्तं च तस्मात् मूर्तिरेव रयिः॥ प्रश्न.1.5;
2. संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च। तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते। त एव पुनरावर्तन्ते तस्मादेत ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते। एष ह वै रयिं र्यः पितृयानः॥ प्रश्न.1.9;
3. मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेत
   ऋषयः शुक्ल इष्टं कुर्वन्तीतर इतरस्मिन्॥ प्रश्न.1.12;
4. अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते॥ प्रश्न.1.13;

मनुष्यजन्म लभते। यजुर्वेदस्वरूपस्य द्वितीयमात्रस्य उकारस्योपासकः अन्तरिक्षात्मकं चन्द्रलोकमभ्येति। सः सोमलोके विभूतिमनुभूय मनुष्यलोकं पुनरावर्तते। यस्तु अकारोकारमकारात्मकत्वेन प्रणवमुपासते सः शाश्वतं परमात्मानमध्येति। एवं ऋग्वेदधिया मनुष्यलोकं, यजुर्वेदधियात्वन्तरिक्षात्मकं चन्द्रलोकं, सामवेदधिया प्राप्तिकार्यं प्रणवस्वरूपं यो विद्वान् वेत्ति सः जाग्रत्स्वप्रसुषुप्त्यादि विवर्जितं अजरं अभयं अमृतं शान्तं शाश्वतं सत्यस्वरूपं परब्रह्म लभते[1]। एवं प्रश्नोपनिषदि चन्द्रः जगति सर्वपदार्थप्रतिनिधित्वेन तदासक्तानां तत्प्रापकत्वेनोपदिष्टः॥

## मुण्डकोपनिषदि चन्द्रः

अथ च मुण्डकोपनिषदि संसारमूलमक्षरं पुरुषं विवृण्वन्नेवं प्रोच्यते। एतत् सत्यं ब्रह्म। यथा सन्दीप्तात् पावकात् सहस्रशः सरूपाः विस्फुलिङ्गाः प्रभवन्ति तथाक्षरपरब्रह्मणः सर्वे जीवाः उत्पद्यन्ते, लयं यान्ति च। अयं दिव्यः निराकारः ब्रह्माभ्यन्तरस्थः अजः अप्राणः अमनाः परिशुद्धः अक्षरात्परतः परश्च। एतस्मात् प्राणः मनः सर्वेन्द्रियाणि आकाशादिपञ्चभूतानि जातानि। अस्य शिरः अग्निः, चक्षुषी चन्द्रसूर्यौ, दिशः श्रोत्रे, वेदाः वाक्, वायुः प्राणः, हृदयमेव प्रपञ्चः, पादौ पृथिवी। एवं सर्वभूतात्मनोऽस्मात् मूर्धादिष्वग्न्यादयः समुत्पन्नाः। एवं प्रथमतोऽस्मात् पुरुषात् द्युलोकाग्निस्समुत्पन्नः। अस्य सूर्यस्समिधो भवति। एवं सूर्येण द्युलोकस्समिध्यते। ततो द्युलोकाग्नेर्निष्पन्नात् सोमात् पर्जन्यः, पर्जन्यात् भूमौ ओषधयस्सम्भवन्ति। ओषधीभ्यो रेतः, रेतसः स्त्रीरजसि बह्वयः प्रजाः प्रजायन्ते। एवं परमात्मनः प्रजासृष्टिर्भवति। एवं तस्मात् परमात्मनः एव ऋचः साम यजूंषि, मौञ्ज्यादिलक्षणाः कर्तृनियमविशेषाः यज्ञाः, क्रतवः, दक्षिणाः, संवत्सरादिरूपः कालः, यजमानः, तस्य कर्मफलभूताः लोकाश्च भवन्ति। ते च लोकाः उत्तरायनदक्षिनायनेति मार्गद्वयगम्याः

---

1. अथ यदि द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुभिरुन्नीयते सोमलोकम्।
   स सोमलोके विभूतिमनुभूय पुनरावर्तते॥ प्रश्न.5.4;
   ऋग्भिरेतं यजुभिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्ते। तमोङ्कारेणैवायतनेनान्वेति
   विद्वान् यत्तच्छान्तमजरममृतमभयं परं चेति॥ प्रश्न.5.7;

विद्वदविद्वत् कर्तृफलभूताः सूर्यचन्द्रात्मकाः सन्ति॥[1]

एवमत्रापि मुण्डकोपनिषदि चन्द्रो विश्वपुरुषस्य नेत्रान्यतरत्वेन, प्रजासृष्टौ अस्य पदार्थमयत्वेन, एवञ्च पदार्थमयजीविनोऽस्यैव लोकं समाप्नुवन्तीति विशदीचकार। एवञ्च चन्द्रस्य परमात्मतेजोविलसितत्वमेव न तु स्वयं प्रकाशकत्वमिति कठोपनिषदि प्रतिपादितो विषयश्चात्र द्वितीयमुण्डके द्वितीयाध्याये विद्यते ''न तत्र सूर्यो भाति न चन्द्र तारकम्'' इति॥ मुण्ड.2.2.11;

## तैत्तिरीयोपनिषदि चन्द्रः

तैत्तिरीयोपनिषदि शिक्षावल्ली ब्रह्मानन्दवल्ली भृगुवल्लीति वल्लीत्रयं विद्यते। तत्र प्रथमवल्ल्यां द्वादशानुवकास्सन्ति। तेषु पञ्चमेऽनुवाके व्याहृत्यात्मकस्य ब्रह्मणोऽन्तरुपासनं स्वाराज्यफलं विशदीकृतम्। तत्र भूः भुवः सुवः महः इति चतुर्विधव्याहृतिषु क्रमशः अग्निवाय्वादित्यचन्द्रमसां ह्युत्तरोत्तरत्वेनाधिक्यं मन्यमानः पुरुषः चन्द्रमसा सर्वाणि ज्योतींषि महीयन्त इति विजानाति[2]। अत एव तत्रैव तृतीयमन्त्रे ''महः'' इति

---

1. तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।
   तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति॥1.
   दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः।
   अप्राणो ह्यमानाः शुभ्रो ह्यक्षरात्परतः परः॥ 2.
   एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥3.
   अग्निर्मूधाचक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः।
   वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥ 4.
   तस्मादग्निः समिधो यस्य सूर्यः सोमात् पर्जन्य ओषधयः पृथिव्याम्।
   पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात्संप्रसूताः॥ 5.
   तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च।
   संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः॥6. मुण्ड.2.1-6
2. भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः।
   मह इति चन्द्रमाः। चन्द्रमसा वा व सर्वाणि ज्योतींषि महीयन्ते॥ तैत्ति.1.5.2;

व्याहृतेः अन्नत्वं, अन्नेन सर्वे प्राणाः महीयन्त[1] इति क्रमशः आदित्यचन्द्रान्नादिषु उत्तरोत्तरस्य स्थौल्यत्वं प्रतिपादयन्, जीविनां धारणाय सूक्ष्मस्थूलजगत्सृष्टेरन्तरत्वेन चन्द्रः प्रतिपादितः।

तत्रैव सप्तमानुवाके प्रथमे मन्त्रे पृथिव्यादि पान्तोपासनं विशदयन्, अग्नि वायु सूर्य चन्द्र नक्षत्राणीति देवतापान्तं विशदीचकार[2]। एवं अधिलोकाधि-दैवताधिभूताध्यात्माधीन्द्रियमिति पान्तेषु चन्द्रः अन्तर्लिङ्गत्वेन तत्र तत्र प्रतिभाति॥

## ऐतरेयोपनिषदि चन्द्रः

ऐतरेयोपनिषदि जगतः आविर्भावकारणं परमात्मनः इच्छैव। एवं जगत्सृष्टौ प्राप्तेच्छः परमात्मा क्रमशः अम्भः, ततस्स्वर्गलोकं, ततो महर्जनोतपस्सत्यादिलोकान् सूर्यकिरणव्यापृतमन्तरिक्षलोकं, जीवनात्मकं भूलोकं, भूमेरधस्ताल्लोकांश्च ससर्ज। अस्यां सृष्टौ पञ्चभूतात्मकत्वे सत्यपि अब्बाहुल्यात् पृथिव्याः अधस्थाः लोकाः आपः उच्यन्ते। एवमन्तरिक्षलोकाः भूलोकः आपोलोकाः इति लोकत्रयं ससर्ज। तदनु स्वसृष्टेस्संरक्षणाय लोकपालान् सिसृक्षुः पञ्चभूतात्मकं पिण्डमद्भ्य एव समुद्धृत्यावयवसंयोजनेन सम्पिण्डितवान्। ततोऽण्डमिव पिण्डात् मुखं निरभिद्यत। ततो मुखात् वाक्, वाचोऽग्निः, ततो नासिका समुद्भूता। नासिकातः प्राणः, ततः प्राणेन्द्रियः, ततस्सर्वत्रव्यापी वायुर्देवता, ततो नेत्रे, ततश्चक्षुरिन्द्रियं, तत आदित्यदेवता, ततश्श्रोत्रं, श्रोत्रात् श्रोत्रेन्द्रियं, तस्मात् दिग्देवता, तदनु चर्म, ततो लोमानि, लोमभ्यः ओषधिवनस्पतयः, हृदयं च निरभिद्यत। हृदयात् मनः, मनसश्चन्द्रमाः, तदनु नाभिः

---

1. भूरिति वै प्राणः। भुव इत्यपानः। सुवरिति व्यानः।
   मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते॥ तैत्ति.1.5.3;
2. पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः। अग्निर्वायुरादित्यश्चन्द्रमानक्षत्राणि। आप ओषधयो वनस्पतय आकाश आत्मा। इत्यधिभूतम्। अथाध्यात्मम्। प्राणो व्यानोऽपान उदानः समानः चक्षुश्रोत्रंमनोवाक्त्वक्। चर्म मांसं स्नावास्थिमज्जा। एतदधिविधाय ऋषिरवोचत्। पांक्तं वा इदं सर्वम्। पांक्तेनैव पांक्तं स्पृणोतीति॥ तैत्ति.1.7.1;

निरभिद्यत। तदनु नाभ्या अपानः, तस्मात् मृत्युः, एवमादयस्सृष्टाः[1]।

एवं स्वशक्त्या सृष्टानां देवानामुपाधित्वेन परमात्मा एकं पश्वाकृतिं पिण्डं ससर्ज। देवाः तत्पिण्डं स्वेषां स्थितेरनुकूलमित्युक्तवन्तः। तदनु अश्वं सृष्ट्वा तेषां अदर्शयत् परमात्मा। तमपि निराकृतवन्तो देवाः। तदनु एकां पुरुषाकृतिं सृष्ट्वा देवोभ्योऽदर्शयत्। तद्रूपमुपाधित्वेन स्वीकर्तुं देवाः अङ्गीकृतवन्तः। तदनु परमात्मना समाज्ञप्तास्ते सर्वे पुरुषाकृतौ प्रविष्टाः। वाग्रूपत्वेन मुखेऽग्निः, घ्राणत्वेन नासिकायां वायुः, चक्षुरिन्द्रियत्वेन नेत्रयोरादित्यः, श्रोत्रेन्द्रियत्वेन कर्णयोर्दिशः, स्पर्शेन्द्रियत्वेन त्वचि ओषधिवनस्पतयः, मनोरूपत्वेन हृदये चन्द्रः, पायिवन्द्रियत्वेन नाभ्यां मृत्युः, उपस्थेन्द्रियत्वेन तस्यां जलदेवता च प्राविशन्।[2] एवमैतरेयोपनिषदि पञ्चखण्डेषु प्रथमखण्डे चतुर्थमन्त्रे, द्वितीयखण्डे च चतुर्थमन्त्रे चन्द्रप्रस्तावः उपलभ्यते। अत्र हि प्रथमतः परमात्मनश्चन्द्रदेवतायाः आविर्भावः, तदनु तदाज्ञया जगति सकलजीविनां हृदये मनोरूपत्वेन वासः प्रतिपादितः। अत्राप्येष विषयः प्रत्यक्षजगतः अप्रत्यक्षजगतश्चानुसन्धानत्वेन चन्द्रोऽस्तीति विशदयति। यतः मन एव मनुष्याणां सर्वविधलौकिकानुभूतिषु प्रधानमिति, मनो वियोगे त्विन्द्रियाणि स्वकर्मव्यापृतान्यपि मनुजस्य विषयानुभूतिं नापादयन्तीति लोकप्रसिद्धोऽनुभववेद्यश्च विषयः खलु। एवमन्तरिक्षे दृश्यमानश्चन्द्रो विश्वस्य मन इति, एवञ्च स एव सर्वेषां देहिनां देहान्तर्वर्ति मनश्च संबभूवेति विज्ञायते॥

---

1. तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम्। मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षिभ्यां चक्षुश्चक्षुषा आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः। ऐत.1.4
2. अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशं श्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन्। ऐत.2.4

## छान्दोग्योपनिषदि चन्द्र :

इयं सामवेदीया उपनिषद्। अस्यामुपनिषदि सन्त्यष्टप्रपाठकानि। तत्र प्रथमप्रपाठकस्य त्रयोदशखण्डाः, द्वितीयप्रपाठकस्य चतुर्विंशतिखण्डाः, तृतीयप्रपाठकस्यैकोनविंशतिखण्डाः, चतुर्थप्रपाठकस्य सप्तदशखण्डाः, पञ्चमप्रपाठकस्य चतुर्विंशतिखण्डाः, षष्ठप्रपाठकस्य षोडशखण्डाः, सप्तमप्रपाठकस्य षड्विंशतिखण्डाः, एवमष्टमप्रपाठकस्य पञ्चदशखण्डाः सन्ति। अस्यामुपनिषदि चन्द्रप्रस्तावः बहुधा समुपलभ्यते। तत्र प्रथमप्रपाठके षष्टमखण्डे चतुर्थमन्त्रे चन्द्रः सामभागत्वेन स्वीकृतः। तत्र नक्षत्राणि ऋक् भवन्ति। चन्द्रमाः "अमः" भवति। एवं नक्षत्राणामधिपतिश्चन्द्रमेति तत्र तस्य सामत्वं कथ्यते[2]। तत्रैव त्रयेदशखण्डे साम्नि प्रयुज्यमानानां संज्ञाक्षराणां अर्थं विशदयन् हा उ लोकः, हा इ वायुः अथकारश्चन्द्रमाः, इह आत्मा, ई अग्निः भवन्ति। अपिचात्र चन्द्रदृष्ट्या अथकारमुपासीतेति, इदं हि अन्ने स्थितमिति, चन्द्रश्चान्नात्मेति, थकाराकारसामान्याद्धि तस्य अन्नात्मत्वमिति समुपपादितम्[3]।

द्वितीयप्रपाठके विशंतिखण्डे चन्द्रप्रस्तावो दृश्यते। तत्रहीयमुपनिषद् हिङ्कारत्वेन मनः प्रभृतीन् ध्यायन्, तदनु अग्निर्हिङ्कार इति, वायुः प्रस्ताव इति, आदित्यः उद्गीथ इति, नक्षत्राणि प्रतिहार इति, चन्द्रमा निधनमिति जगाद। प्रथमस्थानत्वात् अग्निर्हिङ्कारः, आनन्तर्यसामान्यात् वायुः प्रस्तावः इति, श्रैष्ठ्यात् आदित्यः उद्गीथ इति, प्रतिहृतत्वात् नक्षत्राणि प्रतिहार इति, कर्मिणां निधनात् चन्द्रमाः निधनमिति प्रोच्यन्ते।

---

1. मनो हि हेतुस्सर्वेषामिन्द्रियाणां प्रवर्तने ॥ रामा.सु.11.41
2. द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते द्यौरेव सादित्योऽमस्तत्साम ॥3 नक्षत्राण्येवर्क्चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥ छान्दो.1.6.3,4
3. अयं वाव लोको हा उकारो वायुर्हा इकारश्चन्द्रमा अथकारः।
   आत्मेहकारोऽग्निरीकारः ॥ छान्दो.1.13.1
   चन्द्रमा अथकारः। चन्द्रदृष्ट्याऽथकारमुपासीत। अन्नेहीदं स्थितम्।
   अन्नात्मा चन्द्रः। थकाराकारसामान्याच्च ॥ छान्दो.शां.भा.1.13.1

एतच्च राजनं दीप्तिमत्वात् देवतासु प्रोतम्[1]। तत्रैव द्वाविंशातिखण्डे प्रथममन्त्रे सामगानप्रसङ्गेन फलविशेषसम्बन्धात् गानविशेषादिसंपदुद्गातुरुपदिश्यते। तत्र निरुक्तस्स्वरविशेषः सोमदेवत्यः। एष उद्गीथो भवति[2]। तृतीयप्रपाठके नवमखण्डे एवमस्ति। यावदादित्यः पुरस्तादुदेत पश्चादस्तमेत द्विस्तावत्ततो द्विगुणं कालं दक्षिणत उदेतोत्तरतोऽस्तमेत तावदेव मरुतां भोगकालः। तत्र सोममुखेनैव देवाः अमृतं नाश्नन्ति नापि पिबन्ति किन्तु दृष्ट्वैतदमृतं तृप्यन्ति। एवं केवलं कर्मरतश्चन्द्रमण्डलस्थोभूत्वा, न केवलं देवानामन्नभूतः किन्तु स्वाराज्यं च गच्छति[3]। अस्य तृतीयप्रपाठकस्य त्रयोदशखण्डे उपनिषदियं मधुज्ञानमुपदिश्यानुपदमेव गायत्रीविद्यायां स्वात्मनि देवताभावत्वेनोपासकैर्यानि श्रेयांस्युपलभ्यन्ते तानि कथयति। यः दक्षिणद्वारं गायत्र्याख्यस्य ब्रह्मणः व्यानवायुरिति श्रोत्रं च चन्द्रमेति मनुते सः श्रीयशोगुणोपासकः धनवान् कीर्तिमान् भवति[4]।

रैक्कः नाम कश्चन ज्ञानी चतुर्थप्रपाठके तृतीयखण्डे जानश्रुतिराजानं प्रति विद्यामुपदिशति। तत्र वायुमेव सूर्यचन्द्रयोश्चलने कारकत्वं, तमेव तयोरधिदैवत्वेनाध्या-

---

1. अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चंद्रमा निधनमेतद्राजनं देवतासु प्रोतम्। छान्दो.2.20.1
2. विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान्सर्वानिवोपसेवेत वारुणं त्वेव वर्जयेत्। छान्दो 2.22.1
3. अथ यच्चतुर्थममृतं तन्मस्त उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति॥1॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपाद् उद्यन्ति॥2॥ स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति॥3॥ स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्येता। छान्दो.3.9.1-4
4. अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद। छान्दो.3.13.2

त्मत्वेन निर्दिशति। अपि च सूर्यश्च चन्द्रश्च प्रलयकाले स्वस्वरूपयोर्भ्रंशे वायुमेवोपेत[1] इति। वायुरेव तौ नीयत इति, सूर्यचन्द्रयोः चलनास्तमयादिकं सर्वं वायुनैवोपलब्धमिति कथयति। प्रलयकाले तेजोरूपाणां वायौ लीनता सिध्यते खलु। एवं लोकेऽपि स्थूलपदार्थस्य द्रवस्थितिः, ततो तेजोरूपता, तदनु वायौ लीनता, ततः शून्यता चावलोक्यते तथानुमीयते खलु। सप्तमखण्डे चन्द्रादित्यादीन् ज्योतिष्मन्त इति स्मृत्वा विद्वान् तान् ज्योतिर्लोकानधिगच्छतीति, तत्र चतुष्कलं ब्रह्माणमुपासित्वा तत्फलमुपेत्युपासक इति, एवञ्चात्र ब्रह्मणः चतुष्कलपादे एका कला अग्निः, अन्या सूर्यः, अपरा चन्द्रः, अन्तिमा चतुर्थीकला विद्युदिति विज्ञायते[2]। एवञ्च द्वादशखण्डे गार्हपत्यादि अग्न्यादिषु चन्द्रमसः दक्षिणाग्निस्थितित्वं कथितम्। तथाहि सत्यकामस्य शिष्यः उपकोसलः। सः ब्रह्मचर्यव्रतेन द्वादशवर्षाः गुरुं सत्यकामं शुश्रूषितवान्। सत्यकामस्तु तमपहायान्येभ्यश्शिष्येभ्यो विद्यामुपदिश्य तान् स्वस्वगृहं प्रेषयन्नासीत्। तद्दृष्ट्वा गुरुपत्नी स्वभर्तारमुद्दिश्य "स्वामिन् अयं ब्रह्मचारी अग्निशुश्रूषां नियमेन करोति खलु, यदि तस्य भवन्तः उपदेशं न कुर्युः तर्ह्यग्नयो भवन्तं प्रति किं न कुप्येयुः?" इत्यपृच्छत्। मौनमेव तत्र सत्यकामस्य समाधानमभवत्। उपकोसलः मनोव्याधिना भोजनं परित्यक्तवान्। गुरुपत्न्या तत्र कारणं पृष्टः उपकोसलः "दुःखपरम्परापनोदनाय मया भोजनं न क्रियते" इति प्रत्युत्तरं दत्तवान्। ततः स्वान् शुश्रूषमाणं उपकोसलमग्नयः प्रीतास्सन्तः ब्रह्मपदार्थमुपदिष्टवन्तः। उपकोसलस्य प्रार्थनया अग्नय एव स्वस्वविशेषशक्तिं स्वरूपं चोपदिदुशुः। तत्र दक्षिणाग्निरेवं उपदिशत्युपकोसलम्। जलं दिशः नक्षत्राणि चन्द्रमाश्च मम शरीराणि। य एष चन्द्रमसि पुरुषः दृश्यते सोऽहमेवास्मि। एवं यो विद्वानुपासते सः पापविनुर्मुक्तस्सन् दीर्घायुः तेजस्वी

---

1. वायुर्वाव संसर्गो यदा वा अग्निरुद्धायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति॥ छान्दो 4.3.1
2. ब्रह्मणः सौम्य ते पादं ब्रवाणीति ब्रवीतुं मे भगवानिति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम॥3 स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिंल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते॥ छान्दो 4.7.3,4

वंशवृद्धियुक्तश्च भवति। तं वयं इहपरलोके रक्षाम इत्युपदिदेश। एवं पञ्चाग्निषु चन्द्रो दक्षिणाग्निस्वरूप इत्यवगम्यते। तत्रैव पञ्चदशखण्डे अक्षिणि दृश्यमानः पुरुषो ब्रह्मण उपासको भूत्वा सकलाः कलाः अधिगच्छति। सर्वाणि शोभनानि प्राप्नोति। अयमेवाक्षिपुरुषः वामनी र्भवति। यतस्तद्वेत्तारं पुण्यकर्मफलयुक्तं करोति। एवमयमात्मा भामनीः इत्यपि ख्यातः। सः सर्वेषु लोकेष्वादित्यचन्द्राग्न्यादि रूपैः भाति। एवं यो वेत्ति सः सर्वेषु लोकेषु प्रकाशते। एतादृशज्ञानी मरणानन्तरं कृतेऽकृतेऽपि प्रेतसंस्कारे तेजसमधिगच्छति। ततो दिवाभिमानदेवतां, ततश्शुक्लपक्षाभिमानदेवतां, तदनु उत्तरायणदेवतां, ततो वर्षदेवतां, पश्चादादित्यदेवतां, आदित्यात् चन्द्रमसं, ततो विद्युद्देवतां प्राप्य स्वयं देवतारूपमेति[2]। एवं ज्ञानिनां ब्रह्मपदप्राप्तौ आदित्यात् चन्द्रमसः समुत्कृष्टत्वमियमुपनिषद् प्रतिपादयति।

पञ्चमप्रपाठके चन्द्रमण्डलसिद्ध्यै राज्ञः प्रवाहणस्य गौतमस्य च संभाषण-मुपलभ्यते। श्वेतकेतुर्नाम गौतमपुत्रः पाञ्चालदेशाधिपस्य प्रवाहणस्य सभामवाप। तत्र प्रवाहणः श्वेतकेतवे पञ्चप्रश्नाः अपृच्छत्। ते चेमे - इमे प्रजाः अस्मात् लोकात् कुत्र गच्छन्ति? कथं पुनरावर्तन्ते? देवयानमार्गस्य पितृयानमार्गस्य वियोगस्थानं

---

1. अथ हैनमन्वाहार्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥1 ॥ स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ 2. छान्दो.4.12.1,2
2. य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छति ॥1 ॥ एतं संयद्वाम इत्याचक्षत एतं हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥2 ।. एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥3 ॥ एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥4 ॥ अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरात् आदित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनांन्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपाद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥

छान्दो.4.15.1-5

कुत्र भवति? पितृसम्बन्धो लोकः कस्मादपूर्णोऽभवत्? पञ्चम्यामाहुतावापः कथं पुरुषवाच्याः भवन्ति? इति। श्वेतकेतु र्न वेद्मीत्येव समादधौ। तदनु श्वेतकेतुप्रर्थनया गौतमः राजानमुपसृत्य तस्मादुपदेशंलब्धवानेवम्। प्रथमतः पञ्चमप्रश्नस्य समाधानं प्रवाहणः उपदिशति गौतमाय। द्युलोकोऽग्निर्भवति। तस्य समिध् सूर्यः। रश्मयः धूमः। अहः कान्तिः। चन्द्रः अङ्गाराः भवन्ति। एतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति। तस्याः आहुतेः राजा सोमः सम्भवति। एवं चन्द्रमण्डलस्योत्पत्ति र्भवति। पर्जन्यः अत्राग्नि र्भवति। तस्य वायुः समिध्। मेघः धूमः। विद्युत् प्रकाशः। अशनिरङ्गाराः। ह्रादनयो (गर्जनादिकं) विस्फुलिङ्गाः[1]। एवमेतस्मिन्नग्नौ देवाः सोमं जुह्वति। एवं श्रद्धाख्याः आपः प्रथमतस्सोमाकारतया विपरिणमन्ति[2]। द्वितीये पर्याये पर्जन्याग्निं प्राप्य वृष्टित्वेन विपरिणमन्ति[3]। एवं चतुर्थपञ्चमखण्डेषु तत्र पदार्थविपरिणामरूप एव चन्द्र इति, एवं तस्यैव विपरिणामानि पदार्थानीति विज्ञायते।

तदनु प्रथमप्रश्नस्य प्रत्युत्तरत्वेनोपदिशति प्रवाहणः गौतमाय एवंप्रकारेण। पञ्चाग्निवेत्तारः, गृहस्थाः, अरण्योपलक्षिताः वैखानसाः, परिव्राजकाश्च श्रद्धां तपश्चोपासते। ते मरणानन्तरं कान्तिं, ततो दिवादेवतां, पश्चात् क्रमेण शुक्लपक्ष उत्तारायण - संवत्सर - आदित्य - चन्द्र - विद्युदभिमानदेवताः प्राप्य देवत्वं लभन्ते। सत्यलोकञ्च प्राप्नुवन्ति। एषो देवयानमार्गः भवति[4]। केवलकर्मठास्तु इष्टापूर्तादि कर्मकर्तारः सन्तः धूम-रात्रि-

---

1. असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चंद्रमा अंगारा नक्षत्राणि विस्फुलिङ्गाः ॥ 1 छान्दो 5.4.1
2. तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्याः आहुतेः सोमो राजा संभवति। छान्दो 5.4.2
3. पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरंगारा ह्रादयो विस्फुलिङ्गाः॥ तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुते र्वर्षं संभवति ॥ छान्दो 5.5.1,2
4. तद्य इत्थं विदुः। ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षाद्यान्षड्दङ्केति मासांस्तान्1.1.1 मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवयान पंथा इति॥ छान्दो.5.10.1,2

कृष्णपक्ष–दक्षिणायन–पितृलोक–आकाश–चन्द्ररूपाभिमानदेवताः प्राप्नुवन्ति। अयं सोमः देवानामन्नम्। तं देवाः भक्षयन्ति। ततः कर्मफलमनुभूय चन्द्रात् पुनरावर्तन्ते। कथमिति चेत्, ते ह्याकाश, वायु, धूम, अभ्र, मेघरूपेण क्रमविपरिणामं, प्राप्य ततो वर्षत्वेन, व्रीहित्वेन, अन्नत्वेन, रेतोरूपेण.विरिणामं प्राप्य स्त्री रजसि पुनः उत्पद्यन्ते[1]। एवं देवयाने पितृयानेऽपि चन्द्रस्य प्राधान्यता परिदृश्यते। विंशतिखण्डे वैश्वानरविद्यावेत्तुः तत्फलं कथयन् तत्रैवं विशदीकृतम्। भोजनकाले या द्वितीया व्याहृतिर्व्यानाय स्वाहेति विद्यते, तेन व्यानस्तृप्यति, पश्चात् श्रोत्रं, तदनु श्रोत्रे तृप्यति चन्द्रमास्तृप्यति, चन्द्रमसि तृप्यति दिशः तृप्यन्ति, दिक्षु तृप्यन्तीषु दिक्चन्द्रमाऽधिष्ठितं यदस्ति तत्तृप्यति[2]। एवं पञ्चव्याहृतिषु चन्द्रस्य द्वितीयव्याहृतिनिष्ठता प्रतिपादिता।

षष्ठप्रपाठके चतुर्थखण्डे त्रिवृत्करणे चन्द्रमसो यद्रोहितं रूपं तत्तेजसः, यत् शुक्लं तदपां, यत्कृष्णं तदन्नस्यावगच्छति। तदनु आपगात् चन्द्रात् चन्द्रत्वं वाङ्मात्रं भवति. अपि च नाममात्रश्च भवति। किन्तु तेजसः अपामन्नस्य यद्रूपमुच्यते तदेव सत्यमिति प्रतिभाति[3]। एवं पृथिव्यप्तेजस्सु त्रिवृत्करणेषु तेषामेव प्राधान्यं कथयन्, चन्द्रमसि च तेषामेवांशतां सूचयतीयमुपनिषद्। एवमन्तिमेऽष्टमप्रपाठके त्रयोदश खण्डे[4]

---

1. मासेभ्यः पितृलोकंपितृलोकादाकाशमाकाशाच्चन्द्रमसमेव सोमो राजा तद्देवनामन्नं तं देवा भक्षयन्ति। 4, तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पूनर्निवर्तन्ते ययैतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवतिधूमो भूत्वाभ्रं भवति। 5, अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिंचति तद्भूय एव भवति। 6। छान्दो.5.10.4,5,6.
2. अथ यं, द्वितीयां जुहुयात्तां जुहुयाद् व्यानाय स्वाहेति व्यानस्तृप्यति। व्याने तृप्यति श्रोत्रं तृप्यति, श्रोत्रे तृप्यति चन्द्रमास्तृप्यति, चन्द्रमसि तृप्यति दिशस्तृप्यन्ति, दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति। छान्दो.5.20.1,2
3. यच्चन्द्रमसो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारंभणं विकारो नामधेयं त्रीणिरूपाणीत्येव सत्यम्। छान्दो 6.4.3
4. श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहो र्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीत्यभि संभवामीति। छान्दो. 8.13.1

सदृष्टान्तं पुरुषः पापाद्विमुक्तः परब्रह्मोपगच्छतीति समुपदिशति। यथाहि राहुमुखात् चन्द्रः विमुच्यते स्वतेजसं च प्राप्नोति, तथा पुरुषः पापविनिर्मुक्तश्शरीरं परित्यज्य ब्रह्मलोकमभिसंभवतीत्युपदिशति। एवं छान्दोग्योपनिषदि चन्द्रप्रस्तावः बहुधा बहुत्र प्रतिपादितो विद्यते। ते हि विषयाः वैज्ञानिकदृष्ट्यापि परिशीलनीयाश्चासन्।

## बृहदारण्यकोपनिषदि चन्द्रः

इयं शुक्लयजुर्वेदीया उपनिषत्। अस्यामुपनिषदि षडध्यायास्सन्ति। प्रथमाध्यायस्य षड्ब्राह्मणानि, एवं द्वितीयाध्यायस्य षड्ब्रह्मणानि, तृतीयाध्यायस्य नवब्राह्मणानि, चतुर्थस्य ब्राह्मणषट्कं, पञ्चमस्य पञ्चदश, षष्ठस्य पञ्चब्राह्मणानि, सन्ति। एनामुपनिषदं ब्राह्मोपनिषदित्यपि कथयन्ति। यतोह्यत्र वेदप्रतिपादितकर्मकाण्ड-यज्ञोपासनाप्रतिपादकाः ब्राह्मणग्रन्थाः, ध्यानमार्गप्रतिपादकानि आरण्यकानि, ज्ञानप्रतिपादकाश्चोपनिषद इत्येषां त्रयाणां समाहारोऽभवत्। अतोऽस्याः बृहदारण्यको-पनिषदिति ब्राह्मणोपनिषदिति च व्यवहार स्सञ्जात इति वक्तुं शक्यते, युज्यते च। बहुत्वं चास्य ब्रह्मविद्याहेतूनामन्तरङ्गबहिरङ्गभूतानां बहूनां विषयानां प्रतिपादनात् अर्थतः, ग्रन्थपरिणामतश्च बहुत्वात्कथ्यते।

एतादृश्यामस्यामुपनिषदि प्रथमाध्याये तृतीयब्राह्मणे चन्द्रो मनसोऽधिष्ठानदेवतात्वेन प्रतिपादितः। अत्र काचनकथा विद्यते। प्रजापतिः सात्विकासात्विकरूपौ द्विविधौ देवासुरौ ससर्ज। तेषु देवाः शास्त्रजन्यज्ञानकर्मयुक्तास्सन्ति। इतरे त्वासुराः स्वाभाविकप्रत्यक्षज्ञानकर्मरताः। एतेषु धार्मिकाः देवाः अल्पसंख्याकाः, अधार्मिकाः असुरास्त्वसङ्ख्याकाः आसन्। अतो देवाः आसुरविजयाय उद्गीथं स्वीकृतवन्तः। एवं देवाः उद्गीथेन बलीयाः आसन्। तदनु ते पापीयानासुरान् वागादिषु क्रमेण निर्जितवन्तः। ते हि देवाः प्राणे उद्गीथमुपासित्वा वागादिष्वग्न्यादिदेवताः प्रतिष्ठापयामासुः। वाचि अग्निः शोभनवचसा प्रतिष्ठितः, कल्याणाघ्राणेन प्राणे (घ्राणे) वायुः प्रतिष्ठितः, कल्याणकरदर्शनेन चक्षुषि आदित्यः प्रतिष्ठितः, कल्याणश्रवणेन श्रोत्रे दिशः प्रतिष्ठिताः, शुभसंकल्पेन[1] मनसि चन्द्रमाः[2] प्रतिष्ठितोऽभवत्।

---

1. अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उद्गायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत्कल्याणं संकल्पयति तदात्मने। ... बृह 1.3.6
2. अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत् सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवं ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद। बृह.1.3.16

एवमत्र चन्द्रः सत्सङ्कल्पयुक्तमनसि परमाह्लादरूपेण प्रतिष्ठितो प्रकाशत इत्युपदिशतीयमुपनिषद्। चतुर्थब्राह्मणे द्वन्द्वात्मकसृष्टिं वर्णयन्, सर्वपदार्थगतस्य द्रवात्मकस्यात्मनो रेतसस्सोमं सृष्टवान् परमेष्ठीति, अयमेव सोमः जगतोऽन्नभूत इति, अन्नादस्त्वग्निर्भवतीति विशदीचकार[1]। अत्रैवैकादशानुवाके देवक्षत्रं विशदयन्तीयमुपनिषद् कथयत्येवम्। इन्द्रो देवानां राजा, वरुणो यादसां, सोमो ब्राह्मणानाम्, रुद्रः पशूनाम्, पर्जन्यो विद्युदादीनां, यमः पितॄणां, मृत्यू रोगादीनां, ईशानो भासामिति। एवमत्र सोमो द्विजराजो बभूव[2]। अपि च पञ्चमब्राह्मणे वाङ्मनःप्राणानामाधिदैविकं विस्तारमेवं विद्यते। वाचः पृथिवी शरीरं भवति। ज्योतीरूपञ्चायमग्निर्भवति। तत्र यावत्येव वाक्तावती पृथिवी,तावानयमग्निश्च भवति। एवं मनसो द्यौश्शरीरं, ज्योतीरूपंचादित्यः। अथैतस्य प्राणस्यापः शरीरम्। ज्योतीरूपमसौ चन्द्रः। यावानेव प्राणः तावत्येवापः। एतानि त्रीणि वाङ्मनःप्राणाख्यानि अन्नानि प्रजापतिना सृष्टानि। तत्र पृथिव्यग्नी माता, दिवादित्यौ पिता, योऽयमनयोरन्तरा प्राणस्स प्रजेति विज्ञायते। अपिचात्रहि प्राणस्यापश्शरीरमिति कथनादापः प्राणाधाराः इति सूचितोऽभवत्। किञ्चाधेयरूपोऽयं चन्द्रमाः इति च विज्ञायते। अपि च प्राणो यावत्परिमाणोऽध्यात्मादिभेदेषु तावद्व्याप्तिमत्यः आपः तावत्परिमाणाः, तावानसौचन्द्रोऽबाधेयस्तास्वप्स्वनुप्रविष्टः करणभूतो अध्यात्ममधिभूतं च तावद्व्याप्तिमानेव भवति। एवं ज्योतिर्मये चन्द्रे वायुजलयोः समानास्थितिः प्रतिपादितेति च भाव्यतेऽस्माभिः। तत्रैव विंशत्यनुवाके अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राणः आविशति। स वै दैवः प्राणो हिरण्यगर्भदेवता इव सर्वज्ञः, सर्वकृत्, शाश्वतो भवति। एवं प्राणरूपवायुपरिणामाः अग्निसूर्यचन्द्रवागादिष्वाविशन्तः तेषां प्रापयन्त्यविनाशम्। अत्र चन्द्रमसोऽपि वायोराधिक्यता कथनं, तेजसोऽपि

---

1. ... अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदं सर्वमन्नंचैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिः ...। बृह 1.4.6
2. ब्रह्मा वा इदमग्र आसीदेकमेव तदेकं सन्नव्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्राक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति। बृह.1.4.11 शां.भा.
3. अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्वं एव समाः सर्वेऽनंताः स यो हैतानंतवत उपास्तेऽन्तवन्तं स लोकं जयत्यथ योह्यैताननन्तानुपास्तेऽनंतं स लोकं जयति। बृह.1.5.13.

अनन्तरपरिणामः वायुरिति सूचयति। एवं प्राणनिष्ठाः चन्द्रादयः स्वस्य प्रकाशकत्वं मन्यन्ते। प्राणवायुरेव चन्द्रस्यापि प्रकाशहेतुरिति विज्ञायते।

द्वितीयाध्याये प्रथमब्राह्मणे गर्वितो गार्ग्यवंशीयः बालाकिः काशीराजमजातशतृमुपसृत्य ब्रह्मविद्यामुपदिशामीत्युक्तवान्। तद्वाक्यश्रवणानन्तरमेव अजातशतृः गोसहस्त्रं दातुमैच्छत्। तदनु गार्गिः ब्रह्म उपदिशन् प्रथमतः चक्षुरादित्येष्वेकरूपं तेजः पुरुषं हृदयनिष्ठं ब्रह्मेति जगाद। अजातशतृस्सोपपत्तिकं तद्वचनं निराचकार। तदनु गार्ग्यः देवतारूपचन्द्रमसि मनसि स्थितं पुरुषं बृहत्पाण्डुरवासं अप्शरीरं सोममुपासतु राजन् इत्युवाच, तत्फलत्वेन सोमपानमन्त्रवृद्धि र्भवति, तच्चात्रं न क्षीयते इति चोपदिदेश। एवमत्र मनसः शरीरस्य आकाशस्य चन्द्रमसस्सम्बन्धं, चन्द्रमसश्श्वेतवर्णत्वं, अप्शरीरत्वं, श्वेतवासस्त्वं प्रतिपादितवतीयमुपनिषद्। अत्रैव पञ्चमब्राह्मणे मैत्रेयीं प्रति मधुविद्यां उपदिशन् याज्ञवल्क्यः, सकलभूतानां पृथ्वी मधु भवति। एवं चन्द्रः अध्यात्मम्। मनसः तेजोमयः अमृतमयः पुरुषः अयमेव। अपिचास्मिन् चन्द्रे तेजोमयस्य पुरुषस्य सत्वात् सर्वेषां भूतानामयं मधु भवति। एवञ्च सर्वाणि भूतान्यस्य मधु भवन्ति। अतश्चन्द्रः जगतो मधु। एवं मनोरूपपुरुषस्तु अध्यात्मा भवति।

तृतीयाध्याये प्रथमब्राह्मणे जनकमहाराजेन ब्रह्मनिष्ठायोद्दिष्टाः गावः याज्ञवल्क्यः स्वीचकार। तदानीं आश्वलोऽस्य ब्रह्मनिष्ठां परीक्षितुमैच्छत्। ''यजमानः केन मार्गेन निराधारादन्तरिक्षात् स्वर्गमेतीति'' सः पप्रच्छ याज्ञवल्क्यम्। याज्ञवल्क्यः समाधत्ते - ब्रह्म अथवा ऋत्विग्रूपमनसाचन्द्रेण पुरुषस्स्वर्गमुपगच्छति। एवमाधिभौतिकयज्ञे चन्द्रः ऋत्विक् भवति। फलं च स्वर्गप्राप्तिः। एषैव मुक्तिः, अतिमुक्तिर्भवति। तदनु आर्तभागः याज्ञवल्क्यं पृच्छति। अविद्वांसस्य मरणानन्तरं तस्य वाग् अग्निं, प्राणः वायुं, नेत्रे आदित्यं, मनश्चन्द्रमसं, श्रोत्रे दिशः, शरीरं पृथ्वीं, आत्मा हृदयाकाशं, शरीर-

---

1. अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः संचरंश्चासंचरंश्च न व्यथतेऽथो न रिष्यति स एवं वित्सर्वेषां भूतानामात्मा भवति यथैषा देवतैवं स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविद सर्वाणि भूतान्यवन्ति। यदु किंचेमाः प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति। बृह.1.5.20
2. स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशतृर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासा सोमो राजेति वा अहमेतमुपास इति स य एतमेवोपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यात्रं क्षीयते। बृह.2.1.3

रोमाणि ओषधीः, शिरसः रोमाणि वृक्षान्, रेतः रक्तं च जलमधिगच्छन्ति। तदानीं जीवः पुरुषः कुत्रास्ति? किमाश्रयते? पुनः कार्यकारणवशात् शरीरं कथमुपगच्छति? इति। अत्र समाधत्ते याज्ञवल्क्यः जीवस्य कर्माश्रितत्वम्। अत्र मनश्चन्द्रमसोः सम्बन्धः, मरणानन्तरं मनसः चन्द्रमसि लीनताञ्चोपदिशतीयमुपनिषद्। षष्ठमब्राह्मणे गार्गीति काचन वाचक्रवेः याज्ञवल्क्यस्य च सम्भाषणं प्रतिपादितम्। तत्र गार्ग्याः प्रश्नमनुश्रुत्य जलादारभ्य ब्रह्मपर्यन्तं ओतप्रोतत्वं कथयति याज्ञवलक्यः। तत्र हि जलं वायौ, वायुरन्तरिक्षे, अन्तरिक्षं गन्धर्वलेके, गन्धर्वलोकस्तु आदित्यलोके, आदित्यलोकाः चन्द्रलोकेषु, चन्द्रलोकाः नक्षत्रलोकेषु, नक्षत्रलोकाः देवलोकेषु, देवलोकाः इन्द्रलोकेषु, इन्द्रलोकाः पजापतिलोकेषु, ते च ब्रह्मलोकेषु ओतप्रोताः इति कथयति। अत्र आदित्य-लोकेभ्यः चन्द्रलोकस्य वैशिष्ट्यं, ओतप्रोततया तेभ्यश्चन्द्रलोकस्य सम्बन्धः, एवं नक्षत्र-लोकेभ्यश्च सम्बन्धः, सूर्यात् चन्द्रमसः औन्नत्यम्, नक्षत्रेभ्यः निम्नत्वं प्रतिपादितम्। अन्तर्यामित्वमुद्धिस्य उद्धालकेन पृष्टः याज्ञवल्क्यः पृथिव्यादि देवताः अन्तर्यामित्वेन कथयन् क्रमशः "यश्चन्द्रतारके तिष्ठंश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकं शरीरं, यश्चन्द्रतारकमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः[4]" इति जगाद। अत्र चन्द्रस्य तारकैरविनाभावसम्बन्धः प्रतिपादितः। एवञ्च चन्द्रमसः अधिभूतत्वे गोलमात्रतां, अधिदैवते देवतादर्शनमिति प्रतिपादितम्। नवमब्राह्मणेऽष्टविधवसुषु

---

1. याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्बणमिव केनाक्रमेण यजमानः स्वर्ग-लोकमाक्रमत इतिं ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः सातिमुक्तिरित्यतिमोक्षा अथ संपदः। बृह 3.1.6
2. याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्तभागावामेवैतस्य वेदिष्यावो न नावेतत्सजन इति। ... बृह 3.2.13
3. अथ हैनं गार्गी वाचक्रवी पप्रच्छ याज्ञवल्क्येति होवाच ... कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति ...। बृह 3.6.1.
4. बृह.3.7.11.

चन्द्रमपीयं उपनिषद् कथयति। ते च वसवः "अग्निः, पृथिवी, वायुः, अन्तरिक्षं, आदित्यः, स्वर्गः, चन्द्रः, नक्षत्राणीति। एते प्राणिनां कर्मफलत्वेन, स्वयमेवकार्यकारणसङ्केतरूपेण, तन्निवासत्वेन परिणामं प्राप्य जगज्जीवने कारणरूपाः सन्तः वसवः अभवन्।" "यस्मात् वासयन्ति तस्मात् ते वसवः" इति हि तत्रार्थः कथितः भगवता शङ्कराचार्येण[1]। एवमत्र चन्द्रः जगतः स्थितावेकं कारणम्। तत्रैव त्रयोविंशत्यनुवाके सोमलतां, देवताञ्चेकीकृत्योदीच्यां दिशि सेमः देवतात्वेन प्रतिपादितः। अयं हि चन्द्रो दीक्षायां, सा च सत्ये, तच्च हृदये प्रतिष्ठितमिति जगाद[2]।

चतुर्थाध्याये तृतीयब्राह्मणे तृतीयानुवाके "अस्तमिते सूर्यज्योतिषि जीवस्य किं ज्योतिर्भवति," एवं जनकेन पुष्टः याज्ञवल्क्यः चन्द्रज्योतिषा जीवः सर्वं कार्यमनुतिष्ठतीति प्रत्युत्तरमदात्[3]। एवमग्निवागात्मनां पूर्वपूर्वस्यास्तमये उत्तरोत्तरस्य ज्योतिर्मयत्वं कथ्यते। अत्र तु आत्मनः स्वयंप्रकाशत्वं गदितः। एवं जीवलोकप्रकाशकेषु चन्द्रस्य सूर्यानन्तरस्थानं लभ्यते। जीविनां चैतन्यदायकत्वं चास्य प्रोच्यते।

पञ्चमाध्याये दशमब्राह्मणे जीवोत्क्रमणमार्गं विशदीकृतमस्ति। देहं जीवः त्यक्तस्सन् प्रथमतो वायुमण्डलं, ततोऽन्तरिक्षं, तदनु वायुना निष्कम्पो भूत्वा तेन दत्त रथचक्ररन्ध्रपरिमितादवकाशात् सूर्यलोकं गच्छति। सूर्यस्तु ब्रह्मलोकमार्गं निरुध्य, केवल ब्रह्मनिष्ठान् तु स्ववाद्यविशेषलम्बरमात्रावकाशद्वारेण जीवान् चन्द्रमण्डलं प्रापयति। ततश्चन्द्रः भेरीवाद्यविशेषरन्ध्रमितद्वारेण ब्रह्मनिष्ठान् प्रजापतिलोकं प्रापयति। तत्र ब्रह्मनिष्ठः

---

1. कतमे वसव इत्यग्निश्च पृथिवी चवायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषुहीदं सर्वं हितमिति तस्माद्वसव इति। बृह.3.9.3.
2. किंदेवताऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठत इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेनहि सत्यं जानाति हृदयेह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य। बृह.3.9.23.
3. अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य। बृह.4.3.3.

जीवः मनश्शरीरदुःखविवर्जितस्सन् चिरं वसति[1]। एवं जीविनामुत्क्रमणवेलायां उत्क्रान्तः जीवः सूर्यादूर्ध्वस्थं चन्द्रमसं ब्रह्मनिष्ठ एवाप्नोतीति कथनात् सूर्यादूर्ध्वस्थानं चन्द्रस्थानमिति, तत्स्थानगताः ब्रह्मप्राप्तिं लभन्त इति च विज्ञायते। पुनरावृत्तिस्थानं सूर्यस्थानम्, पुनरावृत्तिरहित ब्रह्मप्रापकं स्थानं चन्द्रस्थानमिति सूर्यात् चन्द्रमसः वैशिष्ट्यमौन्नत्यञ्च प्रतिपादितमासीत्।

षष्ठाध्याये द्वितीयब्राह्मणे प्रवाहणगौतमयोस्संभाषणमस्ति। तत्र कति आहुतिभ्यः आपः पुरुषाकृतिर्भवेत्? इति स्वस्यैव चतुर्थप्रश्नस्य समाधानत्वेनोपदिशति स्वयं प्रवाहणः। हे गौतम! द्युलोकमग्निरिति भावय। तत्र आदित्यः एव समिध्। तस्य किरणानि धूमः। दिवा ज्वालः। दिशः अङ्गाराः। अवान्तरदिशः विस्फुलिङ्गाः। अस्मिन् अग्नौ इन्द्रादि देवताः श्रद्धारूपं जलं जुह्वति। तया आहुत्या सोमोराजा संभवति[2]। अत्र च यत्पयोद्रव्यं अग्निहोत्रकर्माश्रयभूतं इह आवहनीये प्रक्षिप्तमग्निना भक्षितमदृष्टेन सूक्ष्मेण रूपेण विपरिणतं, सहकर्त्रा यजमानेनामुं लोकं धूमादिक्रमेणान्तरिक्षं, अन्तरिक्षात् द्युलोकमाविशति। तास्सुक्ष्माः आपः आहुतिकार्यभूताः अग्निहोत्रसमवायिन्यः कर्तृसहिताः श्रद्धाशब्दवाच्याः सोमलोके कर्तुश्शरीरान्तरारम्भाय द्युलोकं प्रविशन्त्यः हूयन्ते। तास्तत्र द्युलोकं प्रविश्य सोममण्डले कर्तुश्शरीरमारभन्ते। एवञ्चकर्मठानां सोमलोकप्राप्तिः ज्ञाननिष्ठकर्मवतां सूर्यलोकप्राप्तिर्भवतीत्यत्र पितृयानदेवयानमार्गौ प्रतिपादितौ। अत्र शुभाशुभकर्मयुक्ताः तत्फलं सोमलोकेऽनुभूय ततः आकाशवायुवर्षान्नरेतस्सु सङ्क्रमणं कृत्वाऽऽविर्भवन्तीति विपुलीचकार[3]। तत्रैव तृतीयब्राह्मणे महत्वमभिलषितस्य मन्थकर्मोपदिशन् "सोमाय स्वाहा" इत्यग्नौ हुत्वा,

---

1. यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लंबरस्य खं तेन स ऊर्ध्व आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहिते यथा दुंदुभेः खं तेन स ऊर्ध्व आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समाः। बृह.5.10.1
2. असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽगरा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा संभवति। बृह.6.2.9
3. बृह.6.2.9. शां.भा

स्त्रुवावलेपनमाज्यं मन्थेसंस्त्रावयतीति यज्ञकर्मसु चास्य महत्वप्रापकत्वं जगादेयमुपनिषद्। एवं बृहदारण्यकोपनिषदि विस्तृतया प्रतिपादिताः चन्द्रविषयाः अनेकवैज्ञानिक-विषयसम्बंन्धिनः सन्ति।

## श्वेताश्वतरोपनिषदि चन्द्रः

अस्यामुपनिषदि प्रतिपादिताः विषयाः अनेके योगसम्बन्धिनः सन्ति। परिपुष्टः योगमार्गः अत्र प्रस्तूयते। अस्य नामधेयमनुसृत्य श्वेताश्वतरनामककृष्णयजुश्शाखा-सम्बन्धतानुमोदते सम्प्रदायज्ञैः। किन्तु तस्याः श्वेताश्वतरनामकेन ऋषिणा प्रणीतत्वं भावयन्ति ऐतिहासिकाः तन्नामहेतुना। अपि चाद्योपलभ्यमानेयमुपनिषद् नैककर्तृका भवतीति च मन्यन्ते परिशीलकाः[1]। तत्र हेतुं कथयन्ति खलु ते हि एवम्। प्रतिपाद्य-विषयानामन्योन्यघटना न दृश्यते, छन्दोलक्षणनियमानां क्वचिदनादरणं क्वचिदन्यथाकरणं कृतम्, प्रक्षिप्तांशाः बाहुल्येनोपलभ्यन्ते चेति। काठिकीयाः मन्त्राः अनेके क्वचिदेकदेश-विकृताः, अविकृताश्चकृत्वा संयोजिताः इत्यस्याः काठकादर्वाचीनता निश्चीयते। अपिचात्र बहवः साङ्ख्यसम्बन्धिनः पारिभाषिकाः शब्दाः प्रयुक्ताः। एवं विविधाः साङ्ख्यसिद्धान्ताः अप्युपपादिताः।

षडध्यायात्मिकीयमुपनिषद् ब्रह्मवादिनां गोष्ठ्या आरभ्यते। द्वितीयाध्याये योगसाधकस्य तुषारः, धूमः, सूर्यः, वायुः, अग्निः, विद्युत्, स्फटिकः, चन्द्रश्चेति रूपाणि प्रथमतो ब्रह्मत्वेन दृग्विषयाः भवन्तीति प्रतिपादितम्[2]। एवञ्च चतुर्थाध्याये बुद्धिं काङ्क्षमाणाः ज्ञानिनोऽद्वितीयं जात्यादिरहितं नानाविधशक्तियुक्तं आदिमध्यान्तकालेषु जगत् स्वस्वाधीने स्थापितं परमात्मानं प्रार्थयन्ति। तं हि ते अग्नि सूर्य वायु चन्द्र शुक्र ब्रह्म जल प्रजापतित्वेन पश्यन्ति[3]। एवमादिक्रमेण सर्वचराचरजगत् परमात्ममयत्वेन पश्यतां ज्ञानिनां प्रसङ्गे चन्द्रप्रस्तावः समागतः। सह्यत्र परमात्मनः व्यक्ताव्यक्त-जगतोऽन्तराळत्वेन भाव्यते।

---

1. वै.सा.च.पु.285
2. नीहार धूमार्कानिलानलानां खद्योत विद्युत्स्फटिकशशीनाम्।
   एतानि रूपाणि पुरस्सराणि ब्रह्मण्यभिव्यक्तिकराणि योगे॥ श्वेत.2.11.
3. तदेवाग्निस्तदादित्य स्तद्वायु स्तदु चन्द्रमाः।
   तदेव शुक्रं तद्ब्रह्म तदाप स्तत्प्रजापतिः। श्वेत.4.2.

## नृसिंहतापिन्युपनिषद् तत्र चन्द्रः

पूर्वतापिनी–उत्तरतापिनीति भागद्वयमस्याः अस्तीति विदुषां भावना। किन्तु नृसिंहपूर्वतापिन्येव भगवता शङ्कराचार्येण व्याख्यातोपलभ्यते। एषा पञ्चोपनिषद्भागात्मिका। प्रथमोपनिषदि षट्खण्डाः, द्वितीयोपनिषदि खण्डत्रयम्, तृतीयोपनिषदि खण्ड एकः, चतुर्थोनिषदि खण्डत्रयं, पञ्चमं चाखण्डं विद्यते। तत्र प्रथमोपनिषदि चतुर्थखण्डे नृसिंहसाम चतुष्पादत्वेन विवृण्वन्, अग्नि सूर्य चन्द्र स्वराट् इत्येते साम्नः क्रमतः चत्वारिपदानीत्युदाजहार। तत्र हि "ओषधीनां ताराणां च पतिः चन्द्रः। स चास्य साम्नः तृतीयः पादः" इति व्याजहार[1]। अर्थात् साम्नः तृतीयपादस्य तदङ्गलक्ष्मीमन्त्रस्य शिखा मन्त्रस्य चायं देवतेति विज्ञायते।

द्वितीयोपनिषदि प्रथमखण्डेऽपि चन्द्रप्रस्तावस्स्वीकृतो विद्यते। मृत्युपापसंसारेभ्यः भीताः देवाः ब्रह्माणमुपागताः। स तु तेषां नृसिंहमन्त्रमुपदिष्टवान्। तेनोपदिष्टाः देवाः मृत्युपापसंसारान् जितवन्तः। यः लोके मृत्युपापसंसारेभ्यो बिभेति सः[2] गुरुमुखतो नृसिंहमन्त्रं स्वीकुर्वन् तान् जयति। यतः अकारोकारमकारादि मात्रत्रये पादत्रयात्मकता विद्यते खलु। तत्र प्रथमपादस्य अकारस्य पृथिव्याकाशौ ऋग्वेदब्रह्मावसवः देवताः। छन्दस्तु गायत्री। अग्निः गार्हपत्याग्निः। उकारात्मकस्य द्वितीयपादस्य अन्तरिक्षयजुर्वेदविष्णुरुद्राः देवताः। त्रिष्टुप् छन्दः। अग्निस्तु दक्षिणाग्निः। तृतीयपादस्य मकारस्य लोकः द्युलोकः। वेदस्तु साम। ऋषयस्तु रुद्रादित्ये। छन्दः जगती। आवहनीयः अग्निर्भवति। अर्थमात्रात्मकस्य ओङ्कारचतुर्थपादस्य लोकः चन्द्रलोको भवति[3]। वेदः अथर्ववेदः। ऋषयो मरुतः। छन्दः विराट्। अग्निः संवर्तकः। एवं ओङ्कारे चन्द्रप्रस्तावस्सन्दृश्यते। चतुर्थोपनिषदि नृसिंहप्रत्यक्षाय देवैः

---

1. य ओषधीनां प्रभवति सोमस्तत्साम्नस्तृतीयं पादं जानीयात् स ब्रह्मा स शिवः स हरिः स इन्द्रः सोऽग्निः सोऽक्षरः परमः स्वराट्॥ नृसिं.1.4
2. देवा ह वै मृत्योः पाप्मभ्यः संसाराच्चाबिभयुस्ते प्रजापतिमुपाधावंस्तेभ्य एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रायच्छत्तेन वै स मृत्युमजयन्स पाप्मानमतरन्स संसारं चातरंस्तस्माद्यो मृत्योः पाप्मभ्यः संसाराच्च बिभीयात्स एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीयात् स मृत्युं जयति स पाप्मानं तरति स संसारं तरति ..... नृसिं.2.1.
3. यावसानेऽस्य चतुर्थ्यर्थमात्रा सा सोमलोक ओंकरः सोऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्नि र्मरुतो विराडेक ऋषिर्भास्वती सा साम्नश्चतुर्थः पादो भवति। नृसिं.2.1

प्रार्थितो ब्रह्मा तेभ्यः कञ्चन मन्त्रस्तोममुपदिष्टवान्। तदनु सः ''यो ब्रह्मा स स्वरूपः नृसिंहः तस्मै नमः'' इति, ''ओं उं ओं यो वै नृसिंहो देवो भगवान्यश्च ब्रह्मा तस्मै वै नमो नमः''4.3.1 इत्येवंक्रमेण द्वात्रिंशत् मन्त्रानुपदिष्टवान्। तेषु एकोनऽत्रिंशत् मन्त्र एव सोमरूपः।[1] एनं ध्यात्वा जनोऽमृतत्वमध्येतीति विज्ञायते।

एवं पञ्चमोपनिषदि सुदर्शनमहाचक्रस्य महिमादिकं प्रपञ्चयन् मन्त्रस्यास्योपासकः अग्नि वायु आदित्य सोम जलादिसकलदेवताः, सकलग्रहान्, विषञ्च स्तम्भीकर्तुं शक्नोतीति वर्णयति[2]। एवञ्चास्य मन्त्रस्योपासकः परमं पदमध्येति। यत्र सूर्यः नाभाति वायु र्न वाति, चन्द्रो न प्रकाशते, नक्षत्राणि च न प्रकाशन्ते, अग्नि र्न दहति, मृत्यु र्न विशति, दुःखं न संभवति तादृशं स्थानमधिगच्छतीति। अत्र चन्द्रप्रस्तावः गौणतया प्रतिपादितः[3]।

## हंसोपनिषदि चन्द्रः

सेयमुनिषद् शुक्लयजुर्वेदीयासु एकोनविंशत्युपनिषत्सु अन्यतमा। अत्र प्रतिपादितः विषयः योगसम्बन्धी। सनत्कुमारः इतः पूर्वं परमेश्वरानुग्रहात् स्वस्मै लब्धं हंसविषयकं रहस्यं ज्ञानं जिज्ञासवे गौतमायोपदिशति। काष्ठेष्वग्निरिव, तिलेषु तैलमिव, देहेषु सर्वत्र हंसः व्याप्त इति हंसस्थितिं निरूप्य, ततः हंसविज्ञानोपायं, हृदयकमले विविधदिक्षु हंससञ्चारे प्राणिभिरनुभूयमानां चित्तवृत्तिं, तदनु अजपाहंसमन्त्रजपप्रकारं, सगुणध्यानं, सगुणनिर्गुणध्यानाशक्तस्य निरन्तरमजपाहंस -

---

1. ओं नं ओं यो वै नृसिंहो देवो भगवान् यश्च सोमस्तस्मै वै न्नमो नमः। नृसिं 4.3.29
2. य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निं स्तम्भयति स वायुं स्तम्भयति स आदित्यं स्तम्भयति स सोमं स्तम्भयति स उदकं स्तम्भयति स सर्वान् देवान् स्तम्भयति स सर्वान् ग्रहान् स्तम्भयति स विषं स्तम्भयति स विषं स्तम्भयति।
नृसिं.5.3अ
3. अनुपनीत .... एतत्परमं धाम मन्त्रराजाध्यायकस्य यत्र सूर्यो न तपति यत्र न वायु र्वाति यत्र न चन्द्रमास्तपति यत्र न नक्षत्राणि भान्ति यत्र नाग्नि र्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखं सदानन्दं परमानन्दं शाश्वतं शान्तं सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं यत्र गत्वा न निवर्तन्ते योगिनस्तदेतदृचाभ्युक्तम्-तद्विष्णोः परमं पदं सदा पश्यन्ति ... नृसिं.5.8अ

मन्त्रजपात् प्राप्तदशविधनादभेदाः तन्नादाविर्भावकाले साधकस्य देहे दृश्यमानाः परिणामाः, तत्र नादानुभवानन्तरं दशमनादमात्रस्यैवाभ्याशात् क्रमशः उपलभ्यमानो मनोलयः, ततः पुण्यपापप्रदहनात् प्राप्त ब्रह्मत्वप्रकाशोऽत्र नितरां विशदीकृतः।

योगप्रधानायामस्यामुपनिषदि अजपाहंसमन्त्रजपप्रकारमुपदिशन् सनत्कुमारः तत्र "सूर्याय सोमाय निरंजनाय निराभासायातनुसूक्ष्मप्रचोदयात्" इति जगाद[1]। अर्थात् अजपामन्त्रं चतुर्धाविभज्य तत्र प्रथमभागः विराडात्मने सूर्याय, द्वितीयभागः सूत्रात्मने सोमाय, तृतीयभागः सूक्ष्माभिधाय विराड्सूत्रोपाधिकाय सर्वेश्वराय निरंजनाय, चतुर्थः भागस्तु रिक्ताय स्थूलसूक्ष्मबीजाभासतदध्यक्षविराडादिगतहेयांशापवादभूताय प्रत्यगभिन्नाय सूक्ष्माय निराभासाय समर्पितव्यमिति गौतमायात्रोपदिष्टविषयसारः भवति। अत्र सोमस्यअजपाहंसजपे द्वितीयभागभावना, सूत्रात्मकतया तत्र तस्य वैशिष्ट्यं प्रस्तूयेते।

## कैवल्योपनिषदि चन्द्रः

इयं यजुर्वेदीयेति केचन[2] अथर्ववेदीयेति केचन[3] कथयन्ति। मुक्तिकोपनिषत्तु इमां कृष्णयजुर्वेदीयां जगाद[4]। पञ्चविंशतिश्लोकात्मिकायामस्यामुपनिषदि आत्मतत्व-मुपदिश्यते परमेष्ठिना। आश्वलायनो महर्षिः भगवन्तं परमेष्ठिनं समेत्य वरिष्ठब्रह्म-विद्योपदेशाय प्रार्थितवान्। तस्मै परमेष्ठी आत्मतत्वमुपदिशन् अनेकनामभिः विख्यातः सः परमात्मैवेति – "स ब्रह्म स शिवस्सेन्द्रः सोऽक्षरः परमस्वारट्। स एव विष्णुस्स प्राणः स कालोऽग्निस्स चन्द्रमाः" इति व्याजहार[5]। ब्रह्मा शिवः अक्षरः परमस्वराट् विष्णुः प्राणः कालः अग्निः चन्द्रमाः परमात्मैवेति चन्द्रमसः परमात्मनोऽभिन्नत्वं प्रतिपादितमत्र।

---

1. षट्संख्यया अहोरात्रयोरेकविंशतिसहस्राणि षट्छतान्यधिकानि भवंति। सूर्याय सोमाय निरञ्जनाय निराभासायातनुसूक्ष्मंप्रचोदयात्। हंस.11
2. श्री वाविल्ल रामस्वामिशास्त्रिणः पीठिकायाम्।
3. स्वमी चिन्मयानन्दव्याख्यातान्ध्रानुवादपीठिकायाम्।
4. मुक्ति.1-56
5. कैव.1.9

## प्राणाग्निहोत्रोपनिषदि चन्द्रः

इयमथर्ववेदीयेति विज्ञायते। वेदप्रतिपादितं सर्वोपनिषत्सारं संसारज्ञानं, शरीरं यज्ञं, अन्नसूत्रमत्रव्याख्यातानि। त्रयोविंशतिश्लोकात्मिकेयमुपनिषद्। पुरुषः शरीरे एव विनाग्निहोत्रेण, विना साङ्ख्ययोगेन च स्वेन विधिना प्राणाग्निहोत्रं स्वशरीरे अनुष्ठाय मोक्षमुपलभ्यत इति प्रतिपादितमत्र। तत्र प्रथमतः अन्नपात्रं भूमौ निक्षिप्य "या ओषथयस्सोमराज्ञीरिति त्रिसृभि र्मन्त्रैः "अन्नपते" इति द्वाभ्यां मन्त्राभ्यामभिमन्त्रयितव्यमिति जगाद। अत्रैव ओषधिपतित्वेन चन्द्रस्य प्रस्तावस्समवलोक्यते एवम् –" या ओषधयस्सोमराज्ञीर्बह्वीश्शतविचक्षणाः। बृहस्पतिः प्रसूतास्तानो मुञ्चंत्वंहसः ॥4. इति। अत्र हि चन्द्रराजानः असङ्ख्याकाःअनेकरोगनिवारकाः बृहस्पतिप्रसूताः ओषधयोऽस्मान् पापविमुक्तान् करोतु इति मन्त्रार्थः निगदितः।[1] एवं लोके प्राणिनोऽन्नमूला इति अन्नं चौषधीभ्योपगतमिति, ओषधयश्च चन्द्राधीनाः इति च विषयः प्रतिपादितः। एवं "सूर्याग्नि, दर्शनाग्नि, शारीराग्नि, कोष्ठाग्नि" इति अग्निचतुष्टयादधः प्रायश्चित्ताग्नि र्विराजते। अस्याग्नेः इडा पिङ्गला सुषुम्णेति तिस्त्रः नाड्यः स्त्रीरूपेण भाव्यमानाः सन्ति। अयमग्निः हिमांशुप्रभाभिः प्रजाः आविर्भावयति।[2] एषश्च विषयोऽत्रैव उपनिषदि प्रतिपादितो विद्यते। अनेन च जगदुत्पत्तौ चन्द्रस्यकारणत्वं नितरां सम्भाव्यते।

## नारायणीयोपनिषद् तत्र चन्द्रः

तैत्तिरीयोपनिषदनुबन्धितेयं पृथक् नारायणोपनिषद् नाम्ना प्रसिद्धा। अस्यां द्विपञ्चाशदनुवाकाः सन्ति। प्रथमानुवाके सप्तमे मन्त्रे अविद्यादृष्ट्या यद्यत् जगत् नानाविधं प्रतीयते तत्सर्वं विद्यादृष्ट्या ब्रह्मैव। अतः परमाह्लादकत्वेन प्रतीयमानः चन्द्रमाः अपि ब्रह्मस्वरूप एव[3]। एवञ्चविश्वस्य सर्वस्य वशी विधाता, सूर्याचन्द्रमसौ पृथिव्यादिलोकांश्च

---

1. या ओषधयस्सोमराज्ञीर्बह्वीश्शतविचक्षणाः। बृहस्पतिप्रसूतास्तानो मुञ्चंत्वंहसः ॥
   याः फलिनी र्या अफला अपुष्पा याश्च पुष्पिणीः।
   बृहस्पतिप्रसूता स्तानो मुंचंत्वंहसः॥ प्राण.4,5.
2. प्रायश्चित्तीयस्त्वथस्तात् स्त्रिय स्तिस्त्रः हिमांशुःप्रभा प्रजननकर्मा॥ प्राण.19
3. तदेवाग्निस्तद्वायु स्तदु चन्द्रमाः,तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः। नारा.1.7

यथापूर्वमकल्पयत् स्वसंकल्पमात्रेण[1]। एवं चन्द्रस्योत्पत्तौ विधातुः सङ्कल्प एव कारणम्। द्वितीयानुवाके महाव्याहृतिसंज्ञकान् मन्त्रान् होमार्थं कथयन्, भू रग्रये पृथिव्यै, भुवो वायवेऽन्तरिक्षाय, सुवरादित्याय दिवे, भूर्भुवश्चन्द्रमसे दिग्भ्यः, इति क्रमेण पृथिव्यग्नितृप्त्या भूलोके, वाय्वन्तरिक्षतृप्त्या भुवर्लोके, दिवादित्ययोः तृप्त्या सुवर्लोके, दिक्चन्द्रमसोः तृप्त्या भूर्भुवर्लोकयोः पापक्षयता प्रतिपाद्यते[2]। अत्र घृतेन पापक्षयाय होमार्थं कथिताः एते एव मन्त्राः तृतीयेऽनुवाके तु अन्नबाहुल्यार्थं अन्नहोमाय पठिताः[3]। पञ्चचत्वारिंशत् षट्चत्वारिंशत् सप्तचत्वारिंशदनुवाकाः त्रिसुपर्णमन्त्राख्याः भवन्ति। तत्र प्रथमे त्रिसुपर्णे जापकः "ब्रह्ममेतु मां मधुमेतु मां ब्रह्ममेवमधुमेति मामिति स्वस्यगुणैः स्वरूपतश्च बृहद्वस्तु मधुवत् भोग्यभूतं, मधुवदानन्दरूपं ब्रह्मस्वस्य कामयति। एवं सर्वाः प्रजाः तादृशपरमात्मनः सोमस्य शेषभूताः कथयति। एवं प्राणसमर्पणात्मकत्वेन सर्वेन्द्रियाणि ब्रह्ममयकर्माचरणे नियोजयामीति प्रार्थयति। एतादृशः जापकः सोमलोकं प्राप्य सहस्रयोजनपङ्क्तिं पुनाति[4]। एवं त्रिसुपर्णविद्याग्रहीता प्रदाता च पूर्वोक्तफलं लभन्त इति अनुवाकत्रयप्रतिपादिताः विषयाः। किन्त्वत्र प्रसङ्गवशात् सोमशब्दस्य "उमा ब्रह्मविद्या तया सह वर्तमानः[5] इति सौति उत्पादयतीति सोमः परमात्मा[6] इति च व्याख्याकारौ व्याख्यां चक्रतुः। एकपञ्चाशदनुवाके सन्यासादूर्ध्वं प्रणवत्वेनाऽत्मनि समाधि विधेयः, तस्मिन् समाधौ विघ्नपरिहारार्थमादौ अन्तर्यामिणःसर्वकारणत्वेन स्तुतिं दर्शयन्" हे ब्रह्मन् त्वं चन्द्रमसः द्युम्नोदाः अर्थात्

---

1. अहो रात्राणि विदधद्विश्वस्य मिषतो वशी, सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, दिवं च पृथिवीं चान्तरिक्षमथो सुवः। नारा.1.38
2. भूरग्रये पृथिव्यै स्वाहा .. भूर्भुवश्चन्द्रमसे दिग्भ्यस्स्वाहा .. नारा. 1-2. अनुवाकः
3. भूरन्नमग्रये पृथिव्यै स्वाहा .. भूर्भूवसुवरन्नं चन्द्रमसे दिग्भ्यस्स्वाहा..नारा.1-3.अनु
4. ब्रह्ममेतुमां, मधुमेतु मां, ब्रह्ममेव मधुमेतु मां, यास्तेसोमप्रजावत्सोभिसो अहम्, दुस्स्वप्नहन्, दुरुष्वहा, यास्ते सोम प्राणांस्तान्जुहोमि, त्रिसुपर्णमयाचितं ब्राह्मणा यदद्यात्, ब्रह्महत्यां वा एते घ्नन्ति, ये ब्राह्मणास्त्रिसुपर्णं पठंति, ते सोमं प्राप्नुवन्ति, आसहस्रात् पंक्तिं पुनंति ओम्। नारा.4.45.अनु.
5. विद्यारण्यभाष्यम्
6. रामानुजभाष्यम्

प्रकाशरूपधनप्रदोऽसीति प्रस्तौति[1]। एवमन्तिमे द्विपञ्चाशदनुवाके सन्न्यासस्यैव ब्रह्मज्ञानं प्रत्यन्तरङ्गसाधनत्वात् जिज्ञासोः सन्न्यास एव युक्तः न तु कर्मानुष्ठानम्। तत्वज्ञानिनः कर्माणि सर्वाणि यागमयानीति कथयन् विशिनष्ट्येवम्। विदुषः यज्ञस्य आत्मा यजमानः। ब्रह्मा पत्नी। शरीरं इध्मम् (काष्ठम्)। उरः वेदिः॥ सोमानि बर्हिषः। वेदः शिखा। हृदयं यूपः। काम आज्यम्। मन्युः पशुः। तपोऽग्निः। (दमः) शमयिता दक्षिणा। वाक् होता। प्राणः उद्गाता। चक्षुरध्वर्युः। मनो ब्रह्मा। श्रोत्रमग्नीन् यावद्ध्रियते सा दीक्षा। यदश्नाति यत्पिबति तदस्य सोमपानम्। यद्रमते तदुपसदः। यत्संचरत्युपविशत्यु त्तिष्ठते च स प्रपर्ग्यः। यन्मुखं तदावहनीयः। यदस्य विज्ञानं तज्जुहोति। यत्सायंप्रातरत्ति तत्समिधः। यत्सायंप्रातर्मध्यन्दिनञ्च तानि सवनानि। ये अहोरात्रे ते दर्शपूर्णमासौ। ये अर्धमासाश्च मासाश्च ते चातुर्मास्यानि। ये ऋतवस्ते पशुबन्धाः। ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः। सर्ववेदसं वा एतत्सत्रम्। यन्मरणं तदवभृथः एतद्वै जरामर्यमग्निहोत्रम्। य एवं विद्वान् उदगयने प्रमीयते, देवानामेव महिमानं गत्वा आदित्यसायुज्यं गच्छति। अथ यो दक्षिणे प्रमीयते पितृणामेवाग्निष्वत्तादीनां महिमानं गत्वा चन्द्रमसः सायुज्यमाप्नोति। एवं सूर्याचन्द्रमसोः महिमानावनुभवन् विद्वान् ब्रह्मलोकं गच्छति ब्रह्मैश्वर्यं प्राप्नोति च[2]। अत्र चन्द्रलोकप्राप्तेः पुनरावृत्तिरित्युपनिषदन्यतरप्रतिपादितो विषयोऽविदुष एव विज्ञेयम्। ब्रह्मवेत्ता तु उत्तरायणे दक्षिणायने वा सूर्याचन्द्रमसो-रन्यतरलोकं प्राप्यापि ब्रह्मसायुज्यमागच्छतीति अस्याः उपनिषदः गूढार्थं भाष्यकाराः श्रीमद्रामानुजवर्याः स्वव्याख्यायां दृढीकृतवन्तः[3]।

## श्रीमद्भगवद्गीतायां चन्द्रप्रस्तावः

महाभारतान्तर्भूतायाः कृष्णार्जुनसंवादरूपायाः भगवद्गीतायाः प्राचीनैर्वेदान्तिभिः

---

1. वसुरण्यो विभूरसि, प्राणे त्वमसि संधाता, ब्रह्मन् त्वमसि विश्वसृक्, तेजोदास्त्वमस्यग्ने वर्चोदास्त्वमसिसूर्यस्यद्युम्नोदास्त्वमसि चन्द्रमस उपयामगृहीतोऽसि ब्रह्मणेत्वामहस ओमित्यात्मानं संयुंजीतैतद्वैमहोपनिषदं देवानां गुह्यं य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणोमहिमानमित्युपनिषद्। नारा.4.51.अनु.
2. अथ यो दक्षिणे प्रमीयते पितृणामेवहि महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छत्वेतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषद्। नारा. 4.52.अनु.
3. वाविल्लमुद्रणा.पु.244

उपनिषत्स्वैव गणना कृतेति कलायाः अस्याः प्रस्तावप्रारम्भे एव कथितमस्ति। अतोऽत्र सम्प्रति चन्द्रविषयः परिशील्यते। परमात्मनः स्थानं विशदयति पञ्चदशाध्याये पुरुषोत्तमप्राप्तियोगे। अस्मिन् स्थाने सूर्यः चन्द्रः पावकश्च न तपन्ति। स्थानमेनं प्राप्य आत्मा न पुनरावर्तते[1] इति। एवं दृश्यवस्तुप्रकाशकाः सूर्यचन्द्रादयोऽदृश्यं परमं पदं न प्रकाशयन्ति, अतः एते लौकिकवस्तुप्रकाशकाः एव। एष विषयः विस्तृततया पुनः तत्रैव द्वादशश्लोके स्पष्टीचकार। सर्वप्रकाशकं आदित्यगतं तेजः, एवं चन्द्रमसि तथाग्नौ च निष्ठं तेजः परमात्मन एव[2]। स हि परमात्मा गामाविश्य ओजसा भूतानि धारयति। एवं रसात्मकस्सोमोभूत्वा सर्वाः ओषधीः पुष्णाति[3]। एवञ्च परमात्मा श्रीकृष्णः स्वस्य सर्वव्यापकत्वं कथयन् सप्तमाध्याये विज्ञानयोगे कथयति किल "अर्जुन! सूर्याचन्द्रमसोः यः प्रकाशोऽस्ति स प्रकाशोऽहमेव" इति[4]। परमात्मनः प्रकाश एव दर्पणायमानेषु तेषु सूर्यचन्द्रादिज्योतिष्षु प्रकाशत इति विज्ञायते। अत एवायं परमात्मा स्वस्य विभूतियोगे नक्षत्रेषु सर्वप्रकाशः चन्द्रोऽभवत्[5]। एवञ्च विश्वसन्दर्शनयोगेऽस्मिन् परमात्मनि वाय्वादिभिस्सह चन्द्रं दृष्ट्वा त्वमेव शशाङ्क इति गीतवान् तत्रार्जुनः[6]। एवमष्टमाध्याये सकामकर्मयोगी धूम रात्रि कृष्णपक्ष दक्षिणायनरूप षाण्मासिकमार्गयुक्तंचान्द्रमसं ज्योतिः प्राप्य पुनारावर्तत इति व्याजहार।[7]

---

1. न तद्भासयते सूर्यो न शशाङ्को न पावकः।
   यद्गत्वा न निवर्तन्ते तद्धाम परमं मम। गीता. 15.6
2. यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
   यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्। गीता.15.12.
3. गामाविश्य च भूतानि धारयाम्यहमोजसा।
   पुष्णामि चौषधीस्सर्वाः सोमोभूत्वा रसात्मकः। गीता.15.13
4. रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः॥ गीता.7.8
5. मरीचि र्मरूतामस्मि नक्षत्राणामहं शशी॥ गीता.10.21.
6. अनादिमध्यान्तमनन्तवीर्यं अनन्तबाहुं शशिसूर्यनेत्रम्। गीता.11.19
7. धूमोरात्रिस्तथाकृष्णः षण्मासादक्षिणायनम्।
   तत्र चान्द्रमसं ज्योतिः योगी प्राप्य निवर्तते। गीता.8.25

एवमत्र भगवद्गीतायां चन्द्रः परमात्मनो तेजसा प्रकाशत इति, अयं च नक्षत्रेषु प्रकाशात्मकः परमात्मेति, अयं रसात्मकस्सन् ओषधीः पुष्णातीति, कर्मासक्ताः एनं प्राप्य कर्मफलमनुभूय पुनरावर्तन्त इति, एवमस्य चन्द्रलोकस्य मार्गः धूम्रा रात्र्या कृष्णपक्षेण षाण्मासिदक्षिणायनेन युक्त इति, तत्ववेत्तृणामयं परमात्मन्येवावलोक्यत इति विज्ञायते।

## निष्कर्षः

चन्द्रस्योत्पत्तौ परमात्मनस्सङ्कल्प एव कारणम्। अयं विश्वपुरुषस्यान्यतरं नयनम्। परमात्मनस्तेजसायं प्रकाशते। नक्षत्रेष्वनेनरूपेण परमात्मा प्रकाशते। उपासकानां श्रीयशःप्रदः। सोमं ध्यात्वा जनोऽमृतत्वमध्येति। अजपाहंसजपेऽयं सूत्रात्मकः। पान्तेष्वध्यात्मा चन्द्रः। ओङ्कारे चतुर्थः पादस्सोमलोको भवति। चन्द्रश्शवेतवर्णः अप् शरीरः श्वेतवासाः। चतुर्विधज्योतिष्यन्यतमोऽयं चन्द्रः। पञ्चाग्निषु दक्षिणाग्निरयम्। देवपितृयानेषु चन्द्रस्य प्राधान्यं विद्यते। अधिभूतत्वे गोलमात्र एव चन्द्रः। अधिदैवतेत्वयं चन्द्रः देवतारूपी। शुद्धाख्याः आपः प्रथमतश्चन्द्राकारतया परिणमन्ति। ततो वृष्टिरूपेण परिवर्तिताः भवन्ति। पदार्थ विपरिणाम एव चन्द्रः। चन्द्रविपरिणामा एव पदार्थाः। मूर्तामूर्तं सर्वं जगदन्नात्मकं रयिरेव। रयिरेव चन्द्रमाः। अतः मिथुनात्मकसृष्टौ चन्द्रः पदार्थमय एव (Material)। सूक्ष्मस्थूलसृष्ट्योरन्तरालवर्ती चन्द्रस्सर्वेषां प्राणिनां मनःकल्पः। चन्द्रस्य त्रिवृत्करणे रोहितं रूपं तेजसः, शुक्लमपां, कृष्णमन्नस्य ज्ञातव्यम्। अतश्चन्द्रः अप्तेजोपदार्थमय इति वक्तुं शक्यते। अपि च ज्योतिर्मध्यगते चन्द्रे वायुजलयोस्समाना स्थितिर्विद्यते। रोहितवर्णस्तेजस इत्यनिर्धारणात् उपनिषत्काले चन्द्रे जलं वातावरणं चासीदित्यनुमीयते। सूर्यतेजसोऽपि बलीयसः प्रभावः चन्द्रतेजसो विद्यते भूमौ। अत्र वैज्ञानिकैः कथितः "चन्द्राकर्षणशक्त्या समुद्रवेलाः भवन्तीति" विषयः सूचितो विद्यते। चन्द्रस्य तारकैरविनाभावसम्बन्धो विद्यते। अयं नक्षत्रेषु विराजते। ओषधीनां पतिश्चन्द्रो रसात्मको भूत्वा ताः पुष्णाति। पदार्थमयजीविनः, काङ्क्षिणः, केवलं कर्मरताः, चन्द्रलोकं गच्छन्ति। अस्य चन्द्रलोकस्य मार्गः धूमेन रात्र्या कृष्णपक्षेण षाण्मासिदक्षिणायनेन युक्तो विराजते। ब्रह्मपदगामिनः प्रथमतः आदित्यलोकं, ततो चन्द्रलोकं प्रतिगच्छन्ति। जगद्विलये चन्द्रस्य वायौ लीनता सर्वतेजसां वायौ लीनतां सूचयति

## षष्ठी कला

# वेदाङ्गेषु चन्द्रः

## प्रस्तावना

वेदस्य षडङ्गानि प्रसिद्धानि। तत्र –

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षु र्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते[1]॥
इति षड्विधवेदाङ्गेषु शिक्षादीनां स्वरूपप्रयोजननिर्देशकपूर्वकं पाणिनिः तेषां परिचयं दत्तवान्। एषु षड्विधवेदाङ्गेषु सम्प्रत्यस्यां कलायां निरुक्तछन्दोशिक्षासु चन्द्रप्रस्तावः परिशीलितः। व्याकरणे तथा ज्योतिषि चन्द्रप्रस्तावः प्रत्येककलासु समीक्षितोऽस्ति। कल्पशास्त्रे चन्द्रविषयः न स्वीकृतोऽत्र। अधुनात्र निरुक्तमुद्दिस्य, तत्र च कीदृशः चन्द्रप्रस्तावः इत्येषविषयोऽत्र परिशील्यते।

## वेदाङ्गेषु निरुक्तम् – तत्र चन्द्रः

निरुच्यते निश्शेषेणोपदिश्यते निर्वचनधिया तत्तदर्थबोधनायपदजातं यत्र तत् निरुक्तम्। निर्वचनमुखेन पदानामर्थावगमो यद्यपि व्याकरणेनापि सिद्ध्यति तथापि निरुक्तानुसोरेणैवार्थाः निर्वक्तव्याः, विशेषतया वैदिकशब्दार्थाः इति विज्ञायते। उक्तं च यास्केन – "अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते। अर्थमप्रत्ययतो नात्यन्तं स्वरसंस्कारोद्धेशः। तदिदं विद्यास्थानं व्याकरणस्य कात्स्न्र्यं स्वार्थसाधकं च। न हि निरुक्तार्थावित् कश्चिन्मन्त्रं निर्वक्तुमर्हतीति वृद्धानुशासनम्। निरुक्तप्रक्रियानुरोधेनैव मन्त्राः निर्वक्तव्याः नान्यथा॥ इति"[2]। भर्तृहरिस्तु निरुक्तलक्षणमेवं विशिनष्टि –

"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थाभिनयेनयोगस्तदुच्यते पञ्चविधं निरुक्तम्[3]॥" इति।

---

1. पा.शि.श्लो. 41, 42.
2. निरु.पु.37, 38.
3. सं.सा.इ.पु.18.

वेदगतकठिनशब्दसङ्ग्रहरूपो निघण्टुग्रन्थश्चिरादागच्छति स्म। तत्रैव यास्केन तद्व्याख्याभूतं निरुक्तं विरचितम्। निघण्टवो वेदशब्दस्वरूपाः तन्मयत्वेन एतेऽपि वेदाः एव भवन्ति। तद्व्याख्याभूतप्रबन्धस्तु निरुक्तसंज्ञको भवति। स एव वेदाङ्गभूतो कथ्यते।

यास्कः स्वनिरुक्ते द्वादशनिरुक्तकारान् स्मृतवान्। ते च औपमन्यवः, औदुम्बरायणः, वार्ष्यायणिः, गार्ग्यः, आग्रायणः, शाकपूनिः, और्णनाभः, तैटीकः, गालवः, स्थूलोष्ठी, कार्यक्यश्चेति। अतः यास्कात्प्रागपि बहवो निरुक्तकाराः आसन् इति विज्ञायते। पाणिनेः प्राचीनो यास्कः क्रीस्तोः पूर्व सप्तशताब्दीयः इति ऐतिहासिकानामभिप्रायः[1]।

सम्प्रति यास्कीयं निरुक्तमेवोपलभ्यते। इदं निरुक्तं निघण्ट्वपरनामकस्य पंचाध्यायात्मकस्य समाम्नायस्य व्याख्यारूपेणोपपन्नम्। मूलभूते नैघण्टुकसमाम्नाये पंचाध्यायाः सन्ति। प्रथमाद्यध्यायत्रये गवादीनां पर्यायशब्दाः पठिताः। चतुर्थे तु दुर्ज्ञेयार्थाः शब्दास्संगृहीताः। पञ्चमे अग्न्यादयो देवाः निर्दिष्टाः। एतान् विषयान् यास्काचार्यः द्वादशभिरध्यायैः शब्दनिर्वचनद्वारा प्रतिपादयन् निरुक्तशास्त्रं निबबन्ध। परिशिष्टात्मकत्वेन त्रयोदशचतुर्दशाध्यायावनुबद्धाविति केचन कथयन्ति[2]। किन्त्विदानीन्तनैः प्रकाशिते निरुक्तग्रन्थे परिशिष्टत्वेन त्रयोदशोऽध्याय एक एव दृश्यते[3]।

अस्य यास्कीयनिरुक्तस्य प्रथमेऽध्याये निरुक्तव्याकरणोभयसम्बन्धिनः सामान्यविषयाः उपोद्घातरूपेण निबद्धाः। द्वितीयतृतीययोः गवादीनां पर्यायशब्दाः निरुक्ताः। चतुर्थपञ्चमषष्ठेषु समाम्नाये चतुर्थाध्याये पठिताः शब्दाः व्याख्याताः। तदनन्तरेषु षट्स्वपि अध्यायेषु समाम्नाये पञ्चमेऽध्याये निर्दिष्टाः अग्न्यादिदेवपत्न्यन्ताः देवताः प्रतिपाद्यन्ते। सम्प्रति प्रसङ्गविषयकश्चन्द्रोऽत्र इन्दुः गौः चन्द्रः चन्द्रमाः सोमः इति समाम्नायप्रतिपादितैश्शब्दै र्व्याख्यातः। प्रथमतोऽस्मिन् निरुक्ते इन्द्वादिशब्दनिर्वचनादिकं परिशीलयामः।

---

1. सं.सा.इ.पु.18
2. वै.सा.च.पु.330
3. मेहरचन्द् लक्ष्मणदास् नईदिल्ली.1982. प्रकाशिते दुर्गाचार्यव्याख्योपेते निरुक्तग्रन्थे।

## इन्दुः

निरुक्तस्य नैघण्टुकनैगमदैवतेति काण्डत्रयात्मकविभागे दैवतकाण्डे इन्दुशब्दो व्याख्यातः। वायोरारभ्य सप्तविंशति मध्यस्थानदेवताः कथयन्, तत्र सप्तविंशतितमदेवतास्वरूपमिन्दुं निर्दिशन् तमेवं निर्वक्ति। "इन्दुरिन्धेरुनत्तेर्वा। तस्यैषा भवति॥ 4.(42)" दुर्गाचार्योऽस्य निरुक्तवचनस्यैवं व्याख्यां चकार। इन्दुरित्येतत् पदं इन्धेर्दीप्त्यर्थस्य(अ.आ.), उनत्ते र्वा क्लेदनार्थस्य(रु.प.) उभयमपीन्दौ चन्द्रमस्युपपद्यते। दीप्तः क्लेदनञ्च। दीप्यते उनत्ति वा वर्षेण। अत्र भृमृशी..उ.1.7 इत्यादिना बाहुलकादिन्धेः उ प्रत्ययो धकारस्य दकारश्च। उनत्तेश्च "उन्देरिच्छादेः" उ.1.12 इत्युप्रत्ययः॥ इति"। एवमिन्दुशब्दं निरुच्य तत्र वैदिकप्रयोगं दर्शयति। यथा – "प्रतद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मम रेजति रक्षोहा मन्मरेजति। स्वयं सो अस्मदा निदो वधै रजेत दुर्मतिम्। अवस्रवेदध शं सोवतरमव क्षुद्रमिव स्रवेत्॥ (ऋ.सं.12.1.17.1.)[1] इति। प्रतिदिनं वर्धनशीलाय अमृतत्वेन सर्वस्य प्रीत्यर्थं क्लेदयित्रे इन्दवे इन्दोरिष्टतमं स्तोत्रं प्रकर्षेण वक्तुं शक्तो भूयासम्। यः इन्दुः हवनार्ह इव अहविर्भाक्त्वात् यज्ञे न चाहूयते। अथ च इषवान् अन्नवान् निघ.2.7.14 कामवान्वा। कामिनां होतॄणां नित्यमभिमतफलसम्पादनोन्मुखः उपकारितया नित्यमस्मान् कम्पितहृदयान् करोति। अपि च रक्षांसि बलेन नाशयति। सः इन्दुः स्वयं आदरवान् भूत्वाऽस्मान् प्रति पापमतिं वज्रप्रहरणादिभिः हननोपायैः क्षिपेत्। तेन चातिबलवता इन्दुना अभिहन्यमानोऽस्माकं अघहंसोऽधोगतिः स्यात्। ततश्चातिनिकृष्टं क्षेप्तुं शक्यमुदकमिव स्वस्थानादवाङ्मुखो भूत्वाऽधः पततु। एषोऽत्र मन्त्रार्थः। अत्र सप्तविंशतिदैवतेषु कानिचित् सूक्तभाञ्जि कानिचित् हविर्भाञ्जि। "तेषामेतान्यहविर्भाञ्जि॥ वेनो सुनीति ऋत इन्दुः" इति वचनैः यास्कः इन्दुमहविर्भाङ्क्षु निर्दिष्टवान्। अहविर्भाक्त्वात् उदकमेवात्र घृतं भवतीति तद्गतेषु मन्त्रेषु घृतशब्दस्यान्वयः कृतः[2]।

## गौः

नैघण्टुककाण्डे पृथिवीनामसु गोशब्दो निरुक्तः। तत्र गोपर्यायशब्देषु चन्द्रमाः व्याख्यातः। "अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम्। आदित्यतोप्यस्य दीप्तिर्भवति॥ नि.2.2.7.[3]। आदित्यस्येको रश्मिः सुषुम्णा नाम

---

1. ऋ.सं.1.129.6 2. नि.पु.460, 461. 3. नि.पु. 74

चन्द्रमसं प्रत्यवस्थितो दीप्यते। तदेतेन मन्त्रार्थेन आदित्यत एव चन्द्रमसः ज्योतिर्भवतीति विज्ञायते। दर्पणवत् चन्द्रमाः रवेः दीप्तिमासाद्य सर्वाः दिशः प्रकाशयतीति च ज्योतिषे निर्णीतम्। यथा चाहुः भास्काराचार्याः-

तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्र श्चन्द्रिकाभि श्चकास्ति।
तदितरदिशि बालाकुन्तलश्यामलश्री र्घट इव निजमूर्ति श्छाययैवातपस्थः ॥1 ॥ इति।

यास्कः पुनरत्र सुषुम्णाख्यसूर्यरश्मेः चन्द्रपर्यायत्वं कथयितुं नैगमवचनं दर्शयति "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति" इत्यादिना वचनेन यजुर्वेदीय मन्त्रार्थेन। सुषुम्णः[1] स्सूर्यरश्मिः सूर्यात् निसृत्य चन्द्रमसं प्रति गच्छति। अत्र सुषुम्ण एव गौरित्यभिधीयते[2]। अतो गां धरतीति व्युत्पत्त्या चन्द्रो गन्धर्वो भवति। एवञ्च सुषुम्णाख्यस्य सूर्यरश्मेः गोशब्दवाच्यता विद्यते। तत्सम्बन्धात् चन्द्रोऽपि गौरुच्यत इति यास्कः "सोऽपि गौ रुच्यते" इति जगाद। तथा च यजुर्वेदः-

"सुषुण्णः सूर्यरशिमश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो। भेकुरयो नाम। सन इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ताभ्यः स्वाहा॥ य.18.40। इति पूर्वोक्तमन्त्रे नक्षत्राणां चन्द्रमसश्च रूपकेण अप्सरसगन्धर्वप्रयोगाविति व्याख्याकाराः कथयन्ति। सुषुम्णाख्यः सूर्यरश्मि श्चन्द्रमा गन्धर्वो भवति। तस्य भेकुरयो भां कुर्वन्तीति व्युत्पत्त्या नक्षत्राणि अप्सरसो भवन्ति। ताभिः नक्षत्राप्सरोभि र्विशिष्ट श्चन्द्रमा गन्धर्वः ब्रह्मक्षत्रं रक्षतु। तस्मै स्वाहा भवतु। एषो हि मन्त्रार्थोऽत्र। एवं सौषुम्णः चन्द्रमा वा गौः इत्युदाहरणार्थं "अत्राह गोरमन्वते "ति[3] ॥ तदुपरिष्टाद्व्याख्यास्यामः ॥" इति नैगमानि तथा नैरुक्तानि वचनानि, उदकमये स्वच्छे चन्द्रबिम्बे सूर्यकिरणाः प्रतिफलन्ति, तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं संज्ञां लभन्ते तादृशीमेव संज्ञां चन्द्रेऽपि वर्तमानाः लभन्त इति कथयन्ति। एवञ्चात्र उदकमयचन्द्रमण्डले एकस्यैव सुषुम्णस्य सूर्यरश्मेरन्तर्हितं गमनं भवति। इतरे रश्मय श्चन्द्रमण्डलमप्राप्ता अपि प्राप्तस्य सुषुम्णस्य

---

1. सर्वाणि भूतानि नित्यमसौ सुखयतीत्यसौ सुषुम्णःइति दुर्गाचार्याः। नि.पु.74
2. सोऽपि गौरुच्यते॥ नि.पु.74
3. अत्राह गौरमन्यत नाम त्वष्टुरपीच्यम्।
   इत्था चन्द्रमसो गृहे। 5. ऋ.सं.1.6.7.1
   नि.पु.198

सम्बन्धेन तेऽपि गोशब्दवाच्याः अभवन्। विचार्यमाने गौरादित्यः, तदेकदेशस्तदन्तर्वर्तिगन्धर्वाख्यो रश्मिरपि गौरित्युच्यते। तद्वति चन्द्रे च तदनुगमननिबन्धनः गोशब्दप्रयोगः[1]। एवमेकार्थकानेकार्थकशब्दप्रतिपादकनैगमकाण्डे गो शब्देन चन्द्रः प्रपञ्चितः।

**चन्द्रमाः**

तृतीये दैवतकाण्डे मध्यस्थदेवतात्वेन व्याख्यातः चन्द्रमाः। सोम-सोमलतयोः परस्परसम्बन्धं व्यत्यासं च विवृण्वन् निरुक्तकारः प्रसङ्गवशात् प्राप्तयोः चन्द्र-चन्द्रमशशब्दयोः निर्वचनं ददाति। तत्र प्रथमतश्चन्द्रमशशब्दः परिशील्यते। ''चन्द्रमाः चायन् द्रमति। चन्द्रो माता। चान्द्रं मानमस्येति वा॥'' इति ह्यत्र चन्द्रमस्शब्दस्त्रिधा निरुक्तः[2]। तत्र चायन् पश्यन् द्रमति गच्छति। अतश्चायन् द्रमतीति चन्द्रमाः। अत्र द्रमते रसुन् चायन् शब्दस्य चन्भावश्च। चायृ पूजानिशामनयोः भ्वा.उ ततः शतरि रूपं चायन् इति। द्रमति गत्यर्थः भ्वा.प । एवं चन्द्रमाः सर्वभूतान्युपरि उपर्यवस्थितः पश्यन् गच्छतीति ज्ञायते। अथ द्वितीयां व्युत्पत्तिं परिशीलयामः। सा हि चन्द्रश्चासौ माता चेति। अत्र चन्द्रशब्दे उपपदे ''चन्द्रे मो डित्'' उ.4.222 इति असुन् डित्वाट्टिलोपश्च। तथाच आह्लादकः एवं सर्वस्य लोकस्य निर्माता चन्द्रमाः इति निर्णीयते। एवं चान्द्रं मानमस्येति चन्द्रमाः। एषा तृतीया व्युत्पत्तिः। चान्द्रं चन्द्रसम्बन्धि। अत्र ह्रस्वत्वमार्षम्। अत्र हि चन्द्रमस् शब्दः सोमलतारूपेण सोमदेवतारूपेणापि निरुच्यते। पातॄणामाह्लादिकायाः सोमलतायाः शुक्लपक्षे प्रत्यहं पर्णवृद्धि र्भवति। अतः सा चन्द्रमाः भवति। सोमदेवता पक्षे चन्द्रमाः इन्दुरेव। तस्य शुक्लपक्षे प्रत्यहं कलावृद्धित्वेन मानं भवति। अतो देवता वाच्यस्सोमः आह्लादकरकलावृद्ध्या चन्द्रमाः भवति। एवं त्रिविधनिर्वचनेषु प्रथमं द्विधातुजम्। द्वितीयं चन्द्रपूर्वपदं मातोत्तरपदम्। तृतीयं तु न समानाधिकरणं अपि तु बहुव्रीहि र्भवति[3]।

---

1. यद्रात्रावन्तर्हितं सौरं तेजस्तच्चन्द्रमण्डलं प्रविश्यातीव नैशं तमो निवार्य सर्वं प्रकाशयति ईदृग्भूत तेजसा युक्तः सूर्यश्चन्द्र एव। द्वादशादित्येषु चन्द्रस्यापि परिगणितत्वात्। नि.पु.199
2. चन्द्रमाश्चायन्द्रमति। चन्द्रो माता। चान्द्रमानमस्येति वा। नि.पु.468
3. नि.पु.468

## चन्द्रः

क्रमप्राप्तं चन्द्रशब्दं ब्रुवाणः निरुक्तकारः गदति खलु ''चन्द्रश्चन्दतेः कान्तिकर्मणः। चन्दनमित्यप्यस्य भवति॥'' अत्र चदि धातुः कान्त्यर्थकः[1]। तथा च ''स्फायितञ्चि..'' उ.1.12 इत्यादिना चदेरकि चन्द्रः भवति। नित्यकान्तो ह्यसौ चन्द्रः। अस्यैव धातोः ल्युटि चन्दनमित्यपि सिद्ध्यति। उभयत्र चद्यते काम्यते असाविति चन्द्र इतिव्युत्पत्तिः वक्तुं शक्यते। अथवा- ''चारु द्रमति चिरं द्रमति। चमे र्वा पूर्वम्'' इति चन्द्रनिर्वचनस्य व्युत्पत्तिं दर्शयति यास्कः। अत्र द्रमतीति क्रियाविशेषणम्। चारु चिरं चमु इत्येतेष्वन्यतमं तद्विशेषणं क्रमशो भवति। द्रमति गत्यर्थकः[2] चारु मनोज्ञं यथा स्यात्तथा द्रमतीति प्रथमा व्युत्पत्तिः। चारु शब्दः रुचे र्दीप्तिकर्मण इति निगदति निरुक्तकारः। ''चारु-रुचे र्विपरीतस्य। तस्यैषा भवति॥''[3] इति रुचेराद्यन्तविपरीतस्येदं पदं पृषोदरादित्वात्सिद्धम्। ततः रुचेः - दीप्तिकर्मकत्वात् अभिप्रीत्यर्थकत्वाच्च[4] चिरं प्रकाशं तथा मनोज्ञं द्रमति गच्छतीति चन्द्रः इति द्वितीया व्युत्पत्ति र्भवति। चमु शब्दस्यादनमर्थः[5]। तथा च चम्यमानः देवै र्भक्ष्यमाणः द्रमति गच्छतीति चन्द्रः। एषा तृतीया व्युत्पत्ति र्भवति। एवं चन्द्रशब्दं केवलधातुजत्वेन अनन्तरं चारु चिरं चमु इत्येतेष्वन्यतमेषु पूर्वपदेषु द्रमतेरुत्तरपदत्वेन तं यास्कः निरुक्तवान्। एवं चन्द्रमाः चन्द्रः इति शब्दद्वयस्य निर्वचनमुक्त्वा वेदसम्वन्धि प्रयोगं दर्शयति तत्रैव सः[6]। यथा - ''नवो नवो भवति जायमनोऽह्नां केतुरुषसामेत्यग्रे। भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमा स्थिरते दीर्घमायुः॥ ''ऋ.सं.8.3.23.'' अयं मन्त्रः चन्द्रमसे चरौ विनियोगः। एवं राजयक्ष्मगृहीतेष्टौ च। चन्द्रमाः प्रतीच्यां दिशि पूर्वपक्षमारभ्य उपक्रान्तवृद्धि र्भवति। अस्तं गते आदित्ये पश्चादादित्यस्य प्रतिमासं जायमानः नवो नवो भवति। शुक्लप्रतिपदारभ्यैकैककलाधिक्येनोत्पद्यमान स्सन् प्रतिमासं नवो भवतीत्यर्थः। अत्र सायणस्तु प्रतिदिनं नव नव एव भवतीत्याह। अनेनात्र शुक्लादिमासक्रमोऽभिहितः। कृष्णपक्षान्ते प्राच्यां दिशि प्रक्षीणकलामात्रस्सन् प्रतिपदादीनां तिथीनां चन्द्रकलाह्रासवृद्ध्यधीनत्वात् अह्नां केतु र्भवति। एतादृशश्चन्द्रमा

---

1. चदि--आह्लादे (भ्वा.प)
2. द्रम-गतौ.भ्वा.प
3. नि.पु.468
4. रुच-दीप्तावभिप्रीतौ च। भ्वा.प.। रोचते सूर्यः। हरये रोचते भक्तिः। इति॥
5. चमु-अदने। भ्वा.प
6. नि.पु.468

उषसामग्रमेति। किञ्चायं प्रतिदिनं ह्रासवृद्ध्या पक्षान्तमभिगच्छन् देवेभ्यः हविर्भागं करोति। स एषः होतृणामस्माकमपि दीर्धमायुः प्रवर्धयत इत्याशास्महे। एष हि तत्र मन्त्रार्थः।

## सोमः

नैगमकाण्डे ओषधिविशेषत्वेनोदाहृतोऽयम्[1]। अयमेव दैवत-काण्डेऽपि ''ओषधिः सोमः। सुनोतो र्यदेन मभिषुण्वन्ति।'' इति लताविशेषत्वेन कथयन् यास्कः पश्चात् शब्दस्यास्यार्थान्तरत्वेन सोमलतायाः अधिदैवत्वेन चन्द्रार्थतां निगदति। अधियज्ञे सोमशब्दः ओषधिलताविशेषः भवति। स एवाधिदैवते चन्द्रदेवतावाच्यः भवति। यथा हि – ''सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम्। सोमं यं ब्रह्माणो विदु र्न तस्याश्नाति कश्चन॥2॥ (ऋ.सं 8.3.20)[2] अत्र प्रथममन्त्रे रासायनिकसोमस्य असोमत्वम्। तस्यैव द्वितीयार्थेनाधियज्ञसोमस्यासोमत्वं चन्द्रमसमपेक्ष्य। तथाचोक्तं तत्र'' सोमं मन्यते पपिवान् यत्संपिंषन्त्योषधिम्। इति वृथासुतमसोममाह। सोमं यं ब्रह्माणो विदुरिति, न तस्याश्नाति कश्चनायज्वेत्यधियज्ञम्। अथाधिदैवतम्। सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम् इति यजुः सुतसोममाह। सोमं यं ब्रह्माणो विदुश्चन्द्रमसं न तस्याश्नाति कश्चनादेव इति।'' इति एवं देवानां हि भक्ष्यत्वेन विपरिणामं प्राप्तः चन्द्रमाः सोमः इति कथ्यते। एष सोमो नूनं देवानामन्नं भवति। ''सोमो नूनमेष तद्देवानामन्नम्'' इति हि सोमस्य स्वप्रधाना स्तुतिः[3]। अत्रैवं सोमशब्दस्य ओषधित्वेन देवताविशेषत्वेन च मन्त्रान् दर्शयति यास्कः। तथाहि – ''यत्वा देव प्रपिबन्ति तत आप्यायसे पुनः। वायुः सोमस्य रक्षिता समानां मास आकृतिः॥'' 5.ऋ.सं.8.3.20 [4]॥ मन्त्रस्यास्यार्थः एवं निरुच्यतेऽत्र। यत्वा देव प्रपिबन्ति तत आप्यायसे पुनः॥ इति नाराशंसानमभिप्रेत्य। पूर्वपक्षापरपक्षाविति वा॥ इति[5]॥ एवं '' वायुः सोमस्य रक्षिता''। वायुमस्य रक्षितारमाह। साहचर्याद्रसहरणाद्वा इति॥

---

1. नि.पु.468
2. नि.पु.167, 168
3. सोमो नूनमेष तद्देवानामन्नम्। नि.दुर्ग.पु.466
4. नि.पु.466
5. नि.पु.467

एवञ्च "समानां-संवत्सराणां मास आकृतिः सोमरूपविशेषैरोषधिश्चन्द्रमा वा" इति। तथाहि कृष्णपक्षे त्वां सोमं चन्द्रमसं देवाः पिबन्ति। पुनः शुक्ले त्वं कलोपचयात् वर्धसे। एवं सर्वरसापहारी वायुः समर्थः सन्नपि एनं न शोषयति। अतोऽस्य तेन सख्यमस्ति। अशोषकत्वादेव सोमः तेन वायुना रक्षितः भवति। एवञ्च चन्द्रस्य कलोपचयमनुसृत्य सोमलतायाः पर्णान्युपचीयन्ते। एवं पौर्णमास्यां चन्द्रस्य कलाः इव सोमलतायाः अस्याः पञ्चदशपर्णाः सम्पद्यन्ते। पौर्णमास्याः परं प्राप्तकलाहानौ चन्द्रमस इवास्याः अपि एकैकंपर्णमपचीयत इति ओषधेः चन्द्रमसश्च समत्वं प्रतिपाद्यते। एवञ्च अधियज्ञे सोमलतापर्णानामुपचयापचयाभ्यां अन्यद्रूपं प्रतिपाद्य संवत्सराणां मासस्य च व्यवच्छेदको भवति। एवमधिदैवते तु चन्द्राख्यः सोमः कृष्णपक्षे देवानामन्नं भूत्वा प्रतिदिनमेकैकया कलया अपचितो भवति[1]। स एव पुनः वायुना सूक्ष्मया रश्मिनाड्या सुषुम्णाख्यया शुक्लपक्षे प्रतिदिनमेकैकया कलया वर्धितो भवति। अनेन प्रकारेण चन्द्रमाः मासभूतात्मानमावर्तयन् द्वादशभिः द्वादशभिः मासैः संवत्सराणां व्यवच्छेदको भवति। एवं सोमलता प्रसङ्गोक्तस्य "स्वादिष्ठया मदिष्ठया पवस्व सोमधारया। इन्द्राय पातवे सुतः ॥" ऋ.सं.6.7.16, इति मन्त्रस्यापि उभयार्थतोपलभ्यते। भगवन् सोम! त्वं लोकानामतिशयेन स्वादुतया मदयितृतया प्रत्यहमेकैकया कलया अस्मान् पवस्व (प्रक्षर)। यतस्त्वं सूर्येण सुषुम्णाख्यया रश्मिनाऽऽपूर्य वर्धसे इति सोमशब्दः प्रपञ्चितः[2]।

## अनुमतिः - राका

कलाधिदैवते चन्द्रसहचारिण्यौ मध्यस्थाने भवत्येते। "अनुमतिरनुमननात्। तस्या एषा भवति ॥8॥29॥" इति हि नैरुक्तवचनम्। अनुमता किल यदृषिभिः देवैश्च चतुर्दशके पक्षे अस्त्वियं पौर्णमासीति। अत एव अनुमन्यते यदनुमन्तव्यमित्यनुमतिरुच्यते। सैव पौर्णमासी पञ्चदशके पक्षे राका इत्युच्यते। राका हि राते र्दानकर्मणः, दानार्थस्य हविर्दाननिमित्तं हि सा भवति। तथा च निरुक्तवचनम् - "राका - राते र्दानकर्मणः। तस्या एषा भवति ॥9॥ (30) इति। एवञ्च न्यूनैककला

---

1. एषः(वायुः) हि एनं (चन्द्रमसं) सूक्ष्मया रश्मिनाड्या सुषुम्णाख्यया पुनर्यथाकालमापूरयति। नि.दुर्ग.पु.467.
2. नि.पु.465, 466, 467.

पौर्णमासी अनुमति स्तथा सम्पूर्णचन्द्रकला पौर्णमासी् राकेति विज्ञायते[1]।''

## सिनीवाली - कुहूः

चतुर्दश्याः अन्तिमः प्रहरः तथा अमावास्यायाः अष्टौ प्रहराश्चेति नवप्रहरात्मकश्चन्द्रक्षयकालः शास्त्रसिद्धः। तत्राद्य प्रहरद्वये चन्द्रस्य सूक्ष्मता। अन्तिमप्रहरद्वये कृत्स्नक्षयः। अतोऽमावास्याया आद्यप्रहरः सिनीवाली संज्ञः। अन्तिमप्रहरद्वयं कुहूसंज्ञम्। मध्यमं प्रहरद्वयं दर्शसंज्ञमिति। सिनमन्नं भवति। सिनाति बध्नाति भूतानि प्राणिन इति सिनी भवति। वालं पर्वः। स च उत्सवतिथिः सन्धिसमयो वा भवति। तथा च तस्मिन् वाले पर्वणि असौ सिनी अन्नवती भवतीति सिनीवाली। सिनीचास्या वाली चेति सिनीवाली भवति। अपि च वालेन केशेनेवातिसूक्ष्मेण शङ्कुना सेवितव्यो व्योद्धव्यो भवति इति सिनीवाली। एवमणुरसौ चन्द्रमा भवत्यस्यां, येन ज्ञायते वालेनेवातिसूक्ष्मेण शङ्कुनाप्ययं सीव्येत इत्यर्थः[2]। गुहू संवरणे इति धातोः क्व शब्दोपपदात् भवते हूयते र्वा बाहुलकात् कू प्रत्यये (उ.1.88) गकारस्य ककारादिः। गुह्यः अदृश्यश्चन्द्रमा अत्र भवति, क्व पुनरसाविति वितर्क्यश्चेति वा। एवं गुहूः क्वभूः कुहू र्वा सती कुहूः इति विज्ञायते[3]। तथा च या पूर्वा अमावास्या सा सिनीवाली, योत्तरा सा कुहूः इति हि निरुक्तवचनानि[4]।

एवं विचार्यमाणे निरुक्ते चन्द्रविषयाः एवमवगताः भवन्ति। अयं जलमयः ग्रहः। सूर्यकिरणानां दर्पणवत् प्रतिफलरूपकश्च। वायुः सुषुम्णाख्यया नाड्या तदाख्यं सौरं तेजः स्वीकृत्य तेनैवैनं वर्धयति। देवानामन्नभूतोऽयं मध्यस्थदेवतासु

---

1. अनुमतीकरोति देवपत्न्याविति नैरुक्ताः। पौर्णमास्याविति याज्ञिकाः। या पूर्वा पौर्णमासी साऽनुमति, योत्तरा सा राकेति विज्ञायते॥ नि.पु.482
2. सिनीवाली-सिनमन्नं भवति, सिनाति भूतानि। वालं-पर्व, वृणोतेस्तस्मिन्नन्नवती। वालिनी वा वालेन वास्यामणुत्वा च्चन्द्रमसः सेवितव्यो भवतीति वा तस्या एषा भवति॥10 (32)। नि.पु.483
3. कुहू गूहतेः। क्वाभूदिति वा। क्व सती हूयत इति वा। क्वा हुतं हवि र्जुहोति वा। तस्या एषा भवति॥12॥(32) नि.पु.484
4. सिनीवाली-कहूरिति देवपत्न्याविति नैरुक्ताः। अमावास्ये इति याज्ञिकाः। या पूर्वाऽमावास्या सा सिनीवाली। योत्तरा सा कुहूरिति विज्ञायते॥ नि.पु.483.

गृहीतव्यः। होतॄणां शत्रुनाशकः, आनन्ददाता, दीर्घायुष्कारकः, राजयक्ष्मादि रोगापनोदकश्चेति विज्ञायते। अस्य कलोपचयापचयाभ्यां मासः प्रवर्तते। तेन च मासेन संवत्सरश्च। ओषधिरूपलतया साकं सोमाख्यस्यास्य पर्णोपचयापचयैः कलोपचयापचयैः रसात्मकतया च साधर्म्यं विद्यते। भूलोकवासिनः सोमलतारसं, देवाः सोमात्मकमेनं पीत्वा हृष्टाः भवन्ति। अस्य न्यूनैककला चतुर्दशी तिथिः अनुमति र्भवति। सम्पूर्णकला पूर्णिमातिथिस्तु राका इत्युच्यते। एवञ्च अमावास्यापि दृष्टेन्दुः सिनीवालीति, नष्टेन्दुकला कुहूः इति विज्ञायते। अपि च इन्दुशब्दवाच्यश्चन्द्रः हवनार्ह इव अहविर्भाक्त्वात् यज्ञे न चाहूयते। यास्को हि सप्तविंशतिदैवतेषु इन्दुं अहविर्भाङ्क्षु निर्दिष्टवान्। अतोऽस्य यज्ञेषु उदकमेव घृतं भवति। उदकमयचन्द्रमण्डले एकस्य सुषुम्णाख्यसूर्यरश्मेः अन्तर्हितं गमनं भवति। अतो गां धरतीति व्युत्पत्त्या चन्द्रो गन्धर्वपदवाच्यो भवति।

## वेदाङ्गेषु छन्दसः स्थितिः

मन्त्राणां छन्दोबद्धतया छन्दसां ज्ञानं विना वेदमन्त्राः साधु उच्चारयितुं न शक्ताः। अतो हि छन्दोऽपि वेदाङ्गत्वेन परिगण्यते। तद्यथा-शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनं चैव वेदाङ्गानि षडैव तु॥ इति[1]। अपि च पाणिनिः स्वशिक्षायां "छन्दः पादौ तु वेदस्य" इत्यारभ्य वेदाङ्गानि कथयन् छन्दसां वेदपादत्वमकथयत्[2]। निरवछिन्नवैदिकछन्दोलक्षणनिरूपणाभावात् छन्दश्शास्त्रस्य वेदाङ्गत्वं केचन सन्दिहन्ति। केचन शुद्धवैदिकछन्दो ग्रन्थस्यैव वेदाङ्गत्वं परिगणयन्ति। किन्तु सुविपुलमतिना ऋग्वेदभाष्यकृताऽपि छन्दोग्रन्थस्य वेदोपयोगित्वमेव दर्शितमस्ति। शौनकविरचिते ऋक्प्रातिशाख्ये चरमभागे छन्दसां पर्याप्तं विवेचनं विद्यते।[3] छन्दसां लक्षणं ब्राह्मणग्रन्थेषु तत्र तत्रोपलभ्यमानमपि शाङ्ख्यायनश्रौतसूत्रे(6.26) सामवेदीय निदानसूत्रे च विशेषतयोपवर्णितमिति ज्ञायते। अतस्तस्य वेदाङ्गत्वं शक्यवचनम्। अथापि वैदिककालानन्तरमुत्पन्नोऽयं ग्रन्थः भूयस्तया लौकिकविषये एव प्राधान्यमर्हतीति अवधेयं भवति।[4] उपलभ्यमानछन्दो ग्रन्थेषु प्राचीनतमस्य

---

1. वृत्त.पी.1,
2. पा.शि.41,
3. सं.सा.इ.पु.17
4. वै.सा.च.पु.327,

पिङ्गलछन्दो ग्रन्थस्य कर्ता पिङ्गलाचार्यः पतञ्जलिमुनिरेवेति, तद्धि तस्यैव नामान्तरमिति जनश्रुतिः। तथाहि – "क्षीराब्धेरमृतं यदुद्धृतंदेवदानवैः। छन्दोऽब्धेः पिङ्गलाचार्यै श्छन्दोऽमृतं तथोद्धृतम्॥" इति हि प्राचामुक्तिः[1]।

**छन्दसि चन्द्रः**

पिङ्गलछन्द्रसि तथा तदनन्तरवृत्तरत्नाकरादि छन्दश्शास्त्रग्रन्थेषु च चन्द्रगोलविषयकाः, चन्द्रदेवताविषयकाः विषयाः नोपलभ्यन्ते। किन्तु छन्दश्शास्त्रे वृत्तेषु गणानां प्रसक्तिस्तथा प्रधान्यता विद्यते। तत्र भगणस्य अधिदेवता चन्द्र इति, अतः भगणादिछन्दोभिः उपक्रान्ताः ग्रन्थाः तत्कर्तृणां यशस्कराः भवन्ति। स हि विषयः "भस्तारकेशो यशः" इत्यादिना सूचितः[2]। एतस्मादन्यत्र चन्द्रप्रस्तावो नोपलभ्यते। किन्तु शशिवदनेत्यादि वृत्तनामान्युपलभ्यन्ते।

## शिक्षासु चन्द्रः

शिक्षाशास्त्रेण वेदमन्त्राणां उच्चारणं शुद्धं सम्पद्यते। वेदे स्वरस्य विज्ञानं सर्वविदितमेव। तत् स्वरज्ञानं च शिक्षायत्तम्। अत एवेदं शास्त्रं वेदाङ्गमुच्यते। "शिक्षाघ्राणं तु वेदस्य" इति हि पाणिनेर्वचनम्[3]। तैत्तिरीयोपनिषदि प्रथमवल्ल्यां द्वितीये अनुवाके शिक्षास्वरूपं व्याख्यातमेवम्। "शिक्षां व्याख्यास्यामः। वर्णः स्वरः मात्रा बलम् साम सन्तान" इत्युक्तः शिक्षाध्यायः इति[4]। अत्र वर्णः अकारादिः, स्वरः उदात्तादिः, मात्रा ह्रस्वादिः, बलं स्थानप्रयत्नौ, साम निषादादि, सन्तानो विकर्षणादिः। एतदवबोधनमेव शिक्षायाः प्रयोजनम्। शिक्षाशास्त्रप्रवृत्तेः फलत्वेन प्रथमं वेदानां संहितारूपेण पाठ उत्पन्नः। यतोह्यत्र शिक्षाशास्त्रोपदिष्टवर्त्मणा सन्धिनियमाः सञ्चारिताः।

---

1. वृत्त.पी.पु.1, श्रीशीलस्कन्धयतिवरस्य॥
2. उर्वीं मस्त्रिगुरुः श्रियं वितनुते नस्त्रिलो जीवितम्।
   रोऽग्निर्मध्यलघुः क्षतिं स पवनो देशभ्रमं प्रान्तगः।
   यो वार्यादिलधुर्भृतिं दिनमणिर्मध्ये गुरुर्जो रुजां धत्ते
   तोऽन्तलघुः क्षयं गुरुमुखे भस्तारकेशो यशः॥ वृत्त.व्या.पु.4
3. पा.शि.42,
4. तैत्ति.1.2.

तदनु पदपाठोऽपि शिक्षाशास्त्रस्यैव फलत्वेनाविर्भूतः। अत्र संहितापाठे सन्धायपठितानां पदानां विश्लेषो भवति सन्धिनियमानुरोधेन। शिक्षाविषयकाः प्राचीनाः ग्रन्थास्तु प्रातिशाख्यानीति नाम्ना प्रख्यातानि।

ऋग्वेदीयं प्रातिशाख्यं खण्डत्रयात्मकं नात्यल्पं पद्यमयञ्च। आश्वलायनाचार्यस्य गुरुणा शौनकाचार्येण ऋग्वेदीयं प्रातिशाख्यं प्रणीतमित्यामनन्ति साम्प्रदायिकाः। शौनकशाखीयैः परिपोषं प्रापितं अधुनोपलभ्यमानं ऋग्वेदीयं प्रातिशाख्यमिति आधुनिकाः संवदन्ति। तैत्तिरीयप्रातिशाख्यं विंशति संख्याकानामाचार्याणां नामानि निर्दिशति। वाजसनीयप्रातिशाख्यं शौनकशाखीयानामेव कृतिरिति निगदन्ति ऐतिहासिकाः। एवं शिक्षाशास्त्रविषयाः प्रतिशाखाभेदेनानैकैराचार्यैः समुल्लिखितास्सन्तः प्रातिशाख्यनाम्ना व्यवहृताः आसन्[1], एतेषु प्रातिशाख्यग्रन्थेषु स्वीकृतविषयाः अस्मद् प्रसङ्गविषयस्य दूरापेताः। अतस्तद्विषयाः नात्र प्रस्तूयन्ते। एवं व्याकरणशास्त्रप्रस्तावे प्रातिशाख्यप्रणेतृणां नामानि समुल्लिखितानि। तत्र च चन्द्रप्रस्तावो नोपलभ्यते। एवं विषयपरत्वेन, रचनापरत्वेन वेदाङ्गभूतशिक्षाशास्त्रे चन्द्रस्य यथाकथञ्चित् यत्र कुत्रचित् प्रस्तावो नोपलभ्यते। अत एष विषयो विरम्यते एतावता॥

## निष्कर्षः

इन्दुशब्दो निरुक्ते देवतारूपेणैव निरुक्तः। किन्त्वयं हविर्भाक् न भवति। अतो घृतविषयेऽस्य उदकमेवोपयुज्यते। सुषुम्णा नाम सूर्यरश्मिस्सूर्या च्चन्द्रमसं प्रति गच्छति। अतश्चन्द्रो गन्धर्वपदवाच्यो भवति। तत एव गौरित्यपि नाम तस्य भवति। अस्य भेकुरयो नक्षत्राणि तु अप्सरसो भवन्ति। उदकमयं मण्डलं चन्द्रस्य भाव्यते। अत एव यत्र सूर्यकान्तिर्भवति तत्र प्रकाशपरिवर्तनं भवति। यत्र नास्ति तत्र तिमिरमेव। चन्द्रमस् शब्दः चन्द्रशब्दः सोमशब्दश्चात्र समं व्याख्याताः। सोमलतारूपेण, देवतारूपेणात्र सोमशब्दः अधियज्ञे अधिदैवते साधर्म्येण व्याख्यातः। शुक्लपक्षे

---

1. प्रतिशाखासु व्याकरणशास्त्रैकदेशकसन्ध्यादि नियमानां सत्वात् एतत् शिक्षाशास्त्रं वैदिकव्याकरणत्वेन प्रथितमस्ति॥ सं.व्या.इ.पु.31

पर्णवृद्धिः कृष्णपक्षे पर्णक्षय इव लतायाः, देवताचन्द्रस्यापि गोलविषयत्वेन शुक्लपक्षे कलावृद्धिः कृष्णपक्षे कलाक्षयः भवति। अतः आह्लादकत्वं वृद्धिक्षयौ च द्वयोः साधारणो धर्मः। कृष्णपक्षरात्रिषु उषसामग्रे समायति चन्द्रः। ह्रासवृद्धिभ्यां प्रतिपदादि क्रमेण कालसूचको भवति। वायुश्चन्द्रमसं सूक्ष्मया रश्मिनाड्या सुषुम्णाख्यया पुनर्यथाकालमापूरयति। सर्वरसापहारी वायुस्त्वस्य रक्षकोऽस्ति। देवनामन्त्रभूतोऽयं मध्यस्थदेवतासु गृहीतः। होतृणां शत्रुनाशकः आनन्ददाता दीर्घायुष्कारकः राजयक्ष्मादि रोगापनोदकश्चायं चन्द्रमाः। अस्य न्यूनैककला चतुर्दशीतिथिः अनुमतिः। सम्पूर्णकला पूर्णिमातिथिस्तु राका भवति। एवं दृष्टेन्दुकला सिनीवाली, नष्टेन्दुकला कुहूरिति निश्चीयते।

छन्दसि भगणश्चन्द्रदेवताकः। स च यशस्करः। छन्दसि शशिवदनेत्यादि वृत्तनामान्युपलभ्यन्ते।

वेदाङ्गभूते शिक्षाशास्त्रे चन्द्रस्य प्रस्तावो विषयपरत्वेन रचनापरत्वेनैव वा न विद्यते।

## सप्तमी कला

# ज्योतिषे चन्द्रः

### प्रस्तावना

वेदास्तावत् यज्ञकर्मप्रवृत्ताः यज्ञाः प्रोक्ता स्ते तु कालाश्रयेन।

शास्त्रादस्मात् कालबोधो यतस्स्यात् वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्॥ इति भास्कराचार्यः वेदाङ्गेषु ज्योतिषस्य संबन्धं विशदीकृतवान्[1]। अयं च विषयः वेदवाङ्मये बहुषु स्थलेषु स्पष्टीभवति। ''ओम् तानि वा एतानि यमनक्षत्राणि यान्येव देवनक्षत्राणि तेषु कुर्वीत यत्कारी स्यात् पुण्याह एव कुरुते। यत्पुण्यं नक्षत्रं तद्बट्कुर्वीतोपव्युषं यदा वै सूर्य उदेति अथ नक्षत्रं नैति यावति तत्र सूर्यो गच्छेत्, यत्र जघन्यं पश्येत्, तावति कुर्वीत यत्कारी स्यात् पुण्याह एव कुरुते।'' इत्येतैर्वाक्यैः, वेदप्रतिपादितकर्मानुष्ठाने नक्षत्राणां सूर्याचन्द्रसङ्गतानां वा गुरुशुक्रादिग्रहसङ्गतानां वा तत्तत्फलजनकत्वं च नक्षत्रेष्ट्यादिषु विपुलीकृतमिति विज्ञायते[2]। खगोले समुत्पन्नानां वर्धमानानां च उद्भिज्जादिमानवपर्यन्तानां जीवानां मध्ये नित्यः सम्बन्धो दृश्यते। एवं चन्दकलावृद्धिक्षयौ पुरस्कृत्य मानवमेधादिषु दृश्यन्ते विकाराः इदानीमप्यस्माभिः। शरच्चन्द्रचन्द्रिकाभिः आनान्दः अनुभूयते एव। अमावास्यादिषु हृदयोल्लासे व्यत्यासश्च दृश्यते। वेदवाक्यानि च ''नामावास्यायां च पौर्णमास्यां स्त्रियमुपेयात् यदुपेयात् निरिन्द्रियः स्यात्''[3] इत्यादीनि वचनानि पर्वदिनेषु[4] स्त्रियं संगतस्य पुरुषस्य निरिन्द्रियत्वं निर्दिशन्ति। एतादृशानि वाक्यानि जगति परस्परग्रहसम्बन्धं प्रभावं चोपदिशन्ति।

---

1. ज्योति.पु.1,
2. ज्योति.पु.1
3. ज्योति.पु.2
4. कृष्णाष्टमी चतुर्दश्य प्यमावास्या च पूर्णिमा।
   संक्रांतिः पर्वतिथयो मुनिभिः परिकीर्तिताः। मुहू.द.श्लो.46

वैदिककाले गणितपद्धतेः पञ्चाङ्गरचनापद्धतेः यन्त्रोपकरणादिपद्धतेरभावेऽपि सूर्याचन्द्रमसोर्गतिवशादानीततिथिनक्षत्रज्ञानमात्रं ज्योतिर्विज्ञानमस्तीति, वसिष्ठादयो महर्षयोऽतीन्द्रियज्ञानवन्तः क्रान्तदर्शिनः तत्ववेत्तारो भूत्वाऽऽर्षेणचक्षुषाऽऽतीन्द्रियान् असंवेद्यान् भावानुक्तवन्त आसन्[1]।

## ज्योतिषशास्त्रे चन्द्रस्य स्वरूपं - खगोलीयसम्बन्धश्च

प्राचीनभारते वर्षे वेदचक्षूरूपं सिद्धान्त-संहिता-होरारूपेण स्कन्धत्रयात्मकं ज्योतिश्शास्त्रं[1] अष्टादशमहर्षयः प्रावर्तयन्निति कश्चन सम्प्रदायः अस्ति। कस्यपेन तु तेषां नामानि उदाहृतान्येवम् -

सूर्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशरः। कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः॥
लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः। शौनकोऽष्टादशैते ये ज्योतिश्शास्त्रप्रवर्तकाः॥

एषामचार्याणां नामग्रहणे पराशरसंहितायां नारदसंहितायां पाठभेदौ वर्तेते[2]। ज्योतिश्शास्त्रसम्प्रदायप्रवर्तकेषु चन्द्रस्य सम्वन्धो न दृश्यते। विचार्यमाणे तु प्राचीनं ज्योतिश्शास्त्रं सर्वं सूर्यचन्द्रादिभिः ग्रहैस्सह नक्षत्राणां सम्बधं तत्प्रभावं च परामृशति। अपि च ज्योतिषशास्त्रस्य स्कन्धत्रये तृतीयं होराशास्त्रं अहोरात्रस्य विपरिणामभूत ''होरा'' शब्दमूलमिति विज्ञायते। ''अहोरात्र'' शब्दे अकारस्य त्रकारस्य च लोपे ''होरा'' इति शिष्यते खलु। स च होरा शब्दः अहोरात्रात्मकत्वात् दिनरूपाहोरात्रफलव्यञ्जको भवति[3]।

---

1. आविर्भूतप्रकाशानामनुपप्लुतचेतसाम्।
   अतीतानागतज्ञानं प्रत्यक्षान्न विरुद्ध्यते॥
   अतीन्द्रियानसंवेद्यान् पंश्यन्त्यार्षेण चक्षुषा।
   ये भावान् वचनं तेषां नानुमानेन बाध्यते॥ ज्योति. पु.3,
2. ज्योति.पु.5
3. होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात्।
   कर्मार्जितं पूर्वभवे सदादियत्तस्य पङ्क्तिं समभिव्यनक्ति॥ बृ.जा.1.3,
   आद्यन्तवर्णलोपाद्धोराशास्त्रं भवत्यहोरात्रात्॥ सारा.2.2

अस्मिन् हि ज्योतिषशास्त्रेऽयं हि चन्द्रः पाटले कुलीरराशौ[1] स्वयं श्वेतवर्णो[2] भूत्वा श्वेतवर्णस्याधिपतिस्सन् भासते। जलस्याधिदेवता भवति[3]। वायुव्यदिगाधिपत्यं चास्य विद्यते। एषा दिक् सूतिकागृहद्वार इत्युच्यते। सहि हृतनष्टद्रव्येषु चोरादिगमनं सूचयति। श्वेतरक्तवर्णकर्काटकराश्यधिपतिरयं चन्द्रः ग्रहेषु शुभाशुभग्रहत्वेन स्वीकृतः। क्षीणचन्द्रोऽशुभप्रदः स एव पूर्णचन्द्रश्चेत् शुभप्रदः भवति। शुक्लपक्षाष्टमीमारभ्य कृष्णपक्षसप्तमी पर्यन्तं पूर्णचन्द्र इति, स एव कृण्णपक्षाष्टमीमारभ्य शुक्लपक्षसप्तमी पर्यन्तं क्षीणचन्द्र इति विज्ञायते[4]। अयं चन्द्रः शुक्लप्रतिपदारभ्य मासे प्रथमदशदिनेषु मध्यमबल इति, अनन्तरदशदिनेषु पूर्णबल इति, अन्तिमेषु तु दशदिनेषु दुर्बल इत्युच्यते। अयमेव विषयः "मासे तु शुक्लप्रतिपत्प्रवृत्तेः पुर्वे शशी मध्यबलो दशाहे। श्रेष्ठो द्वितीयेऽल्पबलस्तृतीये सौम्यैश्च दृष्टे र्बलवान् सदैव॥" इति यवनेश्वरेणोक्तम्[5]। एवं सौम्यग्रहवीक्षणेन, सौम्यग्रहयोगेन च चन्द्रः शुभप्रद इति ज्ञायते, तथैव क्षीणचन्द्रः अशुभग्रहसम्बन्धयुक्तश्चन्द्रश्च अशुभप्रदो भवतीति विज्ञायते। ग्रहेषु सूर्यचन्द्रौ राजानौ भवतः[6]। स्त्रीपुंनपुंसकविभागे चन्द्रः स्त्रीग्रहो भवति[7]। अतः जननकाले जातकस्यायं स्वबलाधिक्यमनुसृत्य स्वसंज्ञानुरूपां प्रकृतिं ददाति। वेदेषु पुराणेषु चास्य द्विजातित्वं प्रसिद्धं, किन्त्वत्र ज्योतिषे शास्त्रेऽयं वैश्यवर्णाधिपत्यं वहति[8]। रविगुरुभिस्साकमयं

---

1. रक्तश्शवेतश्शुक्लतनुनिभः पाटलोधूम्रपाण्डु
   श्चित्रःकृष्णः कनकसदृशः पिङ्गलः कर्बुरश्चः।
   बभ्रुस्स्वच्छः प्रथमभवनाद्येषु वर्णाःप्लवत्वं
   स्वेशा शाख्यंदिनकरयुताद्भाद्द्वितीयं च वेशिः॥ बृ.जा.1.20
2. रक्तश्श्यामो भास्करो गौर इन्दुः ...। बृ.जा.2.4
3. वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासिता
   वह्न्यंब्वग्निजकेशवेन्द्रशचिकास्सूर्यादि नाथाः क्रमात्। .. बृ.जा.2.5
4. अष्टम्योरुभयोश्चमध्यमगतश्शुक्लान्ययोर्व्यत्यये
   पूर्णः क्षीण इति क्रमात्शशधरः पूर्णश्शुभो मंगळे॥ का.6
5. बृ.जा.व्या.पु.28
6. राजा रविश्शशधर श्च बुधः कुमार स्सेनापतिः क्षितिसुतस्सचिवौ सितेज्यौ। भूत्यस्तयोश्च रविजस्सबलानराणां कुर्वंति जन्मसमये निजमेव सत्वम्॥ सारा.4.7
7. बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रौ युवती नराश्च शेषाः॥ बृ.जा.2.6, पूर्वार्धः।
8. विप्रादित श्शुक्रगुरु कुजार्कौ शशीबुधश्चेत्यसितोऽत्यजानाम्॥ बृ.2.7, पूर्वार्धः।

सात्त्विकः ग्रहः कथ्यते[1]। यवनेश्वरस्त्वेनं राजसिकं कथयति[2]। किन्तु सत्वाचार्य[3]-वराहमिहिरयोरभिप्रायेणायं सात्त्विकग्रह एवेति निश्चीयते। कल्याणवर्मस्त्वेनं चन्द्रं रसेषु लवणस्य[4], वस्त्रेषु नूत्नवस्त्रस्य[5], कालेषु क्षणस्य[6], ऋतुषु प्रावृषः[7], विबुधमनुष्यादिषु मनुष्याणामधिपतित्वेन[8] निजगाद। अश्विन्यादिनक्षत्राणामेकैकस्य नक्षत्रस्य चत्वारः पादाः भवन्ति। तत्र अश्विनीनक्षत्रमारभ्य नवपादात्मकत्वेन मेषादिराशयो द्वादश सिद्ध्यन्ति। तेषु पुनर्वसूनक्षत्रचतुर्थपादं, पुष्यम्याश्रेषानक्षत्रयोः-रष्टपादान् समीकृत्य कर्कराशि स्सम्भवति। स च राशिः कुलीराकृतिः, अम्बुसंस्थः, कालपुरुषस्य वक्षदेशश्च विहितः[9]। अस्य राशेरधिपतिश्चन्द्रः इति ज्योतिश्शास्त्रस्य अभिप्रायश्च चन्द्रस्य जलमयत्वं सूचयति। चन्द्रसम्बन्धेनायं राशिः रात्रिबलः[10]

---

1. चन्द्रार्कजीवाज्ञसितौ कुजार्की यथाक्रमं सत्वरजस्तमांसि ॥ बृ.जा.2.7, उत्तरार्धः ।
2. सत्वाधिका भास्करभौमजीवा भृग्वात्मजो राजसिक श्शशी च।
   शनैश्चरस्तामसिको बुधस्तुसंयोगतोऽन्यान् लभते विशेषान् ॥ बृ.जा.व्या.पु.30
3. तामसिकौ कुजसौरी राजसिकौ भार्गवश्शशिसुतश्च।
   जीवशशिभास्करा स्सात्त्विकाग्रहप्रकृतयो नृणाम् ॥ सत्वाचार्यः ॥ बृ.जा.व्या.पु.30
4. कटुकलवणतिक्तमिश्रितमधुराम्लकषायरसविशेषानाम्।
   सुरगृहकाग्निविहारार्धशयनपांसूत्कराणां च ॥ सारा.4.15
5. वस्त्राणां स्थूलाहतशिखिजलहतमध्यदृढसुजीर्णानाम्।
   ताम्रमणिहेममिश्रितरूप्यकमुक्तायसां वापि ॥ सारा.4.16
6. अयनक्षणदिवसर्तुकमासतदर्थशरदां दिनेशाद्याः।
7. शिशिरादीनामीशा श्शनिसितभौमेन्दुबुधजीवाः ॥ सारा.4.17
8. सुरपूज्य श्शशिशुक्रौ दिनकरभौमौ बुधोऽर्कजो नाथाः।
   विबुधमनुष्यपितॄणां तिर्यङ्नरकाधिवासानाम् ॥ सारा.4.20
9. कर्कः कुलीराकृतिरम्बुसंस्थो वक्षःप्रदेशो विहितश्चधातुः।
   केदारवापीपुलिनानि तस्य देवाङ्गनारम्यविहारभूमिः ॥ यवनेश्वरः। बृ.जा.व्या.पु.6
10. गोऽजाश्विकर्किमिथुनास्समृगानिशाख्याः पृष्ठोदया विमिथुना कथिता स्म एव ॥
    शीर्षोदया दिनबलाश्च भवंति शेषा लग्नं समेत्युभयतः पृथुरोमयुग्मम् ॥ बृ.जा.1.10

सौम्यश्चेति[1] निर्णीतः। अपिचायं कर्कः चन्द्रस्य स्वस्थानं[2], वृषभराशिस्तु उच्चो भवति। तत्र चन्द्रस्य परमोच्चस्थानं तु तृतीयांशो भवति[3]। एवं वृषभराशेः सप्तमं स्थानं वृश्चिकराशिर्भवति। स हि चन्द्रस्य नीचस्थानम्। तत्तृतीयांशस्तु चन्द्रस्य परमनीचत्वेन कथ्यते[4]। एष च नियमः चन्द्रस्य स्वस्थानात् कर्कटराशेः वृषभवृश्चिकयोः स्थितिं सूचयति। इदं च चन्द्रभवनं पाटलवर्णमयम्[5]। स्नायुः, अस्थि, असृक् त्वक् शुक्ल वसा मज्जारूपसप्तधातुषु चन्द्रः असृक्सारो भवति[6]। कालपुरुषस्य मनोभूतश्चन्द्रमाः[7]। सर्वप्राणिनामपि मनःकल्पो जातस्तस्मादेव। ग्रहाणां सत्वादिगुणेन ग्रहबलमनुसृत्य जातस्य मनुजस्यापि सात्विकग्रहवशात् दया स्थिरत्वं सत्वार्जितं देवब्राह्मणभक्ति र्भवति। रजो बलेन पुरुषः काव्यकलावृतः स्त्रीसंसक्तचित्तः अतिशूरश्च भवति। तमसः आधिक्ये परेषां वञ्चयिता मूर्खः अलसः अतिनिद्रः क्रोधपरश्च जनो भवति। ज्योतिषे शास्त्रे चन्द्रस्यरूपादिकं कथ्यते एवम्। चन्द्रः तनुवृत्ततनुः बहुवातकफः प्राज्ञः मृदुवाक् शुभदृक् भवतीति वराहमिहिरः[8]। सौम्यः कान्तिविलोचनो मधुरवाक् गौरः कृतांगो युवा प्रांशुः सूक्ष्मनिकुंचितासितकचः प्राज्ञः मृदु स्सात्विकः चारुः वातकफात्मकः प्रियसखः रक्तैकसारः घृणी वृद्धस्त्रीषुरतः चलः अतिसुभगः शुभ्राम्बरः भवति चन्द्रमाः

---

1. क्रूरस्सौम्यः पुरुषवनिते ते चराग द्विदेहाः प्रागादीशाः क्रियवृषनृयुक्कर्कटास्सत्रिकोणाः।
बृ.जा.1.11
2. क्षितिजसितज्ञाचन्द्ररविसौम्यसितावनिजाः सुरगुरुमन्दसौरिगुरवश्चगृहांशकपाः।
अजमृगतौलिचन्द्रभवनादिनवांशविधिर्भवनसमांशकाधिपतयः स्वगृहात्क्रमशः॥
बृ.जा.1.6
3. अजवृषभमृगांगनाकुलीराझषवणिजौ च दिवाकरादितुङ्गाः।
4. दशशिखिमनुयुक्तधीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेस्त नीचाः॥ बृ.जा.1.13
5. रक्तश्श्वेतश्शुकतनुनिभःपाटलोधूम्रपाण्डु
श्चित्रःकृष्णःकनकसदृशःपिंगलःकर्बुरश्च।
बभ्रूस्स्वच्छःप्रथमभवनाद्येषुवर्णाः प्लवत्वं
स्वेशाशाख्यंदिनकरयुताद्भाद्द्वितीयं च वेशिम्॥ बृ.जा.1.20
6. स्नाय्वस्थ्यसृक्त्वगथशुक्लवसास्समज्ञामन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः। बृ.जा.2.11
7. कालात्मादिनकृन्मनस्तुहिनगुस्सत्वंकुजोज्ञोवचो..। बृ.जा.2.1.
8. तनुवृत्ततनु र्बहुवातकफः प्राज्ञश्च शशी मृदुवाक् शुभदृक्॥ बृ.जा.2.8

इति तु कल्याणवर्मा[1]। एतानि वचनानि भङ्ग्यन्तरेण चन्द्रबलयुक्तस्य रूपं निर्दिशन्ति। मेषादिराशिषु ग्रहाणां दृष्टिः स्थितराशेरारभ्य पाददृष्ट्या त्रिदशस्थानेषु, अर्थदृष्ट्या पञ्चमनवमस्थानेषु, पूर्णदृष्ट्या सप्तमस्थाने भवति[2]। एवं स्थिते चन्द्रः पूर्णदृष्टिग्रहत्वात् स्वस्थितेरयं सप्तमस्थानं वीक्षति[3]। चन्द्रस्य सूर्यबुधौ मित्रे, कुजगुरुशुक्रमन्दाः समाः ग्रहाः भवन्ति[4]। अस्य तु शत्रुग्रहो नास्ति[5]। किन्त्वयं सूर्यकुजबृहस्पतीनां मित्रं भवति। बुधशुक्रशनीनां तु शत्रुर्भवति। एषः नैसर्गिकः मित्रत्वशत्रुत्वभावः। स्थानदिग्चेष्टा कालनैसर्गिकरूपपञ्चबलेषु चन्द्रस्य उच्चत्रिकोणे वृषभे स्थानबलं, चतुर्थे स्थितस्सन् उत्तरदिशि दिग्बलं, उत्तरायणे मकरादिषट्के चेष्टाबलं, निशिकालबलं, शनिकुजबुधगुरुशुक्रचन्द्ररवीनां उत्तरोत्तरवृद्ध्या नैसर्गिकबलं च भवति[6]।

---

1. सौम्यः कान्तिविलोचनो मधुरवाग्गौरः कृताङ्गो युवा
   प्रांशुस्सूक्ष्मनिकुंचितासितकचः प्राज्ञो मृदुस्सात्विकः।
   चारुर्वातकफात्मकः प्रियसखो रक्तैकसारो घृणी।
   वृद्धस्त्रीषु रतश्चलोऽतिसुभगश्शुभ्राम्बरश्चन्द्रमाः ॥ सारा 4.22
2. त्रिदशत्रिकोणचतुरस्रसप्तमानवलोकयंति चरणाभिवृद्धितः।
   रविजामरेज्यरुधिराः परे च ये क्रमशो भवंति किल वीक्षणेऽधिकाः ॥ बृ.जा.2.13
3. पूर्णं पश्यन्ति रविज स्तृतीयदशमं त्रिकोणमपि जीवः।
   चतुरश्रं भूमिसुतो द्यूनं च सितार्कशशिबुधाः क्रमशः ॥ सारा.4.33
4. मित्राणि सूर्याद्गुरुभौम चन्द्रास्सूर्येन्दुपुत्रौ रविचन्द्रजीवाः।
   भानुश्च शुक्रश्शशिसूर्यभौमौ मन्देन्दुजौ शुक्रबुधौ क्रमेण ॥ सारा.4.28
5. शुक्रार्कजौ चन्द्रमसो न कश्चित्सौम्यश्शशीशुक्रबुधौरवीन्दू।
   सोमार्कशुक्राररविसुतस्त्वमित्रामित्रारिशेषो न सुहृन्न शत्रुः ॥ सारा.4.29
6. स्वोच्चसुहृत्स्वत्रिकोणनवांशैः स्थानबलं स्वगृहोपगते च।
   दिक्षु बुधांगिरसौ रविभौमौ सूर्यसुतस्सितशीतकरौ च ॥ बृ.जा.2.19
   उदगयने रविशीतमयूखौ वक्रसमगाः परिशेषाः।
   विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्याः ॥ बृ.जा.2.20
   निशिशशिकुजसौरास्सर्वदाज्ञोऽह्निचान्येबहुलसितगतास्युः क्रूरसौम्याः क्रमेण।
   द्व्ययनदिवसहोरामासपैः कालवीर्यं शकुबुगुशुचराद्यावृद्धितोवीर्यवन्तः ॥

चन्द्रस्य कारकत्वेन बुद्धिं पुष्पं सुगन्धं दुर्गगमनं व्याधिं द्विजवर्णं आलस्यकं श्लेष्मं अपस्मृतिं गुल्मं हृदयं स्त्रियं सौम्यं पापं आम्लकं निद्रां सौख्यं जलं स्वरूपं रजतं स्थूलेक्षुं शीतज्वरं यात्रां कूपं तटाकं मातरं समदृशं मध्याह्नं मुक्तां क्षयं धावल्यं कटिसूत्रं कास्यं लवणं ह्रस्वां मनश्शक्तिं वापीं वज्रं शरं मुहूर्तं मुखकान्तिं श्वेतवर्णं उदरं गौरीभक्तिं मधु प्रसादं परिहासं पुष्टिं गोधूमकां आमोदं मुखकान्तिं मनोजवं दधिप्रीतिं तपः यशः लावण्यं निशिवीर्यं पश्चिममुखे विशं क्षारकार्याप्तिं प्रत्यग्दिक्प्रियं मध्यलोकं नवरत्नानि मध्यं वयः जीवं भोजनं दूरदेशगमने लग्नं दोर्व्याधिं छत्राद्यंचितराजचिह्नं सुफलं सद्रक्तं धातुं मीनाद्याः जलजाः सरीसृपान् दुकूलं सद्विकासं स्फुरन्तं शुद्धं स्फटिकं मृदुलकं वस्त्रं वक्तव्यानीति कालिदासः[1]। मातुस्स्वस्तिं, मनःप्रसादं, उदधिस्नानं, सितं चामरं, छत्रं, सुव्यजनं, फलानि, मृदुलत्वं, पुष्पाणि, सस्यं, कृषिं, कीर्तिं, मौक्तिकं, कास्यं, रौप्यं, मधुरं, क्षीरजलगोयोषादिसंप्राप्तिं, सुखभोजनं, तनुसुखं, रूपं च चन्द्रतो वदेदिति मन्त्रेश्वरः[2]। मातृमनोवस्त्रजलकृषिस्त्रीवित्तगोक्षीर सस्य व्रीहि मणि शङ्ख जलज धवलातपत्र चामर शुक्ल पुष्टि विनय रसवर्ग फलवर्ग धात्री दीप्ति सन्तोषकारकश्चन्द्र इति जगन्नाथशर्मा[3]। मनो बुद्धिः प्रसादं च मातृचिन्ता च चन्द्रमाः इति मुहूर्तदीपिकावचनम्[4]।

---

1. बुद्धिः पुष्पसुगन्धदुर्गगमनव्याधिद्विजालस्यकश्लेष्मापस्मृतिगुल्मभावहृदयस्त्रीसौम्य-पापाम्लकाः। निद्रासौख्यजलस्वरूपरजतस्थूलेक्षुशीतज्वरायात्राकूपतटाकमातृसम दृङ्मध्याह्नमुक्ताक्षयाः॥ धावल्यं कटिसूत्रकांस्यलवणह्रस्वामनश्शक्तयो वापीवज्रशर-न्मुहूर्तमुखकान्तिश्वेतवर्णोदराः। गौरीभक्तिमधुप्रसादपरिहासाः पुष्टिगोधूमकाऽमोदाः कान्तिमुखेमनोजवदधिप्रीतीतपस्वीयशः॥ लावण्यंनिशिवीर्यपश्चिममुखेविट्क्षार-कार्याप्तयः प्रत्यग्दिक्प्रियमध्यलोकनवरत्नानीहमध्यंवयः। जीवोभोजनदूरदेशगमने-लग्नं च दोर्व्याधयश्छत्राद्यंचितराजचिह्नसुफलेसद्रक्तधातुस्तथा। मीनाद्याजलजा स्सरीसृपदुकूलेसद्विकासस्फुरच्छुद्धस्तत्स्फटिकस्ततोमृदुलकंवस्त्रंत्वमीस्युर्विधोः॥
उ.काला.113-116.
2. मातुस्स्वस्तिमनः प्रसादमुदधिस्नानंसितंचामरं छत्रंसुव्यजनंफलानिमृदुलंपुष्पाणि-सस्यकृषिम्। कीर्तिंमौक्तिककांस्यरौप्यमधुरक्षीरादिवस्त्राम्बुगोयोषाप्तिंसुखभोजनं-नुसुखंरूपंवदेच्चन्द्रतः॥
फलदी.2-2.
3. जा.क.4, पु.153
4. मुहू.दी.1, पु.13

इन्दोस्संचारस्तु दुर्गास्थानजलौषधिमधुस्थानं वायो र्दिक् चेति ज्ञायते[1]। सम्प्रीतिकराः विषयास्तु शास्त्राङ्गनारजककर्षकतोयगाः शशः हरिणः बकः चकोरश्च[2]। मनुजसम्बन्धे नवग्रहाः भवन्त्येवं - पिता रविः, माता शशाङ्कः, भ्राता बुधः, स्त्री भृगुनन्दनः, सुतो भौमः, सुतमित्रात्मकः बृहस्पतिः, शतृरूपः शनिः, मित्ररूपश्च रविः ।[3]

## मेषादिद्वादशराशिभागेषु चन्द्रस्थितिविचारः

चन्द्रस्य नैसर्गिकस्वरूपस्वभावादिकं विचारितम्। सम्प्रति मेषादिराशिभागेषु चन्द्रस्थिति प्रयोजनं विचारयामः।

| चन्द्रस्थितराशिः | : | फलितम् |
|---|---|---|
| ***मेषे*** | : | अत्र जातो जन स्ताम्रवत् रक्तनेत्रः वृत्ताकारनेत्रवांश्च भवति। उष्णभोजी शाकभक्षकः लध्वाहारः क्षिप्रप्रसादः अटनशीलः कामी दुर्बलजानुः अस्थिरधनः शूरः मानी अङ्गनावल्लभः सेवाकुशलः कुत्सितनखी व्रणाङ्कितशिराः सहोत्थाग्रजः हस्ते शक्तिरेखाङ्कितः चपलचित्तः जलभीरुश्च भवति[4]। |

---

1. दुर्गास्थानजलौषधिमधुस्त्रानं विधोर्वायुदिक्॥ फलदी.2-15.
2. शास्त्राङ्गनारजककर्षकतोयगास्स्युरिन्दोशशश्चहरिणश्चबक श्चकोरः॥ फलदी.2-17
3. पितारवि र्मातृखगश्शशाङ्कः भ्राताबुध स्स्त्रीभृगुनन्दनश्च।
   भौमस्सुतो देवगुरुस्तुतश्चमित्रं रविस्तत्तनयश्च शतृः।
   शनिभौमौ पितुःपक्षे मातु र्जीवज्ञभार्गवाः
   राजानौ रविसोमौ तु युवराजो बुधः प्रोक्तो नायको भूमिनन्दनः।
   सचिवौ भृगुमन्त्रिणौ प्रेष्य श्शनि र्हिंसकश्च राहुरुक्तो मनीषिभिः।
   भृ.सू.4,5 श्लोकौ.
4. वृत्तताम्रदृगुष्णशाकलघुभुक् क्षिप्रप्रसादोऽटनः
   कामीदुर्बलजानुरस्थिरधनशूरोऽङ्गनावल्लभः।
   सेवाज्ञः कुनखी व्रणाङ्कितशिरा मानी सहोत्थाग्रज
   श्शक्त्या पाणितलेङ्कितोऽतिचपलस्तोये च भीरुः क्रिये॥ बृ.जा.16.1

| चन्द्रस्थितराशिः | : | फलितम् |
|---|---|---|
| ***वृषभे*** | : | कान्तः विलासगमनः पृथूरुवदनः पृष्ठास्यपार्श्वाङ्कितः त्यागी क्लेशसहः प्रभुः ककुदवान् कन्याप्रजः श्लेष्मलः पूर्वैर्बन्धु-धनात्मजै र्विरहितः सौभाग्ययुक्तः क्षमी दीप्ताग्निः प्रमदाप्रियः स्थिरसुहृद् मध्यान्त्यसौख्यो भवति[1]। |
| ***मिथुने*** | : | कुञ्चितमूर्धजः पटुमतिः हास्येङ्गितद्यूतविद् दूतः सुन्दराङ्गः प्रियभाषी अमितभोजी गानलोलः नृत्यविद् उन्नतनासिकः नपुंसकसम्भोगी भवति[2]। |
| ***कर्कटे*** | : | वक्रदूतगमनः समुन्नतकटिः स्त्रीनिर्जितः सत्सुहृत् दैवज्ञः प्रचुरालयः चन्द्रवत् वृद्धिक्षयसम्पद्युक्तः ह्रस्वः पीनगलः साम्नावशंगतः सुहृद्वत्सलः तोयोद्यानरतो भवति[3]। |

---

1. कान्तः खेलगतिः पृथूरुवदनः पृष्ठास्यपार्श्वेऽङ्कित
स्त्यागीक्लेशसहः प्रभुः ककुदवान् कन्याप्रजः श्लेष्मलः।
पूर्वैर्बन्धुधनात्मजैर्विरहितस्सौभाग्ययुक्तःक्षमी
दीप्ताग्निः प्रमदाप्रियः स्थिरसुहृन्मध्यांत्यसौख्यो गवि। बृ.जा.16.2

2. स्त्रीलोलस्सुरतोपचारकुशलस्ताम्रक्षणश्शास्त्रविद्
दूतःकुञ्चितमूर्धजः पटुमतिर्हास्येङ्गितद्यूतविद्।
चार्वंगः प्रियवाक्प्रभाक्षणरुचिर्गीतप्रियोनृत्यविद्
क्लीबैर्यातिरतिं समुन्नतनसश्चन्द्रे तृतीयर्क्षगे॥ बृ.जा.16.3

3. आवक्रद्रुतगस्समुन्नतकटिः स्त्रीनिर्जितस्सत्सुहृ
द्दैवज्ञः प्रचुरालयः क्षयधनैस्संयुज्यते चन्द्रवत्।
ह्रस्वःपीनगलस्समेति च वशं साम्ना सुहृद्वत्सल
स्तोयोद्यानरतस्स्ववेश्म-सहितेजातश्शशाङ्के नरः॥ बृ.जा.16.4

| चन्द्रस्थितराशिः | : | फलितम् |
|---|---|---|
| *सिंहे* | : | तीक्ष्णः स्थूलहनुः विशालवदनः पिङ्गेक्षणः अल्पात्मजः स्त्रीद्वेषी मांसकाननपर्वतप्रियः अकार्ये अकाण्डे चिरकोपी क्षुत्तृष्णोदरदन्तमानसरूजासंपीडितः त्यागवान् विक्रान्तः स्थिरधीः मातुर्विधेयः सुगर्वितचित्तः विद्यते[1]। |
| *कन्यायां* | : | व्रीडामन्दरचारुवीक्षणगतिः स्त्रस्तांसबाहुः सुखी मृदुशरीरः सत्यभाषी कलासुनिपुणः शास्त्रार्थवित् धार्मिकः मेधावी सुरतप्रियः परगृहैर्धनैश्च संयुक्तः परदेशसंचारप्रियः प्रियभाषी कन्याप्रजः अल्पात्मजश्च भवति[2]। |
| *तुलायां* | : | देवब्राह्मणसाधुपूजनरतः प्राज्ञः शुचिः स्त्रीजितः प्रांशुः उन्नतनासिकः कृशचलद्गात्रः परिभ्रमणशीलः अर्थान्वितः हीनाङ्गः क्रयविक्रयकुशलः सभ्यपर्यायदैववाचकनामान्तरः रोगयुक्तः बन्धूनामुपकारकृत् तैः तिरस्कृतो त्यक्तश्च भवति[3]। |

---

1. तीक्ष्णस्स्थूलहनुर्विशालवदनः पिंगेक्षणोऽल्पात्मजः
   स्त्रीद्वेषीप्रियमांसकानननगः कुप्यत्यकार्येचिरम्।
   क्षुत्तृष्णोदरदन्तमानसरुजासंपीडितस्त्यागवान्
   विक्रांतस्स्थिरधी स्सुगर्वितमनामातुर्विधेयोऽर्कभे॥ बृ.जा.16.5
2. व्रीडामन्दरचारुवीक्षणगतिः स्त्रस्तांसबाहुस्सुखी
   श्लक्ष्णस्सत्यरतः कलासुनिपुणश्शास्त्रार्थविद्धार्मिकः।
   मेधावीसुरतप्रियः परगृहैर्वित्तैश्चसंयुज्यते
   कन्यायांपरदेशगः प्रियवचाः कन्याप्रजोऽल्पात्मजः॥ बृ.जा.16.6
3. देवब्राह्मणसाधुपूजनरतः प्राज्ञश्शुचिस्स्त्रीजितः
   प्रांशुश्चोन्नतनासिकः कृशचलद्गात्रोऽटनोऽर्थान्वितः।
   हीनांगः क्रयविक्रयेषुकुशलो देवद्विनामासरुक्
   बंधूनामुपकारकृद्विरूषितस्त्यक्तस्तु तैस्ससमे॥ बृ.जा.16.7

| चन्द्रस्थितराशिः | : | फलितम् |
|---|---|---|
| ***वृश्चिके*** | : | पृथुलनयनवक्षाः वृत्तजंघोरुजानुः जनकगुरुवियुक्तः शैशवे व्याधितः नरपतिकुलपूज्यः पिङ्गलाक्षः क्रूरचेष्टः झषकुलिश-खगाङ्कः छन्नपापः भवति[1]। |
| ***धनुषि*** | : | दीर्घास्यः दीर्घग्रीवः पितृधनः त्यागी कविः वीर्यवान् वक्ता स्थूलरदश्रवोऽधरनासः बहुकार्योऽधमशीलः शिल्पविद् कुब्जांसः कुनखी समांसलभुजः प्रागल्भ्यवान् धर्मविद् बन्धुद्विट् सामैकसाध्यः बलादवशो भवति[2]। |
| ***मकरे*** | : | स्वदारतनयान् नित्यं लालयति। अपि च धर्मध्वजः अधःकृशः सुलोचनः क्षामकटिः गृहीतवचनः सौभाग्ययुक्तः अलसः शीतालुः मनुजः अटनः सत्त्वाधिकः उदार चेष्टावान् काव्यकृत् लुब्धः अगम्यगम्यः जराङ्गनासु निरतः त्यक्तलज्जः निर्दयो भवति[3]। |

---

1. पृथुलनयनवक्षा वृत्तजङ्घोरुजानु
   र्जनकगुरुवियुक्तश्शैशवे व्याधितश्च।
   नरपतिकुलपूज्यः पिङ्गलः क्रूरचेष्टो
   झषकुलिशखगांकश्छन्नपापोऽलिजातः ॥ बृ.जा.16.8.
2. व्यादीर्घास्यशिरोधरः पितृधनस्त्यागीकविर्वीर्यवान्
   वक्तास्थूलरदश्रवोऽधरनसः कर्मोद्यतश्शिल्पवित्।
   कुब्जांसः कुनखीसमांसलभुजः प्रागल्भ्यवान्धर्मवित्
   बन्धुद्विट् बलात्समेति च वशं सामैकसाध्योऽश्वजः ॥ बृ.जा.16.9.
3. नित्यंलालयतिस्वदारतनयान्धर्मध्वजोऽधः कृशः
   स्वक्षः क्षामकटिर्गृहीतवचनस्सौ–भाग्ययुक्तोऽलसः।
   शीतालुर्मनुजोऽटनश्चमकरेसत्वाधिकःकाव्यकृत्
   लुब्धोऽगम्यजराङ्गनासुनिरतस्संत्यक्तलज्जोऽघृणः ॥ बृ.जा.16.10.

| चन्द्रस्थितराशिः | : | फलितम् |
| --- | --- | --- |
| *कुम्भे* | : | करभगलः सिरालुखरलोमशदीर्घतनुः पृथुचरणोरुपृष्ठ जघनास्यकटिः बधिरः परवनितार्थपापनिरतः क्षयवृद्धियुक्तः धनवान् कुसुमसुगन्धानुलेपनसुहृत्सुप्रियः मार्गक्लेशसहः भवति[1]। |
| *मीने* | : | मौक्तिकादिजलसम्पदां क्रयविक्रयप्राप्तधनः परधनभोक्ता भार्यायां वस्त्रेषु चानुरक्तः समरुचिरशरीरः तुङ्गनासः बृहत् शिरस्कः शत्रुजेता स्त्रीजितः चारुदृष्टिः द्युतिनिधिधनभोगी पण्डितश्च भवति[2]। |

एवं चन्द्रः जननकाले पूर्वोक्तराशिषु स्थानबलं तदधिष्ठितराश्यधिपतिबलमनुसृत्य सम्पूर्णतयोक्तफलानि प्रयच्छति[3]।

## द्वादशराशिषु स्थिते चन्द्रे ग्रहदृष्टिविचारः

### *मेषगते चन्द्रे*

| ग्रहदृष्टिः | | फलितम् | बृ.जा.विशेषः नवांशे च फलम् |
| --- | --- | --- | --- |
| *रविना* | : | उग्रस्वभावः नतेषु मृदुः, धीरः धराधीश्वरगौरवाढ्यः संगरभीरुश्च भवति[4]। | दरिद्रो भवति। आरक्षको भवति। |

---

1. करभगलस्सिरालुखरलोमशदीर्घतनुः पृथुचरणोरुस्पृष्ठजघनास्यकटिर्बधिरः।
   परवनितार्धपापनिरतः क्षयवृद्धियुतः प्रियकुसुमानुलेपनसुहृद्धटजोऽध्वसहः॥
2. जलपरधनभोक्ता दारवासोऽनुरक्तः समरुचिरशरीरस्तुङ्गनासो बृहच्छिरस्कः।
   अभिभवति सपत्नान् स्त्रीजितश्चारुदृष्टिर्द्युतिनिधिधनभोगी पण्डितश्चांत्यराशौ॥
3. बलवति राशौ तदधिपतौ च स्वबलयुतस्स्याद्यदि तुहिनांशुः।
   कथितफलानामविकलदाता शशिवदतोऽन्येप्यनुपरिचिन्त्याः॥ बृ.जा.16.11-13
4. उग्रस्वभावोऽपिमृदुर्नतानां धीरो धराधीश्वरगौरवाढ्यः।
   नरो भवेत्संगरभीरुरेव मेषे शशाङ्के नलिनीशदृष्टे॥1॥ जा.भ.पु.50

| ग्रहदृष्टिः | | फलितम् | बृ.जा.विशेषः नवांशे च फलम्[6] |
|---|---|---|---|
| ***कुजेन*** | : | विषाग्निवातास्त्रभययुक्तः मूत्रकृच्छरोगयुक्तः महदाश्रयवान् दन्ताक्षिपीडायुक्तः भवति[1]। | भूपः भवति। प्राणिहिंसकः भवति। |
| ***बुधेन*** | : | अमलकीर्तिविलसितः सर्वविद्याप्रवीणः द्रविण-गुणगुणाढ्यः सज्जनसम्मतः श्रेष्ठसम्पत्प्रतिष्ठः[2] | पण्डितो भवति। बाहुयुद्धकुशलः। |
| ***गुरुणा*** | : | नृपप्रधानः पृतनापतिः कुलानुमानाद्बहुसंपदाढ्यः[3] | नृपोपमः भूपः |
| ***शुक्रेण*** | : | योषाविभूषाधनसूनुसौख्यः भोक्ता सुवक्ता गुणज्ञः परिभुक्तरोषः[4] | गुणवान् धनवान् |
| ***शनिना*** | : | रोगयुक्तः हतचित्तसमुन्नतिः विगतवित्तः विगतापत्यः खलः असत्यभाषी दुष्टपुत्रः[5] | चोरः कलहकृत् |

---

1. विषाग्निवातास्त्रभयं कदाचित्स्यान्मूत्रकृच्छ्रं महदाश्रयश्च।
   दन्ताक्षिपीडानिबिडा जडांशौ मेषस्थिते भूमिसुतेन दृष्टे ॥2॥
2. विलसदमलकीर्तिस्सर्वविद्याप्रवीणो द्रविणगुणगणाढ्यस्सम्मतस्सज्जनानाम्।
   भवति ननु मनुष्यो मेषराशौ शशाङ्के शशधरसुतदृष्टे श्रेष्ठसंपत्प्रतिष्ठः ॥3॥
3. नृपप्रधानः पृतनापति र्वा कुलानुमानाद्बहुसंपदाढ्यः।
   भवेन्नरः कैरविणीवनेशे मेषस्थिते गीष्पतिना प्रदृष्टे ॥4॥
4. योषाविभूषाधनसूनुसौख्यो भोक्ता सुवक्ता परिभुक्तरोषः।
   स्यात्पूरुषो मेषगतेऽमृतांशौ निरीक्ष्यमाणे भृगुणा गुणज्ञः ॥5॥
5. गदयुतं हतचित्तसमुन्नतिं विगतवित्तमपत्यमसत्सुतम्।
   क्रियगतोऽर्कसुतेन निरीक्षितो हिमकरो हि नरं कुरुते खलम् ॥6॥ जा.भ.पु.50
6. बृ.जा.17.1.

## वृषभगते चन्द्रे

| ग्रहदृष्टिः | | फलितम् | बृ.जा.विशेषः नवांशे च फलम्[7] |
|---|---|---|---|
| ***रविना*** | : | कृषीवलः विधिज्ञः मान्त्रिकः वाहनधान्ययुक्तः कार्यचतुरः[1]। | प्रेष्यः मूर्खः |
| ***कुजेन*** | : | कामातुरः स्त्रीमानसचोरः साधुमित्रः सुतरां पवित्रः प्रसन्नमूर्तिः[2]। | दरिद्रः परदारासक्तः |
| ***बुधेन*** | : | प्राज्ञः विधिज्ञः कृपयासमेतः हर्षान्वितः भूतहिते रतः गुणाभिरामः[3] | चोरः सुकविः |
| ***गुरुणा*** | : | जायासुतानन्दयुतः सुकीर्तिः धर्मक्रियानिरतः पितृभक्तियुक्तः[4] | नृमान्यः सत्काव्यकृत् |
| ***शुक्रेण*** | : | भूषणाम्बरगृहाशनशय्यागन्धमाल्यपशुसुखान्वितः[5] | भूपः सुखासक्तः |
| ***शनिना*** | : | पूर्वार्धे जननीघातकः परार्थे तातघातकः[6] | धनिकः परदाराराः |

1. कृषिक्रियायां निरतो विधिज्ञः स्यान्मान्त्रिको वाहनधान्ययुक्तः।
   नरो नितान्तं चतुरः स्वकार्ये दृष्टे दिनेशेन वृषे शशांके ॥7 ॥
2. कामातुरश्चित्तहरोऽङ्गनानां स्यात्साधुमित्रः सुतरां पवित्रः।
   प्रसन्नमूर्तिश्च नरो वृषस्थे शीतद्युतौ भूमिसुतेन दृष्टे ॥8 ॥
3. प्राज्ञं विधिज्ञं कृपयासमेतं हर्षान्वितं भूतहिते रतं च।
   गुणाभिरामं मनुजं प्रकुर्याद्वृषे शशाङ्कः शशिजेन दृष्टे ॥9 ॥
4. जायात्मजानन्दयुतं सुकीर्तिं धर्मक्रियायां निरतं च पित्रोः।
   भक्तो प्रसक्तं मनुजं प्रकुर्याद्वृषस्थितेन्दु र्गुरुणा प्रदृष्टः ॥10 ॥
5. भूषणाम्बरगृहासनशय्या गन्धमाल्यचतुरङ्घ्रिसुखानि।
   आतनोति सततं मनुजानां चन्द्रमा वृषगतो भृगुदृष्टः ॥11 ॥
6. कलानिधिः पूर्वदले वृषस्य शनीक्षितश्चेन्निधनं जनन्याः।
   करोति सत्यं मुनिभिर्यदुक्तं तथा परार्थे खलु तातघातकम् ॥12 ॥ जा.भ.पु.50,51
7. चन्द्रे भूपबुधौ नृपोपमगुणिस्तेनाधनाश्चाजगे
   निस्स्वस्तेन नृमान्यभूपधनिनःप्रेष्यःकुजाद्यैर्गवि ॥ बृजा.17.1
   मूर्खोऽन्यदारनिरतस्सुकवि र्नवांशे सत्काव्यकृत्सुखपरोऽन्यकलत्रगश्च॥ बृ.जा.17.5

## मिथुनगते चन्द्रे

| ग्रहदृष्टिः | फलितम् | बृ.जा.विशेषः[7] नवांशे च फलम्[8] |
|---|---|---|
| ***रविना*** : | प्राज्ञः सुशीलः द्रविणहीनः क्लेशाभिभूतः सर्वोत्सवदः[1]। | अधनः युद्धविशारदः |
| ***कुजेन*** : | उदारदारः चतुरः शूरः प्राज्ञः सुज्ञः धनवाहनाद्यैर्युक्तः[2]। | अयोव्यवहारी चोरः |
| ***बुधेन*** : | धीरः सदाचारः उदारसारः नरेन्द्रप्रधानः [3] | पार्थिवः कवीन्द्रः |
| ***गुरुणा*** : | विद्याविवेकान्वितः ख्यातः अर्धवान् विनीतः पुण्यवान् (सुपुण्यः)[4] | पण्डितः मन्त्री |
| ***शुक्रेण*** : | वस्त्रप्रसूनान्नवराङ्गनाभ्यो विलसितः, सद्वाहनेभ्यः विभूषणेभ्यः सौख्यवान् [5] | भयरहितः गेयज्ञः |
| ***शनिना*** : | धनाङ्गनावाहननन्दनाद्यैः विश्लेषितः विगर्हितश्च भवति [6] | तन्तुवायः शिल्पनिपुणः |

---

1. प्राज्ञं सुशीलं द्रविणेन हीनं क्लेशाभिभूतं सततं करोति।
   नरं च सर्वोत्सवदं प्रसूतौ द्वन्द्वे स्थितो भानुमता च दृष्टः ॥13॥
2. उदारदारं चतुरं च शूरं प्राज्ञं च सुज्ञं धनवाहनाद्यैः।
   युक्तं प्रकुर्यान्मिथुनस्थितेन्दु र्निरीक्षितो जन्मनि भूसुतेन॥14॥
3. धीरं सदाचारमुदारसारं नरं नरेन्द्राप्तधनं करोति।
   निशाधिनाथौ मिथुनाधिसंस्थो निशीथिनीनाथसुतेन दृष्टः ॥15॥
4. विद्याविवेकान्वितमर्थयुक्तं ख्यातं विनीतं सुतरां सुपुण्यम्।
   करोति मर्त्यं मिथुनेऽधिसंस्थो निशीथिनीशो गुरुणा प्रदृष्टः ॥16॥
5. वस्त्रप्रसूनान्नवराङ्गनाभ्यः सद्वाहनेभ्यश्च विभूषणेभ्यः।
   करोति सौख्यं हि सुधामयूखो द्वन्द्वस्थितो जन्मनि शुक्रदृष्टः ॥17॥
6. धनाङ्गनावाहननन्दनाद्यैः विश्लेषमायाति विगर्हितत्वम्।
   नरो हि नीहारकरे नृयुग्मे निरीक्षिते भानुसुतेन सूतौ॥18॥ जा.भ.पु.51
7. नृस्थेऽयोव्यवहारिपार्थिवबुधाभीस्तन्तुवायाधनाः॥ बृ.जा.17.1
8. बौधे हि रङ्गचर चोरकवीन्द्रमन्त्रिगेयज्ञशिल्पनिपुण श्शशिनि स्थितेंऽशे॥ बृ.जा.17.6

## कुलीरसंस्थे चन्द्रे

| ग्रहदृष्टिः | | फलितम् | बृ.जा.विशेषः[7] नवांशे च फलम्[8] |
|---|---|---|---|
| *रविना* | : | निरर्थकक्लेशकरः विकीर्णैः नृपाश्रयः दुर्गकृताधिकारः [1]। | नेत्रव्याधिपीडितः अल्पगात्रः |
| *कुजेन* | : | दक्षः शूरः जननीविरुद्धः क्षीणाङ्गयष्टिः[2] | योद्धा धनलुब्धः |
| *बुधेन* | : | दारार्धपुत्रोन्नतिनीतिसौख्यवान् सेनापतिर्वा सचिवो वा [3]। | कविः तपस्वी |
| *गुरुणा* | : | नृपाधिकारः गुणी नयज्ञः सुखान्वितः चारुपराक्रमः [4] | पण्डितः तपस्वी |
| *शुक्रेण* | : | नितान्तं सद्रत्नचामीकररत्नभूषावाराङ्गना-सौख्यवान् भवति। [5] | राजा स्त्रीपोष्यः |
| *शनिना* | : | सत्यहीनः जननीविरुद्धः अटनशीलः पापरतः गतार्थः भवति। [6] | अयोजीवी कार्यासक्तः |

---

1. निरर्थकक्लेशकरं विकीर्णे नृपाश्रयं दुर्गकृताधिकारम्।
   कुर्यात्कलावान् परिसूति काले कुलीरसंस्थो नलिनीशदृष्टः ॥19॥
2. दक्षं च शूरं जननीविरुद्धं क्षीणाङ्गयष्टिं मनुजं करोति।
   कुलीरसंस्थः परिसूतिकाले दृष्टः कलावान् किल मङ्गलेन ॥20॥
3. दारार्धपुत्रोन्नतिनीतिसौख्यं सेनापतिं वा सचिवं मनुष्यम्।
   कर्काधिरूढः कुरुते हिमांशु र्हिमांशुपुत्रेण निरीक्ष्यमाणः ॥21॥
4. नृपाधिकारं गुणिनं नयज्ञं सुखान्वितं चारुपराक्रमं च।
   करोति जातं यदि कर्कवर्ती पीयूषमूर्ति र्गुरुणेक्ष्यमाणः ॥22॥
5. सद्रत्नचामीकर रत्नभूषा वाराङ्गनासौख्ययुतं नितान्तम्।
   नरं निजागारगतं करोति सुधाकरः शुक्रनिरीक्ष्यमाणः ॥23॥
6. सत्येनहीनं जननीविरुद्धं सदाटनं पापरतं गतार्धम्।
   करोति जातं निजगेहगामी चे द्यामिनीशो रविजेन दृष्टः ॥24॥ जा.भ.पु.51, 52
7. स्वर्क्षे योद्धृ कवि ज्ञ भूमिपतयोऽयोजीविदृग्रोगिणौ। बृ.जा.17.1
8. स्त्रांशेऽल्पगात्रधनलुब्ध तपस्विमुख्य स्त्रीपोष्य कृत्यनिरताश्च निरीक्ष्यमाणे॥ बृ.जा.17.6

**सिंहगते चन्द्रे**

| ग्रहदृष्टिः | | फलितम् | बृ.जा.विशेषः[7] नवांशे च फलम्[8] |
|---|---|---|---|
| ***रविना*** | : | गुणवान् सततं नृपतिप्रियः परपदः विलङ्घितसन्ततिः[1]। | नृपः क्रोधयुक्तः |
| ***कुजेन*** | : | नरपतेः सचिवः धनवाहनात्मजकलत्रसुखयुक्तः[2]। | भूपतिः राजप्रियः |
| ***बुधेन*** | : | धनाङ्गनावाहन नन्दनेभ्यः सुखप्रपूर्णः [3] | ज्योतिषशास्त्रज्ञः निधीशः |
| ***गुरुणा*** | : | बहुश्रुतः विस्मृतसाधुवृत्तः भूमिपतेः प्रधानः[4] | आढ्यः अप्रतिहताज्ञः |
| ***शुक्रेण*** | : | स्त्रीवैभवोपेतः गुणी गुणज्ञः प्राज्ञः विधिज्ञः [5] | नरपतिः सुतहीनः |
| ***शनिना*** | : | कान्तावियुक्तः कृषिकर्मदक्षः दुर्गाधिकारी अल्पधनी भवति। [6] | नापितः अतिहिंस्त्रकर्मा |

1. गुणयुतं सततं नृपतिप्रियं परपदं च विलङ्घितसन्ततिम्।
   हरिगतो वितनोति निशाकरः खरकरप्रविलोकनसंयुतः ॥25॥
2. नरपतेः सचिवो धनवाहनात्मजकलत्र सुखो हि भवेन्नरः ॥
   हरिणलक्ष्मणि केसरिणि स्थिते क्षितिसुतेन तनु प्रविलोकिते ॥26॥
3. धनाङ्गनावाहन नन्दनेभ्यः सुखप्रपूरं हि नरं करोति।
   द्विजाधिराजो मृगराजसंस्थो द्विजाधिराजात्मज संप्रदृष्टः ॥27॥
4. बहुश्रुतं विस्मृतसाधुवृत्तं कुर्यान्नरं भूमिपतेः प्रधानम्।
   चन्द्रो मृगेन्द्रोपगतोऽमरेन्द्रोपाध्यायदृष्टः परिसूतिकाले ॥28॥
5. स्त्रीवैभवं वै गुणिनं गुणज्ञं प्राज्ञं विधिज्ञं कुरुते मनुष्यम्।
   पीयूषरश्मिर्जनने यदि स्यात् पञ्चाननस्थो भृगुसूनुदृष्टः ॥29॥
6. कान्तावियुक्तः कृषिकर्मदक्षो दुर्गाधिकारो हि नरोऽल्पकार्धः ॥
   सिंहोपयाते सति शीतभानौ निरीक्षिते सूर्यसुतेन सूतौ ॥30॥ जा.भ.पु.52.
7. ज्योतिर्ज्ञाढ्यनरेन्द्रनापितनृपक्ष्मेशा बुधाद्यै र्हरौ ॥ बृ.जा.17.2
8. संक्रोधो नरपतिसम्मतो निधीशस्सिंहांशे प्रभु रसुतोऽतिहिंस्त्रकर्मा। बृ.जा.17.7.

## कन्यागते चन्द्रे

| ग्रहदृष्टिः | फलितम् | बृ.जा.विशेषः[7] नवांशे च फलम्[8] |
|---|---|---|
| *रविना* : | भूमीशः कोशाधिकृत् सुवृत्तान्तः भार्यावियुक्तः गुरुभक्तियुक्तः भवति [1]। | स्त्र्याश्रयः मुष्टियुद्धविशारदः |
| *कुजेन* : | हिंसापरः शूरतरः सकोपः नृपाश्रितः रणादौ लब्धजयः [2] | स्त्रीजनाश्रितः चोरः |
| *बुधेन* : | ज्योतिर्विद्याकाव्यसङ्गीतविद्यावान् प्राज्ञः विनीतः युद्धेलब्धकीर्तिः मानवान् [3]। | राजा कवीन्द्रः |
| *गुरुणा* : | भूरिबन्धुयुक्तः अवनीपतिप्रियः चारुवृत्त-शुभकीर्तिसंयुतः [4] | सेनाधिपतिः मन्त्री |
| *शुक्रेण* : | विलासिनीकेलिविलासचित्तः कान्ताश्रितः भूपतिलब्धवित्तः। [5] | सकलकार्यचणः गेयज्ञः |
| *शनिना* : | निष्किञ्चनः हीनमतिः स्त्रीसंश्रयादात्तधनः मातृहीनः। [6] | स्त्र्याश्रितजीवी शिल्पनिपुणः |

1. भूमीशकोशाधिकृतं सुवृत्तं भार्याविमुक्तं गुरुभक्तियुक्तम्।
   जातं च कन्याश्रितशीतरश्मि स्तनोतिजन्तुं खररश्मिदृष्टः ॥31॥
2. हिंसापरंशूरतरं सकोपं नृपाश्रितं लब्धजयं रणादौ।
   कुमारिकासंश्रितशीतभानु भूसूनु दृष्टो मनुजं करोति ॥32॥
3. ज्योतिर्विद्याकाव्यसङ्गीतविद्यं प्राज्ञं युद्धे लब्धकीर्तिं विनीतम्।
   कुर्यान्नूनं मानवं मानवन्तं कन्यास्थेन्दुश्चेन्दुजेन प्रदृष्टः ॥33॥
4. भूरिबन्धुमवनीपतिप्रियं चारुवृत्तशुभकीर्तिसंयुतम्
   मानवं हि कुरुतेऽङ्गनाश्रितश्चन्द्रमाः सुरपुरोहितेक्षितः ॥34॥
5. विलासिनीकेलिविलासचित्तं कान्ताश्रितं भूपतिलब्धवित्तम्।
   कुर्यान्नरं शीतकरः कुमार्यां संस्थ स्सितेन प्रविलोकितश्च ॥35॥
6. निष्किञ्चनं हीनमतिं नितान्तं स्त्रीसंश्रयादात्तधनं जनन्या।
   हीनं प्रसूयात् किल कन्यकायां गतो मृगाङ्कोऽर्कसुतेन दृष्टः ॥36॥ जा.भ.पु.52,53.
7. तद्वद्रूपचमूपनैपुणयुताष्षष्ठेऽशुभैः स्त्र्याश्रयः। बृ.जा.17.2
8. बौधे हि रङ्गचरचोरकवीन्द्रमन्त्रि गेयज्ञशिल्पनिपुणाश्शशिनि स्थितेंऽशे॥ बृ.जा.17.6

## तुलासंस्थे चन्द्रे

| ग्रहदृष्टिः | | फलितम् | बृ.जा.विशेषः[7] नवांशे च फलम्[8] |
|---|---|---|---|
| ***रविना*** | : | सदाटनं सौख्यधनैर्विहीनं सदांगनासूनुजनैर्विहीनं मित्रैरमित्रैश्चातितप्तं जनं करोति[1]। | नैकृतिम् मूर्खम् |
| ***कुजेन*** | : | बुद्ध्या परार्थकरणैकचित्तं मायासमेतं विषयाभितप्तं जनं करोति [2]। | नैकृतिम् परदारानिरतम् |
| ***बुधेन*** | : | कलाविधिज्ञानसमेतं धनधान्यसम्पत्तियुक्तं वक्तृविद्याविभवोपेतमुपगमयति जनम्। [3] | नरेन्द्रम् सुकविम् |
| ***गुरुणा*** | : | वस्त्रविभूषणानां क्रयविक्रयविधाने विचक्षणं जनं करोति। [4] | सुवर्णकारम् सत्काव्यकर्तारम् |
| ***शुक्रेण*** | : | प्राज्ञं अनेकोद्यमसाधितार्थं पार्थिवानां कृपया समेतं हृष्टं सुन्दरं जनं करोति। [5] | वणिजम् सुखपरम् |
| ***शनिना*** | : | धनधान्यवरवाहनै र्युक्तं विषयोपभोगेन हीनं च जनं करोति। [6] | नैकृतिम् परस्त्रीरतम् |

---

1. सदाटनस्सौख्यधनैर्विहीनः सदाङ्गनासूनुजनैर्विहीनः।
   मित्रैरमित्रैश्च नरोऽतितप्तस्तुलाधरे शीतकरेऽर्कदृष्टे ॥37॥
2. बुद्ध्या परार्थाकरणैकचित्तं मायासमेतं विषयाभितप्तम्।
   करोति जातं हि तुलागतेन्दु र्निरीक्ष्यमाणो धरणीसुतेन ॥38॥
3. कलाविधिज्ञं धनधान्ययुक्तं वक्तृत्वविद्याविभवैस्समेतम्।
   कुर्यान्नरं शीतकर स्तुलास्थः प्रसूतिकाले शशिजेन दृष्टः ॥39॥
4. विचक्षणो वस्त्रविभूषणेषु क्रयेऽथवाविक्रयता विधाने।
   तुलाधरे शीतकरे नरः स्याद् दृष्टे शुनासीरपुरोहितेन ॥40॥
5. प्राज्ञस्त्वनेकोद्यमसाधितार्थः स्यात्पार्थिवानां कृपया समेतः।
   हृष्टो नरः प्रीतिकलेबरश्च जूके मृगाङ्के भृगुजेन दृष्टे ॥41॥
6. धनैश्च धान्यै र्वरवाहनैश्च युतोऽपि हीनो विषयोपभोगैः।
   भवेन्नर स्तौलिनि जन्मकाले कलानिधौ भानुसुतेन दृष्टे ॥42॥ जा.भ.पु.53
7. जूके भूपसुवर्णकारवणिजश्शेषेक्षिते नैकृतिः। बृ.जा.17.2
8. मूर्खोऽन्यदारनिरतस्सुकविस्सितांशे सत्काव्यकृत्सुखपरोऽन्यकलत्रगश्च ।बृ.जा.17.5

## वृश्चिकगते चन्द्रे

| ग्रहदृष्टिः | | फलितम् | बृ.जा.विशेषः[7] नवांशे च फलम्[8] |
|---|---|---|---|
| *रविना* | : | सद्वृत्तहीनः धनी जनानामसह्यः अत्यन्तकृत- प्रयासः बली निवासी जनो भवति [1]। | अधनः आरक्षकः |
| *कुजेन* | : | रणाङ्गनावाप्तयशो विशेषः गाम्भीर्ययुक्तः गौरवोपेतः भूपानुकम्पासमुपात्तवित्तः [2] | राजा प्राणिहिंसकः |
| *बुधेन* | : | वाग्विलासकुशलः रणशीलः नितान्तं गीतनृत्यनिरतः कूटकर्मणि निपुणः[3]। | युग्मपिता बाहुयुद्धविशारदः |
| *गुरुणा* | : | लेकानुरूपः सुतरां सुरूपः सत्कर्मकृत् वित्तविभूषणाढ्यः [4] | नम्रः भूपः |
| *शुक्रेण* | : | प्रसन्नमूर्ति स्समुदारकीर्तिः कूटक्रियाज्ञः धनवाहनाढ्यः कान्ताहतार्थश्च। [5] | रजकः अर्धवान् |
| *शनिना* | : | स्थानभ्रष्टः द्रव्यनाशाल्पवित्तः नीचापत्यः असत्वः यक्ष्मवान् प्रकोपवांश्च। [6] | अङ्गहीनः कलहकारी |

1. सद्वृत्तहीनं धनिनं जनानामसह्य मत्यन्तकृतप्रयासम्।
बलं निवासं मनुजं प्रकुर्या त्ताराधिपः कौर्प्यगतोऽर्कदृष्टः ॥43॥
2. रणाङ्गनावाप्तयशो विशेषो गभीरतां गौरवसंयुतश्च।
भूपानुकम्पासमुपात्तवित्तो नरोऽलिनीन्दौ क्षितिजेन दृष्टे ॥44॥
3. वाग्विलासकुशलो रणशीलो गीतनृत्यनिरतश्च नितान्तम्।
कूटकर्मणि नरो निपुणः स्याद्वृश्चिके शशिनि चन्द्रज दृष्टे ॥45॥
4. लोकानुरूपः सुतरां सुरूपः सत्कर्मकृद्वित्तविभूषणाढ्यः।
स्यान्मानवो जन्मनि शीतरश्मौ संस्थेऽलिनि ज्येन निरीक्ष्यमाणे ॥46॥
5. प्रसन्नमूर्ति स्समुदारकीर्तिः कूटक्रियाज्ञो धनवाहनाढ्यः।
कान्ताहतार्थः पुरुषोऽलियाते शीतद्युतौ दैत्यगुरुप्रदृष्टे ॥47॥
6. स्थानभ्रंशं द्रव्यनाशाल्पवित्तं नीचापत्यासत्वयक्ष्मप्रकोपम्।
कुर्याच्चन्द्रः सूतिकालेऽलिसंस्थः छायापुत्रप्रेक्षणतं प्रयातः ॥48॥ जा.भ.पु.53, 54.
7. कीटे युग्मपिता नतश्च रजको व्यंगोऽधनो भूपतिः ॥ बृ.जा.17.2
8. आरक्षको वधरुचिः कुशलो नियुद्धे भूपोऽर्धवान्कलहकृत्क्षितिजांशसंस्थे ॥ बृ.जा.17.5

## धनुषि स्थिते चन्द्रे

| ग्रहदृष्टिः | | फलितम् | बृ.जा.विशेषः[7] नवांशे च फलम्[8] |
|---|---|---|---|
| *रविना* | : | प्रौढप्रतापवान् उत्तमकीर्तिसंपत्समेतः सद्वाहनः युद्धविजयी नृपप्रसादः[1]। | सदम्भश्शठश्च प्रथितबलः |
| *कुजेन* | : | नराणां सेनापतिः महत्प्रतापवान् पद्मालयालङ्करणोपलब्धिः [2]। | सदम्भश्शठश्च रणोपदेष्टा |
| *बुधेन* | : | सद्वाग्विलासः बहुभृत्ययुक्तः ज्योतिषशिल्पविद्याविशारदः। [3] | स्वजातिप्रभुः हास्यज्ञः |
| *गुरुणा* | : | महत्पदस्थः धनवान् सुवृत्तः सुन्दरश्च[4] | उर्वीशः सचिवः |
| *शुक्रेण* | : | सन्तानार्थात्यन्तसञ्जातधर्मः शश्वत् सौख्येनान्वितः [5] | जनाश्रयः नपुंसकः |
| *शनिना* | : | सत्वोपेतः नित्यशास्त्रानुरक्तः सद्वक्ता प्रचण्डश्च [6] | सदम्भश्शठश्च धर्मशीलः |

1. प्रौढप्रतापोत्तमकीर्तिसम्पद्सद्वाहनान्यावहजं जयं च।
   नृपप्रसादं कुरुते नराणां ताराधिपश्चापगतोऽर्कदृष्टः ॥49 ॥
2. सेनापतित्वं च महत्प्रतापं पद्मालयालङ्करणोपलब्धिम्।
   कुर्यात् नराणां हरिणाङ्क एषः शरासनस्थोऽवनिजेन दृष्टः ॥50 ॥
3. सद्वााग्विलासं बहुभृत्ययुक्तं कुर्यान्नरं ज्योतिषशिल्पविद्यम्।
   तुरङ्गजङ्घे हि कुरङ्ग जन्मा कुरङ्गलक्ष्मप्रभवेन दृष्टः ॥51 ॥
4. महत्पदस्थो धनवान् सुवृत्तो भवेन्नरश्चारशरीरयष्टिः
   धनुर्धरे शीतकरे प्रयाते निरीक्षिते शक्रपुरोहितेन ॥52 ॥
5. सन्तानार्थात्यन्तसञ्जातधर्मः शश्वत्सौख्येनान्वितो मानवः स्यात्।
   तारास्वामी चापगामी प्रसूतौ दैत्यामात्यप्रेक्षणत्वं प्रयातः ॥53 ॥
6. सत्वोपेतं नित्यशास्त्रानुरक्तं सद्वक्तारं मानवं च प्रचण्डम्।
   कोदण्डस्थ स्तीक्ष्णरश्म्यात्मजेन दृष्टः सूतौ शीतरश्मिः करोति ॥54 ॥ जा.भ.पु.54
7. ज्ञात्युर्वीशजनाश्रयाश्च तुरगे पापै स्सदम्भ श्शठः ॥ बृ.जा.17.3
8. जैवांशे प्रथितबलो रणोपदेष्टा हास्यज्ञस्सचिवविकामधर्मशीलः ॥ बृ.जा.17.7

## मकरस्थे चन्द्रे

| ग्रहदृष्टिः | | फलितम् | बृ.जा.विशेषः[7] नवांशे च फलम्[8] |
|---|---|---|---|
| *रविना* | : | गतधनः मलिनः चलनप्रियः हतमतिः | दरिद्रः |
| | | दुःखितमानसः [1] | अल्पापत्यः |
| *कुजेन* | : | अतिप्रचण्डः धनवाहनाढ्यः प्राज्ञः दारात्मज- | भूपः |
| | | सौख्ययुक्तः नितान्तं वैभवोपेतः [2] | धनी दुखितश्च |
| *बुधेन* | : | बुद्धिर्हीनः निर्धनः त्यक्तगेहः | राजाधिराजः |
| | | गेहिन्या उज्झितश्च [3]। | गर्वितः |
| *गुरुणा* | : | नृपात्मजः सत्ययुतः गुणज्ञः | नरेन्द्रः |
| | | कलत्रपुत्रादियुतः [4] | कुलाचारानुरक्तः |
| *शुक्रेण* | : | सुनयनः धनी वाहनसंयुतः | पण्डितः |
| | | सुतविभूषणवस्त्रसुखः [5] | दुष्टस्त्रीष्वासक्तः |
| *शनिना* | : | महालसः मन्दधनी असत्यभाषी मलीमसः | धनी |
| | | व्यसनाभिभूतः । [6] | क्रोधनः |

---

1. गतधनो मलिनश्चलनप्रियो हतमतिः खलु दुःखितमानसः।
   हिमकरे मकरे च दिवाकरे क्षितिनौ हि नरः प्रभवे यदि॥55॥
2. अतिप्रचण्डो धनवाहनाढ्यः प्राज्ञश्च दारात्मजसौख्ययुक्तः।
   स्यान्मानवो वैभववाक् नितान्तं मृगे मृगाङ्केऽवनिसूनुदृष्टे॥56॥
3. बुद्ध्याहीनो निर्धनस्त्यक्तगेहो गेहिनाद्यैरुज्झितः पूरुषः स्यात्।
   आर्कौकेरः स्थावरे शीतरश्मौ पीयूषांशोरात्मजेन प्रदृष्टे॥57॥
4. नृपात्मजः सत्ययुतो गुणज्ञः कलत्रपुत्रादियुतो नरः स्यात्।
   मृगानने जन्मनि यामिनीशे वाचामधीशेन निरीक्ष्यमाणे॥58॥
5. सुनयनो धनवाहनसंयुतः सुतविभूषणवस्त्रसुखो नरः।
   कुमुदिनी दयिते मुखसंस्थिते भृगुसुतेन जनौ ननु वीक्षिते॥59॥
6. महालसो मन्दधनस्त्वसत्यो मलीमसः स्याद्व्यसनाभिभूतः।
   पीयूषमूर्ति र्यदि नक्रवर्तिः त्रिमूर्तिपुत्रेण निरीक्ष्यमाणः॥60॥ जा.भ.पु.54, 55
7. चात्युर्वीशनरेन्द्रपण्डितधनीद्रव्योनभूपाः मृगे। बृ.जा.17.3
8. अल्पापत्यो दुःखित स्सत्यपिस्वे मानासक्तः कर्मणि स्वेऽनुरक्तः।
   दुष्टस्त्रीष्विष्टः क्रोधनश्चार्किभागे चन्द्रे भानौ तद्वदिंद्वादि दृष्टे॥ बृ.जा.17.8

कुम्भगते चन्द्रे

| ग्रहदृष्टिः | फलितम् | बृ.जा.विशेषः[7] नवांशे च फलम्[8] |
|---|---|---|
| *रविना* : | कृषीवलः कैतवसंयुतः नृपाश्रितः धर्मरतः [1]। | परस्त्रीलोलः अल्पापत्यः |
| *कुजेन* : | धनभवनजनित्रः तातविश्लेषयुक्तः विषमतमपदार्थोत्पादकः अनल्पजल्पः मलिनचित्तः अत्यन्तधूर्तः[2] | परस्त्रीलोलः धनी दुःखितश्च |
| *बुधेन* : | विषयसौख्यरतः कान्तियुक्तदेहः अतीवशुचिः प्रियभाषणः युवतिगीतसुनीतकृतादरः [3] | भूपः गर्वितः |
| *गुरुणा* : | महीपुरग्राममुखादिसौख्ययुक्तः भोगान्वितः साधुजनप्रवृत्तियुक्तः श्रेष्ठतरः [4] | भूपसमः कुलाचारानुरक्तः |
| *शुक्रेण* : | मित्रात्मजस्त्रीगृहसौख्यहीनः दीनः जनोत्सारितगौरवः [5] | परदारानिरतः दुष्टस्त्रीष्वासक्तः |
| *शनिना* : | नखोष्ट्रवालाश्वतरादिलाभः कुस्त्रीरतः धर्मविरुद्धवृत्तिः [6] | परस्त्रीनिरतः क्रोधनः |

1. कृषीवलः कैतवसंयुतश्च नृपाश्रितो धर्मरतो नरः स्यात्।
पीयूषमूर्तिः यदि कुम्भगामीत्वंभोजिनीस्वामि निरीक्ष्यमाणः ॥61॥
2. धनभवनजनित्रो तातविश्लेषयुक्तो विषमतमपदार्थोत्पादकोऽनल्पजल्पः।
भवति मलिनचित्तोऽत्यन्तधूर्तो हि मर्त्यः शशिनि कलशयाते वीक्षितो भूसुतेन॥62॥
3. विषयसौख्यरतोऽशनसंविधारुचि रतीवशुचिः प्रियभाषणः।
युवतिगीतसुनीत कृतादरो घटगतेन्दुरिह ज्ञ निरीक्षितः॥63॥
4. महीपुरग्राममुखादिसौख्यं भोगान्वितं साधुजनप्रवृत्तिम्।
कुर्यान्नरं श्रेष्ठतरं घटस्थो निशाकरः शक्रगुरुप्रदृष्टः॥64॥
5. मित्रात्मजस्त्रीगृहसौख्यहीनो दीनो जनोत्सारितगौरवः स्यात्।
निशाकरे कुम्भधरे प्रसूतौ संवीक्षिते दानवपूजितेन॥65॥
6. नखोष्ट्रवालाश्वतरादिलाभं कुस्त्रीरतं धर्मविरुद्धवृत्तिम्।
करोति पुसां हि घटेऽधितिष्ठन् निशाकरो भास्करसूनुदृष्टः॥66॥ जा.भ.पु.55
7. भूपो भूपसमोऽन्यदारनिरतश्शेषैश्च कुम्भस्थिते। बृ.जा.17.3
8. मकरवत्।

## मीनगते चन्द्रे

| ग्रहदृष्टिः | | फलितम् | बृ.जा.विशेषः[7] नवांशे च फलम्[8] |
|---|---|---|---|
| *रविना* | : | मनोद्भवोत्कर्षवान् अतीवसौख्योपेतः सेनापतिःबहुवित्तवृद्धिः सत्कार्यसिद्ध्युपेतः [1]। | पापकर्मवान् प्रथितबलः |
| *कुजेन* | : | पराभिभूतः कुलटाधिसख्यः सौख्योज्झितः नितान्तं पापरतः [2] | पापकर्मी रणोपदेष्टा |
| *बुधेन* | : | वराङ्गना सूनुसुखोपेतः मानी धनी भूमिपतेः प्रसादोपेतः [3] | हास्यज्ञः हास्यज्ञ एव |
| *गुरुणा* | : | उदारदेहः सुकुमारदेहः सद्देहिनीसूनुधनादि-सौख्यवान् [4] | नृपतिः सचिवः |
| *शुक्रेण* | : | सद्गीतवाद्यादिरतः सुवृत्तः विलासिनीकेलि-विलासशीलः [5] | बुधः नपुंसकः |
| *शनिना* | : | कामातुरः दारासुतैर्विहीनः नीचाङ्गनासख्यः अविक्रमः [6] | पापकर्मी धर्मशीलः |

1. मनोद्भवोत्कर्षमतीवसौख्यं सेनापतित्वं बहुवित्तवृद्धिम्।
   सत्कार्यसिद्धिं कुरुते हिमांशु र्झषे दिनेशेन निरीक्ष्यमाणः ॥67॥
2. पराभिभूतं कुलटाधिसख्यं सौख्योज्झितं पापरतं नितान्तम्।
   करोति जातं हि निधिःकलानां मीनस्थितो भूमिसुतेन दृष्टः ॥68॥
3. वराङ्गनासूनुसुखानि नूनं मानं धनं भूमिपतेः प्रसादम्।
   कुर्यान्नराणां हरिणाङ्क एष वैसारिणस्थो ज्ञ निरीक्ष्यमाणः ॥69॥
4. उदारदेहं सकुमारदेहं सद्देहिनीसूनुधनादिसौख्यम्।
   नृपं विदध्यात्पृथुरोमगामी तमोपति र्वाक्पति वीक्षितश्चेत् ॥70॥
5. सद्गीतवाद्यादिरतं सुवृत्तं विलासिनीकेलिविलासशीलम्।
   करोति मर्त्यं तिमियुग्मसंस्थः शीतद्युति र्जन्मनि शुक्रदृष्टः ॥71॥
6. कामातुरं दारसुतै र्विहीनं नीचाङ्गनासख्यमविक्रमं च।
   नीहाररश्मिः शफरं प्रपन्नो नरं विदद्याद्रविसूनुदृष्टः ॥72॥ जा.भ.पु.55, 56
7. हास्यज्ञो नृपतिर्बुधश्च झषगे पापश्च पापेक्षिते॥ बृ.जा.17.3
8. जैवांशे प्रथितबलो रणोपदेष्टा हास्यज्ञस्सचिवविकामवृद्धशीलः॥ बृ.जा.17.7

## लग्नादिद्वादशभावेषु चन्द्रस्थितिवशात् फलविचारः

द्वादशमेषादिराशयः प्रतिदिनं समावर्तन्ते। जातस्य जनस्य जन्मकाले यो राशि र्भवति, स एव तस्य जन्मलग्नः भवति। तदादि द्वादशराशिषु द्वादशभावाः प्रकीर्त्यन्ते ज्योतिर्विद्भिः। ते हि तनु धन सहज सुहृत् सुत शत्रु जाया आयुः भाग्य राज्य लाभ व्ययाः क्रमात्। तत्र लग्न एव तनुभावः। तदादि द्वादशभावेषु चन्द्रस्थितिफलं परिशीलयामः।

***तनुभावः*** चन्द्रे लग्नगते जनः मूकः उन्मत्तः जडः अन्धः हीनः बधिरश्च भवति। स्वस्थानभूते कर्काटके लग्ने सति तत्र स्थित श्चन्द्रो नरं धनिनं करोति। एवं लग्नो यदि मेष स्तर्हि बहुसुतो भवति। चन्द्रोच्चराशि र्वृषभो यदि लग्न स्स्यात्, तत्रस्थित श्चन्द्रो जनं धनाढ्यं करोति। एषो मिहिरस्याभिप्रायः[1]।

मेषवृषभकर्काटकेष्वन्यतमे विलग्ने सति तत्र स्थितश्चन्द्रो नरं दाक्षिण्य-रूपधनभोगगुणैः प्रधानं करोति। शेषेष्वन्यतमे विलग्ने यदि तत्र चन्द्रः तर्हि जनो नीचः उन्मत्तः बधिरः विकलः मूकश्च भवति। सः क्षीणचन्द्रश्चेत् विशेषफलानि भवन्तीति कल्याणवर्मा[2]।

रूपलावण्ययुक्तः चपलः पञ्चदशवर्षे बहुयात्रवान्, मेषवृषभ-कर्काटकलग्ने चन्द्रे धनी सुखी नृपालः मृदुवाक् बुद्धिरहितः मृदुगात्रः बली, शुभदृष्टे बलवान् बुद्धिमान् आरोग्यवान् वाग्जालकः धनी। लग्नेशबलरहिते व्याधिमान्। शुभदृष्टे आरोग्यवान् भवतीति भृगुसूत्राणि[3]। अत्र कल्याणवर्मानमनुसरति श्रीमान् विंजमूरि ताताचार्य स्स्वकीये जातकाभरणे ग्रन्थे[4]।

---

1. मूकोन्मत्तजडान्धहीनबधिरप्रेष्याश्शशांकोदये
   स्वर्क्षाजोच्चगतेधनी बहुसुतस्सस्वः... बृ.जा.18.4
2. दाक्षिण्यरूपधनभोगगुणैः प्रधानश्चन्द्रे कुलीरवृषभाजगते विलग्ने।
   उन्मत्तनीचबधिरो विकलश्च मूक श्शेषे नरो भवति कृष्णतनुर्विशेषात्॥ सारा.30.14
3. भृ.सू.2.1,
4. दाक्षिण्यरूपधनभोगगुणैर्वरेण्य श्चन्द्रे कुलीरवृषभाजगते विलग्ने।
   उन्मत्तनीचबधिरोविकलोऽधमूकःशेषे नरो भवति हीनतनु र्विशेषात्॥ जा.भ.पु.38,

लग्ने चन्द्रे जनः कुरूपवान् व्याधिपीडितः जलौदनान्नभक्षकः जलरोगी वातप्रकृतिदेहः कृषीवलः कर्णगृह्यग्रन्थिः शास्त्रवान् सरोगवान् उन्मत्तः अतिमूर्खवान् भवतीति जातककलानिधिः[1]।

***धनभावः*** लग्नात् द्वितीये धनभावे चन्द्रो भवेत् चेत् जनः कुटुम्बी भवतीति वराहमिहिरः[2]।

असंपूर्णो चन्द्रो द्वितीयभावे भवेच्चेत् जनः सुखहीनः मित्रैश्चविहीनो भवति। स एव सम्पूर्णश्चेत् तर्हि जनो धनेशोऽल्पप्रलापकरश्च भवति कल्याणवर्मणो मते ॥[3]

शोभनवान् बहुप्रतापी धनवान् अल्पसन्तोषी अष्टादशवर्षे राजद्वारेण सेनाधिपत्ययोगः, पापयुते विद्याहीनः, शुभयुते विद्याधनवान्, एक एव पूर्णचन्द्रेण सम्पूर्णधनवान् कलत्रयुतवान् सुखी कीर्तिमान् भवति। एतच्च भृगुसूत्रम् ॥[4]

द्वितीये पूर्णविधौ सति सुखात्मजः द्रव्ययुतः विनीतः भवेन्नरः। क्षीणचन्द्रे तु स्खलद्वाक् विधनः अल्पबुद्धिः नरो भवति। न्यूनाधिकत्वे फलतारतम्यं भवतीति जातकाभरणकर्ता[5]।

लग्नात् द्वितीयस्थाने चन्द्रे सति जन श्शोभनवान् बुद्धिमान् धनवान् राजपूज्यो भवति। पापयुते तस्मिन् जनो विद्याविघ्नोऽपेतः सत्कुटुम्बवान् मुखसौन्दर्यवान् मृदुभाषी वक्रदृष्टियुतनेत्रः भवतीति जातककलानिधिः[6]।

***सहजभावः*** तृतीये सहजभावगते चन्द्रे जनः प्राणिहिंसको भवतीति वराहमिहिरः[7]।

बलिनि चन्द्रे सहजगे सति जनो भ्रातृजनाश्रयणीयो मुदान्वितः शूरः विद्यावस्त्रान्नसंग्रहणशीलो भवतीति कल्याणवर्मा[8]।

---

1. जा.क.2-1.
2. कुटुम्बी धने। बृ.जा.18.4,
3. अललितसुखमित्रो धनैश्च चन्द्रे द्वितीयराशिगते।
   संपूर्णेऽतिधनेशो भवति नरोऽल्पप्रलापकरः। सारा.30.15
4. भृ.सू.2.2
5. सुखात्मजद्रव्ययुतो विनीतो भवेन्नरः पूर्णविधौ द्वितीये।
   क्षीणेस्खलद्वाग्विधनोऽल्पबुद्धिर्न्यूनाधिकत्वे फलतारतम्यम्॥ जा.भ.पु.38
6. जा.क.2-2.
7. हिंस्रो भ्रातृगते..बृ.जा.18.4
8. भ्रातृजनाश्रयणीयो मुदान्वितस्सहजगे बलिनि।
   चन्द्रे भवति शूरो विद्यावस्त्रान्नसङ्ग्रहणशीलः॥ सारा.30.16

भगिनीसामान्यः वातशरीरी अन्नहीनः अल्पभाग्यः चतुर्विंशतिवर्षे राजदण्डेन द्रव्यच्छेदवान् गोमहिष्यादिहीनः पिशुनः सहोदरवृद्ध्युपेतो भवति जनस्सहजगे चन्द्र इति भृगुसूत्रम्[1]।

हिंस्रः सवर्गः कृपणः अल्पबुद्धिः बन्धुजनाश्रयः दयाभयाभ्यां परिवर्जितः नरो भवेत्तृतीये चन्द्रे जातकाभरणम्[2]।

वातपीडितदेहः मूलरोगी स्वल्पस्तन्यपानः कर्मविघ्नः बहुभ्रातृसमेतः विद्वान् प्रतापी भवति जनस्तृतीये चन्द्रे इति जातककलानिधिः[3]।

**सुखभावः** चन्द्रे लग्नात् चतुर्थे सति चतुर्थभावफलयुक्तो भवतीति वराहमिहिरः। अर्थात् सुखजलपातालबन्धुगृहशय्याद्युपेतो भवति[4]।

बन्धुपरिच्छदवाहनसहितः दाता जलसंचारानुरतः सुखासुखोत्कर्ष परिमुक्तः भवतीति कल्याणवर्मा[5]।

चन्द्रे चतुर्थे क्षीरसमृद्धिःधनधान्यसमृद्धिः मातृरोगी परस्त्रीस्तन्यवर्धितः इष्टान्नसम्पन्नः परस्त्रीलोलः सौख्यवान् भवति जनः। पूर्णचन्द्रे स्वक्षेत्रे नरो बलवान् मातृदीर्घायुश्च भवति। क्षीणचन्द्रे पापयुते मातृनाशः वाहनहीनः, बलयुते वाहनसिद्धिः, शुभयुते वनकूपनिर्माणसिद्धिः सम्पद्यते। एतच्च भृगुसूत्रमतम्[6]।

पातालाख्ये चतुर्थभावे विलसितः कलानिधिः जनं जलाश्रयोत्पन्नधनोपलब्धिनं कृष्यंगनावाहनसूनुसौख्योपेतं, द्विजदेवभक्त्युपेतं करोतीति जातकाभरणम्[7]।

अश्वारुढः गन्धमाल्याभरणप्रियः बहुपोषकः विद्याविनयसम्पन्नः जनो भवतीति जातककलानिधिः[8]।

---

1. भृ.सू.2.3 2. हिंस्रः सवर्गः कृपणोऽल्पबुद्धिर्भवेन्नरो बन्धुजनाश्रयश्च।
दयाभयाभ्यां परिवर्जितश्च द्विजाधिराजे सहजे प्रसूतौ। जा.भ.पु.38
3. जा.क.2-3, 4. सुखे सतनये तत्प्रोक्तभावान्वितो। बृ.जा.18.4
5. बन्धुपरिच्छदवाहनसहितो दाता चतुर्थगे चन्द्रे।
जलसञ्चारानुरतस्सुखासुखोत्कर्ष परिमुक्तः॥ सारा.30.17
6. भृ.सू.2.4
7. जलाश्रयोत्पन्नधनोपलब्धिं कृष्यंगनावाहनसूनुसौख्यम्।
प्रसूतिकाले कुरुते कलावान् पातालसंस्थो द्विजदेवभक्तिम्॥ जा.भ.पु.38
8. जा.क.2-4,

***सुतभावः*** लग्नात् पञ्चमे राशौ चन्द्रे सति जनः पञ्चमभावप्रोक्तफलान्वितो भवतीति वराहमिहिरः कथयति[1]। अर्थात् जनः पुत्रप्रतिभाशक्त्युपेतो भवतीति विज्ञायते।

सुतभावगते चन्द्रे जनः अशूरः विद्यावस्त्रान्नसंग्रहणशीलः बहुतनयः सौम्यमित्रैरनेकैरुपेतः धारणासमर्थबुद्ध्युपेतः तीक्ष्णः भवतीति कल्याणवर्मा[2]।

पञ्चमभावोपगतचन्द्रस्य जनस्य जाया क्वचित्कोपवती रूपवती स्तनमध्ये लाञ्छनवती भवति। स हि जनः स्त्रीदेवतासिद्धियुक्तः चतुष्पाद-लाभवान् स्त्रीद्वयोपेतः बहुक्षीरलाभवान् सत्ववान् चिन्तावान् स्त्रीप्रजावान् एकपुत्रः स्त्रीदेवतोपासकः, शुभयुते वीक्षणवशात् अनुग्रहसमर्थः, पापयुतेक्षणवशात् निग्रहसमर्थः, पूर्णचन्द्रे बुद्धिमान् अन्नदानप्रियः सत्कर्मकारी भाग्यसमृद्धियुक्तः राजयोगवान् ज्ञानवान् भवति। एतच्च भृगुसूत्रम्[3]।

पञ्चमे चन्द्रे जनः जितेन्द्रियः सत्यवाक् प्रसन्नः धनात्मजावाप्त-समस्तसौख्यः सुसंग्रही सुशीलः भवतीति जातकाभरणम्[4]।

चन्द्रे लग्नात् पञ्चमे सति जनः चतुष्पदादिलाभयुक्तः रूपवत्भार्या-समेतः क्षीरसमृद्ध्युपेतः मायावी मन्त्रोपासकः डाम्बिकः बहुपुत्रवान् विद्याविघ्नवान् भवतीति जातककलानिधिः[5]।

***शत्रुभावः*** शत्रुभावे चन्द्रे जनः बहुशत्रुसमेतः मृदुकायः अल्पदीपनाग्निः अल्पमदनः तीक्ष्णः अलसः भवतीति मिहिराभिप्रायः[6]।

प्रचुरामित्रः तीव्रः मृदुकायाग्निः मदालसः उदरभवैः रोगै स्सपीडितो

---

1. सुखे सतनये तत्प्रोक्तभावान्वितः। बृ.जा.18.4
2. चन्द्रे भवति नशूरो विद्यावस्त्रान्नसंग्रहणशीलः
   बहुतनयसौख्यमित्रो मेधावी पञ्चमे तीक्ष्णः॥ सारा.30.18
3. भृ.सू.2.5
4. जितेन्द्रिय स्सत्यवचाः प्रसन्नो धनात्मजावाप्तसमस्तसौख्यः।
   सुसंग्रही स्यान्मनुजः सुशीलः प्रसूतिकाले तनयालयेऽब्जे॥ जा.भ.पु.39
5. जा.क.2-5.
6. नैकारिर्मृदुकायवह्निमदनस्तीक्ष्णोऽलसश्चारिगे॥ बृ.जा.18.4

भवतीति कल्याणवर्मा[1]।

अधिकदारिद्र्यदाहोपेतः षड्त्रिंशद्वर्षे विधवासंगमी, तत्र पापयुते हीनपापकरः राहुकेतुयुते अर्धहीनः घोरकः शतृकलहवान् सहोदरहीनः अग्निमान्द्यादिरोगी तटागकूपादिषु जलगण्डोपेतः, पापयुते रोगवान् क्षीणचन्द्रे पूर्णफलानि, शुभयुते बलवान् अरोगी भवतीति भृगुसूत्रम्[2]।

निशापतिः शत्रुक्षेत्रे सति नरः मन्दाग्निः निर्दयः क्रौर्ययुक्तः नाल्पालस्यः निष्ठुरः दुष्टचित्तः रोषावेशात्यन्तसञ्जातशत्रुः भवति जातकाभरणमते[3]।

षष्ठमे भावे चन्द्रो यदि भवेत् तर्हि जनः अतिदरिद्रः वितन्तुसंगमे धनहीनः मद्यपानरतः ज्ञातृशत्रुपीडाकरः मेधावी बाल्येऽन्यस्त्रीस्तन्यपानेन पोषितः अकारणेन जनविरोधी भवतीति जातककलानिधिः[4]।

*जायाभावः* कलत्रभावे चन्द्रे जनः ईर्ष्यायुक्तः अधिकमन्मथविकारवान् भवतीति बृहज्जातककर्ता[5]।

सप्तमे चन्द्रे जनः सौम्यः अधृष्यः सुखितः सुशरीरः कामसंयुतः, क्षीणचन्द्रे दैन्यः रुगर्दितदेहः भवतीति कल्याणवर्मा[6]।

चन्द्रे सप्तमे सति जनः मृदुभाषी पार्श्वनेत्रः द्वात्रिंशद्वर्षे स्त्रीयुक्तः स्त्रीलोलः राजप्रसादलाभोपेतः, भावाधिपे बलयुते स्त्रीद्वयं, क्षीणचन्द्रे कलत्रनाशः, तुङ्गस्वक्षेत्रे एकदारवान्, स्त्रीमूलेन विद्यादिपीडायुक्तः लुब्धो भवतीति भृगुसूत्रम्[7]।

---

1. प्रचुरामित्र स्तीव्रो मुदुकायाग्नि र्मदालस श्चन्द्रे।
   षष्ठे नर उदरभवैः रोगै स्संपीडितो भवति। सारा.30.19
2. भृ.सू.2.6
3. मन्दाग्नि स्स्या न्निर्दयः क्रौर्ययुक्तो नाल्पालस्यो निष्ठुरो दुष्टचित्तः।
   रोषावेशात्यन्तसञ्जातशत्रुः शत्रुक्षेत्रे रात्रिनाथे नरः स्यात्॥ जा.भ.पु.39
4. जा.क.2-6
5. ईर्ष्युस्तीव्रमदोमदे. बृ.जा.18.5
6. सौम्योऽधृष्य स्सुखित स्सुशरीरः कामसंयुतो द्यूने।
   दैन्यरुगर्दितदेहः कृष्णे सञ्जायते शशिनि॥ सारा.30.20
7. भृ.सू.2.7

चन्द्रे चन्द्राननस्थानविराजमाणे नरो महाभिमानी मदनातुरः तीक्ष्णकलेबरः धनेन विनयेन च हीनो भवतीति जातकाभरणम्[1]।

सप्तमे चन्द्रे जनः स्त्रीलोलः धूर्तः उत्तमाङ्गनासंसिद्धियुक्तः सत्कुटुम्बवान् शुभयुक्ते एकभार्यायुक्तः, पापयुते दारयुग्मवान् कटिग्रन्थिः, कुजयुक्तश्चेत् कार्मुकग्रन्थियुक्तः भवतीति जातककलानिधिः[2]।

***आयुर्भावः*** अष्टमे भावे चन्द्रोपेते सति जनः चपलबुद्धिः रोगपीडितः भवतीति वराहमिहिरः[3]।

आयुस्स्थाने चन्द्रो यदि तर्हि जनः बुद्धिमान् अतितेजस्वी व्याधि-विबन्धक्षपितदेहः, क्षीणचन्द्रे तु स्वल्पायुर्भवति। एष हि कल्याणवर्म-णोऽभिप्रायः[4]।

अष्टमे मृत्युभावे चन्द्रश्चेत् जनः अल्पवाहनवान् तटाकादिषु गण्डयुक्तः स्त्रीमूलेन बन्धुजनपरित्यागी, स्वस्थोच्चस्थाने वा जनो दीर्घायुः, क्षीणेतु मध्यायुः भवतीति भृगुसूत्रवचनम्[5]।

हिमांशौ आयुस्स्थाने वर्तमाने नरः नानारोगयुक्तः क्षीणदेहः अतिदरिद्रः चोरारातिक्षोणिपालाभितप्तः चित्तोद्वेगैः व्याकुलो भवतीति जातकाभरणम्।[6]

अष्टमस्थाने चन्द्रगते सति जनः अल्पपुत्रः पित्तशरीरः व्याधिपीडायुक्तः नेत्ररोगी कृशः मातुररिष्टप्रदोऽथवा मातृपक्षविरोधी, पापयुते बालारिष्टयुक्तः, शुभयुते शुभवीक्षणत्वाद्वा तत्परिहारः भवतीति जातककलानिधिः[7]।

***भाग्यभावः*** नवमे भाग्यभावे चन्द्रे स्थिते सति जनः सौभाग्यात्मजमित्रबन्धुधनभाक्

---

1. महाभिमानी मदनातुरश्च नरो भवेत्तीक्ष्णकलेबरश्च।
   धनेन हीनो विनयेन चन्द्रे चन्द्राननास्थान विराजमाने॥ जा.भ.पु.39
2. जा.क. 2.7,
3. बहुमतिर्व्याध्यर्दितश्चाष्टमे। बृ.जा.18.5,
4. अतिमति रतितेजस्वी व्याधिविबन्धक्षपितदेहः।
   निधनस्थे रजनिकरे स्वल्पायु र्भवति संक्षीणे॥ सारा.30.21
5. भृ.सू. 2.8
6. नानारोगः क्षीणदेहोऽतिनिस्व श्चोरारातिक्षोणिपालाभितप्तः।
   चित्तोद्वेगै र्व्याकुलो मानव स्स्यादायुस्थाने वर्तमाने हिमांशौ। जा.भ.पु.39
7. जा.क. 2.8

भवतीति वराहमिहिरः[1]।

नवमे पूर्णचन्द्रे नरः दैवतपितृकार्यपरः सुखधनमतिपुत्रसम्पन्नः युवतिजननयनकान्तः प्रियतमोद्योगश्च भवतीति कल्याणवर्मा।[2]

नवमे चन्द्रे पुरुषः पुण्यवान् बहुश्रुतवान् तटाकगोपुरादिनिर्माणपुण्यकर्ता पुत्रभाग्यवान्, पूर्णचन्द्रे बलयुते बहुभाग्यवान् पितृदिर्घायुः, पापयुते पापक्षेत्रे भाग्यहीनः नष्टपितृमातृकः भवतीति भृगुसूत्रम्[3]।

नवमस्थे निशाकरे नरः कलत्रपुत्रद्रविणोपपन्नः पुराणवार्ताश्रवणानुषक्तः सुकर्म सत्तीर्थपरस्स्यादिति जातकाभरणम्[4]।

चन्द्रे नवमे सति मानवः बहुश्रुतवान् बुद्धिमान् कूपगोपुरादिप्रतिष्ठावान् आरामादिनिर्माता धनधान्यग्रामसिद्धियुक्तः पुत्रवान् बहुभाग्यकरः द्विजगुरुपूजितः कृषिफलयुक्तः शूरः क्षीणे पापयुते बालारिष्टवान्, शुभयुते तत्परिहारवान् भवतीति जातककलानिधिः[5]।

***राज्यभावः*** दशमे कर्मगे चन्द्रे पुरुषः सत्कर्मफलनिष्पत्तिमान् भवति। धर्मधनधीशौर्यैर्युतश्च भवतीति वराहमिहिरः[6]।

चन्द्रे दशमे सति मनुजः अविषादी कर्मपरः सिद्धारम्भः धनसमृद्धः शुचिः अतिबलः शूरः दाता च भवतीति कल्याणवर्मा[7]।

दशमभावे चन्द्रे सति नरो विद्यावान्, पापयुते विंशद्वर्षेऽथवा सप्तविशद्वर्षे विधवासङ्गमेन जनविरोधी, अतिमेधावी सत्कर्मनिरतः कीर्तिमान्

---

1. सौभाग्यात्मजबन्धुमित्रधनभाक् धर्मस्थिते शीतगे॥ बृ.जा.18.5
2. दैवपितृकार्यपरस्सुखधनमतिपुत्रसम्पन्नः।
युवतिजननयनकान्तो नवमेशशिनिप्रियतमोद्योगः॥ सारा.30.22
3. भृ.सू. 2.9
4. कलत्रपुत्रद्रविणोपपन्नः पुराणवार्ताश्रवणानुषक्तः।
सुकर्मसत्तीर्थपरो नरस्स्याद्यदाकलावान्नवमालयस्थः। जा.भ.पु.39
5. जा.क.2-9
6. निष्पत्तिं समुपैति धर्मधनधीशौर्यैर्युतः कर्मगे। बृ.जा.18.5
7. अविषादी कर्मपर स्सिद्धारम्भश्च धनसमृद्धश्च।
शुचिरतिबलोऽथदशमेशूरोदाता भवेच्छ शशिनि॥ सारा.30.23.

दयावान् देवताराधनपरः, भावधिपे बलयुते विशेषसत्कर्म-सिद्धिः, पापनिरीक्षिते पापयुते वा दुष्कृतिः कलत्रप्रियः कलत्रमूलेन कर्मविघ्नः भवतीति भृगुसूत्रम् [1]।

मानस्थाने यामिनीनायके सति नरः क्षोणीपालादुपेतधनः आवासवान् कीर्तिमान् रूपवान् सत्ववान् संतोषवांश्च भवति। अपि च पुरुषः चंचललक्ष्मीसमेतः शीलसमुपेतश्च भवतीति जातकाभरणम् [2]।

दशमे चन्द्रे जनः कामातुरः विधवासङ्गमवान् कार्यवादी धनाढ्यः दीर्घायुः उद्योगी देवालयतटाकाधिकारी स्त्रीविरोधी सज्जनभक्तस्स्या-दिति जातककलानिधिः[3]।

*लाभभावः* एकादशे लाभभावे स्थिते चन्द्रे नर स्तद्भावगुणान्वितो भूत्वा बलोपेतो भवतीति वराहमिहिरः[4]।

एकादशभावगतेन चन्द्रेण जनो धनवान् बहुसुतभाग्यवान् पूर्णायुष्कः इष्टभृत्यवर्गः मनस्वी तीक्ष्णः शूरः प्रकाशश्च भवतीति कल्याणवर्मा निगदति[5]।

लाभगतेन चन्द्रेण मानवः बहुश्रुतवान् पुत्रवान् उपकारी पञ्चाशद्वर्षे पुत्रासबहुप्राबल्ययोगः गुणाढ्यः, भावाधिपे बलहीने बहुधनव्ययः, बलयुते बलवान् मौक्तिकादिलाभवान् श्वेतधान्यलाभवान्, शुक्रयुते नरवाहनयोगयुक्तः बहुविद्यावान् अनेकजनरक्षावान् भवतीति भृगुसूत्रम्[6]।

लाभे विराजमाने ताराधिराजे मनुजस्य सन्माननानाविधवाहनाप्तिः

---

1. भृ.सू.2.10
2. क्षोणीपालादर्थलब्धिश्चशालाकीर्तिर्मूर्तिस्सत्वसन्तोषयुक्तः।
   चंचल्लक्ष्मीशीलसंपत्समेतो स्यान्मानस्थाने यामिनीनायकश्चेत्॥ जा.भ.पु.39
3. जा.क. 2.10
4. ख्यातो भावगुणान्वितो भगवते॥ बृ.जा.18.5,
5. धनवान् बहुसुतभागी बह्वायुस्स्विेष्टभृत्यवर्गश्च।
   इन्दौ भवेन्मनस्वी तीक्ष्णश्शूरः प्रकाशश्च॥ सारा.30.24
6. भृ.सू.2.11

कीर्तिः सद्भोगगुणोपलब्धिः प्रसन्नता च भवतीति जातकाभरणमतम्[1]। एकादशभावे स्थितश्चन्द्रः नरं बहुश्रुतवन्तं पुत्रवन्तं परोपकारिणं विद्याविचक्षणं कीर्तिमन्तं द्रव्योपेतं कृषिबाहुल्ययुक्तं धनदातारं न्यायार्जनपरं विदधातीति जातककलानिधेरभिप्रायः[2]।

*व्ययभावः* चन्द्रे द्वादशभावे सति जनः क्षुद्रः अङ्गहीनश्च भवतीति वराहमिहिरः[3]। व्यये चन्द्रे नरः द्वेष्यः पतितः क्षुद्रः नयनरुगर्दितः अलसः विकलः अन्यजातः नित्यपरिभूतः भवतीति कल्याणवर्मा[4]।

भृगुसूत्राणि तु द्वादशे चन्द्रे नरः दुर्भोजनः दुष्पात्रव्ययोपेतः कोपोपद्रववान् व्यसनसमृद्धिमान् स्त्रीरोगयुक्तः अन्नहीनः, शुभयुते विद्वान् दयावन्, पापशत्रुयुते पापलोकः, शुभमित्रयुते श्रेष्ठलोकवान् भवतीति जगाद[5]।

द्वादशे वेश्मनि पीयूषांशौ संस्थिते पुरुषः शीलहीनः मित्रहीनः नेत्रवैकल्योपेतः शत्रुवृद्धियुक्तः रोषावेशपूरितो भवतीति जातकाभरणम्[6]। द्वादशभावे स्थितश्चन्द्रः नरस्य दुर्भोजनं गोत्रसंवृद्धिं अङ्गहीनतां क्षुद्रगुणं च प्रयच्छतीति जातककलानिधिसम्मतम्[7]।

---

1. सन्माननानाविधवाहनाप्तिः कीर्तिश्च सद्भोगगुणोपलब्धिः।
   प्रसन्नता लाभविराजमाने ताराधिराजे मनुजस्य नूनम्॥ जा.भ.पु.39
2. जा.क. 2-11.
3. क्षुद्रोऽङ्गहीनो व्यये। बृ.जा.18.5
4. द्वेष्यः पतितः क्षुद्रो नयनरुगार्दितोऽलसो भवेद्विकलः।
   चन्द्रे तथान्यजातो द्वादशगो नित्यपरिभूतः॥ सारा.30.25
5. भृ.सू.2.12
6. हीनत्वं वै चारु शीलेन मित्रै वैंकल्यं स्यान्नेत्रयो श्शत्रुवृद्धिः।
   रोषावेशः पूरुषाणां विशेषात् पीयूषांशे द्वादशे वेश्मनीह॥ जा.भ.पु.39
7. जा.क. 2-12.

एतानि च फलानि चन्द्रस्य कारकत्वं भावबलं ग्रहदृष्टिं ग्रहयोगं राशिसम्बन्धं बलं समीक्ष्य वक्तव्यान्यासन्। अत्रोक्ताः भावाः तनु कुटुम्ब सहोत्थ बन्धु पुत्र अरि पत्नि मरण शुभ आस्पद आय रिप्फेति, कल्य स्व विक्रम गृह प्रतिभा क्षत चित्तोत्थ रन्ध्र गुरु मान भव व्ययेति नाम्ना च कथ्यन्त इति वराहमिहिरो जगाद[1]।

## चान्द्रयोगविचारः

### द्विग्रहयोगः

| चन्द्रसङ्गतग्रहः | फलितम् |
|---|---|
| *रविः* : | रविचन्द्रयोगे नरः यन्त्राश्मकारो भवतीति मिहिरः[2]। स्त्रीवशवर्ती अविनीतः कपटी धनाढ्यः आसवविक्रयकुशलः क्रियानिपुणः स्यादिति कल्याणवर्मा[3]। पाषाणयन्त्रक्रयविक्रयेषु कूटक्रियायां च विचक्षणः कामुकः सगर्वश्च भवतीति ताताचार्यः[4]। |
| *कुजः* : | सवक्रश्शशी जनं कूटस्त्र्यासवकुम्भपण्यं मातुरशिवंकरोतीति वराहमिहिरः[5]। |

---

1. होरादयस्तनुकुटुम्बसहोत्थबन्धु पुत्रारिपत्निमरणानिशुभास्पदायाः।
   रिप्फाख्यमित्युपचयान्यरिकर्मलाभ दुश्चिक्यसंज्ञितगृहानि न नित्यमेके॥ बृ.जा.1.15
   कल्यस्वविक्रमगृहप्रतिभाक्षतानि चित्तोत्थरन्ध्रगुरुमानभवव्ययानि।
   लग्नाच्चतुर्थनिधनेचतुरश्रसंज्ञे द्यूनं च सप्तमं गृहं दशमर्क्ष माज्ञा॥ बृ.जा.1.16
2. तिग्मांशु र्जनयत्युषेशसहितो यन्त्राश्मकारं नरम्। बृ.जा.14.1
3. युवतीनां वशगस्यादविनीतः कूटवित् पृथुलवित्तः।
   आसवविक्रयकुशलो रव्युडुपत्योः क्रियानिपुणः॥ सारा.15.2
4. पाषाणयन्त्रक्रयविक्रयेषु कूटक्रियायां च विचक्षणः स्यात्।
   कामीप्रकामी पुरुषः सगर्वः सर्वौषधीशेन रवौ समेते॥ जा.भ.1.पु.185
5. कूटस्त्र्यासवकुम्भपण्यमशिवं मातु स्सवक्रश्शशी। बृ.जा.14.2

| चन्द्रसङ्गतग्रहः | फलितम् |
|---|---|
| | शूरः रणप्रतापी मल्लः असृग्वेदनार्तदेहः मृच्चर्मधातुशिल्पी कूटज्ञः स्यान्नर इति कुजचन्द्रयोगं निर्दिशति कल्याणवर्मा[1]। |
| | आचारहीनः कुटिलः प्रतापी पण्यानुजीवी कलहप्रियः मातृशत्रुः उरुजातश्च स्यान्नर इति ताताचार्यः[2]। |
| *बुधः* | बुधचन्द्रयोगे नरः प्रियभाषणशीलः अर्थनिपुणः सौभाग्यकीर्त्यन्वितो भवतीति मिहिरः[3]। |
| | काव्यकथास्वतिनिपुणः भाग्यवान् स्त्रीसम्मतः सुरूपः स्मितवदनः धर्मरुचिः विशिष्टगुणश्च भवतीति कल्याणवर्मा[4]। |
| | सद्वाग्विलासो धनवान् सुरूपः कृपार्थचेताः विनीतः कान्तापरप्रीतिः अतीववक्ता बहुधर्मकृत् बुधेन्दुयोगे पुरुषः स्यादिति ताताचार्यः[5]। |
| *गुरुः* | साङ्गिराश्चन्द्रः नरं विक्रान्तं कुलमुख्यं अस्थिरमतिं वित्तेश्वरं करोतीति वराहमिहिरः[6]। |
| | गुरुचन्द्रयोगे जनः दृढसौहृदः विनीतः स्वबन्धुसम्मानकृत् धनेशः शुभशीलः सुरद्विजेभ्यो हितो भवेदिति कल्याणवर्मा[7]। |

---

1. शूरो रणप्रतापी मल्लोऽसृग्वेदनार्तदेहश्च। मृच्चर्मधातुशिल्पीकूटज्ञश्चन्द्रकुजयोगे॥ सारा.15.8
2. आचारहीनः कुटिलः प्रतापी पण्यानुजीवी कलहप्रियश्च।
   स्यान्मातृशत्रुर्मनुजोरुजातः शीतद्युतौ भूसुतसंयुते वै॥ जा.भ.4.पु.185
3. सज्ञः प्रश्रितवाक्यमर्थनिपुणं सौभाग्यकीर्त्यन्वितम्। बृ.जा.14.2
4. काव्यकथास्वतिनिपुण स्सधन स्स्त्रीसम्मतस्सुरूपश्च।
   स्मितवदनश्शशिबुधयो र्धर्मरुचिस्स्या द्विचक्षणः। सारा.15.9
5. सद्वाग्विलासो धनवान्सुरूपः कृपार्थचेताः पुरुषो विनीतः।
   कान्तापरप्रीतिरतीववक्ता चन्द्रेसचान्द्रेबहुधर्मकृत्स्यात्॥ जा.भ.8.पु.185.
6. विक्रान्तं कुलमुख्यमस्थिरमतिं वित्तेश्वरं साङ्गिरा। बृ.जा.14.2
7. दृढसौहृदो विनीतस्स्वबन्धुसम्मानकृद्धनेषणश्च।
   गुर्विंद्वो श्शुभशीलस्सुरद्विजेभ्यो हितो भवेत्पुरुषः। सारा.15.10

सदाविनीतः दृढगूढमन्त्रः स्वधर्मकर्माभिरतः परोपकाराऽ दरतैकचित्तः नरः गुरुचन्द्रयोगे भवेदिति ताताचार्यः[1]।

*शुक्रः* : ससितश्चन्द्रः नरं वस्त्राणां क्रियादिकुशलं करोतीति वराहमिहिरः।[2]

स्रग्धौताम्बरयुक्तः क्रियाविधिज्ञः कुलप्रियः अत्यलसः क्रयविक्रयेषु कुशलः शशिभार्गवयोगे नर स्स्यादिति कल्याणवर्मा ।[3]

भार्गवचन्द्रयोगे जनः वस्त्रादिकानां क्रयविक्रयेषु दक्षः वयसनी-विधिज्ञः सुगन्धपुष्पोत्तमवस्त्रचित्तः भवेदिति ताताचार्यः।[4]

*शनिः* : सार्किश्चन्द्रः नरं जनन्युपपतेर्जातं कथयतीति वराहमिहिरः।[5]

जीर्णवधूजनरमणः गजाश्वसम्पादकः निगमशीलः वश्यः विधनः पराजितः शशाङ्कशनियोगे पुरुषः स्यादिति कल्याणवर्मा[6]।

इन्दौ समन्दे जनः नानांगनानां परिसेवनेच्छो वैश्यानुवृत्तिः गतसाधुशीलः परात्मजः पुरुषार्धहीनः भवेदिति ताताचार्यः[7]।

---

1. सदा विनीतो दृढगूढमन्त्रः स्वधर्मकर्माभिरतो नरस्स्यात्।
   परोपकारादरतैकचित्तः शीतद्युतौ वाक्पतिना समेते॥ जा.भ.9, पु.185
2. वस्त्राणां ससितः क्रियादिकुशलो। सार्किः पुनर्भूसुतम्॥ बृ.जा.14.2
3. स्रग्धौताम्बरयुक्तः क्रियाविधिज्ञः कुलप्रियोऽत्यलसः
   क्रयविक्रयेषु कुशल शशिभार्गव स्सदायोगे। सारा.15.11
4. वस्त्रादिकानां क्रयविक्रयेषु दक्षो नरस्याद्वयसनीविधिज्ञः।
   सुगन्धपुष्पोत्तमवस्त्रचित्तो द्विजाधिराजो भृगुजेन युक्ते॥ जा.भ.10.पु.185
5. सार्किः पुनर्भूसुतम्॥ बृ.जा.14.2
6. जीर्णवधूजनरमणो गजाश्वसम्पादकोनिगमशीलः।
   वश्यो विधनः पुरुषः पराजित स्स्या च्छशाङ्कशनियोगे। सारा.15.12
7. नानाङ्गनानां परिसेवनेच्छो वैश्यानुवृत्ति र्गतसाधुशीलः।
   परात्मजस्स्यात्पुरुषार्धहीनः इन्दौसमन्दे प्रवदन्ति सन्तः॥ जा.भ.11.पु.185

## त्रिग्रहयोगः

| चन्द्रसङ्गतग्रहौ | फलितम् |
|---|---|
| **रविकुजौ** : | निर्लज्जः पापरतो यन्त्रज्ञः शतृदारणे शूरः अश्मक्रियासु कुशलः जनो भवति रविचन्द्रकुजयोगे इति कल्याणवर्मा[1]। शूराश्चयन्त्राश्मविधिप्रवीणाः त्रपाकृपाभ्यां सुतरां विहीनाः रविचन्द्र-कुजयोगे मानवाः भवन्तीति ताताचार्यः[2] ॥ |
| **रविबुधौ** : | रविचन्द्रबुधयोगे नरः तेजस्वी निपुणमतिः, शास्त्रकलागोष्ठिपानरतः नृपकृत्यकरो धीरः भवति जन इति कल्याणवर्मा[3]। महौजाः नृपकार्यकर्ता वार्ताविधौ शास्त्रकलासु च दक्षः इति ताताचार्यः[4] |
| **रविगुरू** : | कृद्धः मायानिपुणः सेवाकुशलः विदेशगमनरतः मेधावी चपलमतिः भवति जनो रविचन्द्रबृहस्पतियोगे इति सारावलिकर्ता कल्याणवर्मा[5]। सेवाविधिज्ञः विदेशगामी प्राज्ञः प्रवीणः चपलः अतिधूर्तो भवतीति ताताचार्यः[6]। |

---

1. निर्लज्जः पापरतो यन्त्रज्ञ श्शतृदारणे शूरः।
   अश्मक्रियासुकुशल स्सहस्थितै स्सूर्यशशिभौमैः। सारा.16.1
2. शूराश्चयन्त्राश्मविधिप्रवीणास्त्रपाकृपाभ्यां सुतरां विहीनाः।
   नक्षत्रनाथक्षितिपुत्रमित्रै रेकत्रसंस्थै र्मनुजा भवन्ति ॥ जा.भ.1.पु.186
3. तेजस्वीनिपुणमतिश्शास्त्रकलागोष्ठिपानरतः।
   नृपकृत्यकरो धीरो रविशशिशशिजैस्सहैकस्थैः। सारा.16.2
4. भवेन्महोजानृपकार्यकर्ता वार्ताविधौ शास्त्रकलासु दक्षः।
   दिवामणिज्ञामृतरश्मिसंज्ञैः प्राणी भवेदेकगृहप्रयातैः ॥ जा.भ.2.पु.186
5. कृद्धो मायानिपुण स्सेवाकुशलो विदेशगमनरतः।
   मेधावी चपलमति स्सहस्थितै र्रकशशिजीवैः। सारा. 16.2
6. सेवाविधिज्ञश्च विदेशगामी प्राज्ञः प्रवीणश्चपलोऽतिधूर्तः।
   नरो भवे च्चन्द्रसुरेन्द्रवन्द्यप्रद्योतनानां मिलने प्रसूतौ ॥ जा.भ.3, पु.186

| चन्द्रसङ्गतग्रहौ | फलितम् |
|---|---|
| | स्स्यादिति कल्याणवर्मा चन्द्रकुजगुरुयोगफलम् आह[1]। |
| | व्रणाङ्कितः कोपी हर्ता कान्तारतः कान्तवपुः भवेन्नर इति ताताचार्यः[2]। |
| ***कुजशुक्रौ*** : | दुश्शीलायाः पुत्रः, शीलहीनायाः पतिः, भ्रमणरुचिः, शीतभीतश्च स्यान्नरः चन्द्रकुजशुक्रयोगे इति कल्याणवर्मा [3]। |
| | दुश्शीलापतिः दुश्शीलापुत्रः अस्थिरः अल्पशीलश्चेति ताताचार्यः[4]। |
| ***कुजशनी*** : | बाल्ये मृतजननीकः, क्षुद्रः विषमः जनद्वेषी भवतीति कल्याणवर्मा[5]। |
| | शैशवे मृतजननीकः, सदाकलहान्वितो भवतीति ताताचार्यः[6]। |
| ***बुधगुरू*** : | धनवान् शुभप्रदः वाग्मी तेजस्वी ख्यातिमान् विपुलकीर्तिः बहुपुत्रभ्रातृयुतः चन्द्रबुधगुरुयोगे भवति नर इति कल्याणवर्मा [7]। |

---

1. विनताङ्गः स्त्रीलोलश्चोरः कान्तश्च सम्मतः स्त्रीणाम्।
   भौमशशाङ्कसुरेज्यै रेकस्थै श्चण्डरोषश्च। सारा.16.17
2. व्रणाङ्कितः कोपयुतश्च हर्ता कान्तारतः कान्तवपु र्नरस्स्यात्।
   प्रसूतिकाले मिलिता भवन्ति चेदारनीहारकरामरेज्याः ॥ जा.भ.17, पु.187
3. दुश्शीलायाः पुत्रः पतितश्च तस्यास्सदैवनिर्दिष्टः।
   कुजभृगुशशिभिस्सहितै र्भ्रमणरुचि श्शीतभीतश्च ॥ सारा.16.18
4. दुश्शीलकान्तापति रस्थिर स्स्याद्दुशीलकान्तातनुजोऽल्पशीलः।
   नरो भवेज्जन्मनि चैकभावा भौमास्फुजिच्चन्द्रमसो यदि स्युः ॥ जा.भ.18, पु.188
5. बाल्ये मृतजननीकः क्षुद्रोविषमश्चलोकविद्विष्टः।
   जायेत नरो योगे भूसुतशशिभास्करसुतानाम्। सारा.16.19
6. शैशवे हि जननीमृतिप्रदः सर्वदापि कलहान्वितो भवेत्।
   संभवेविभवेन्दुभूसुताः संयुता यदि नरोऽतिगर्हिताः ॥ जा.भ.19, पु.188
7. धनवान्कल्यो वाग्मी तेजस्वीख्यातिमान्विपुलकीर्तिः।
   बहुपुत्रभ्रातृयुतो बुधेन्दुसुरपूजितै र्युक्तैः ॥ सारा.16.20

| चन्द्रसङ्गतग्रहौ | फलितम् |
|---|---|
| | विख्यातकीर्तिः मतिमान् महौजाः विचित्रमित्रो बहुभाग्ययुक्तः नितरां सद्वृत्तविद्यः बुधचन्द्रबृहस्पतियोगे नरो भवतीति ताताचार्यः[1]। |
| *बुधशुक्रौ* : | विद्यासंस्कृतमतिरपि नीचाचारः सौम्यः धनप्रलुब्धः इति कल्याणवर्मा[2]। विद्याप्रवीणोऽपि नीचवृत्तः, स्पर्धाभिवृद्ध्यां विशेषरुचिः, अर्थलुब्धः स्यान्नरः बुधचन्द्रशुक्रयोगे इति ताताचार्यः[3]। |
| *बुधशनी* : | अस्वस्थः विकलाङ्गः प्राज्ञः वाग्मी पूजितः क्षितिपश्चेति कल्याणवर्मा[4]। कलाकलापामलबुद्धिशाली ख्यातः नितान्तं क्षितीशाभिमतः पुरग्रामपतिः बुधचन्द्रशनियोगे नरस्स्यादिति ताताचार्यः[5]। |
| *गुरुशुक्रौ* : | स्वाधीनतनयः प्राज्ञः कलास्वभिज्ञः बहुश्रुतः साधुः सुभगो भवेदिति कल्याणवर्मा[6]। |

---

1. विख्यातकीर्ति र्मतिमान् महौजा विचित्रमित्रो बहुभाग्ययुक्तः
   सद्वृत्तविद्योऽतितरां नरस्स्यादेकत्रसंस्थै गुरुसोमसौम्यैः। जा.भ.20, पु.188.
2. विद्यासंस्कृतमति रपि नीचाचारः पुमान्भवे ज्जातः।
   सौम्यो धनप्रलुब्धो बुधभार्गवचन्द्रसंयोगे॥ सारा.16.21
3. विद्याप्रवीणोऽपि च नीचवृत्तः स्पर्धाभिवृद्ध्यां च रुचे र्विशेषात्।
   स्यादर्थलुब्धो हि नरः प्रसूतौ मृगाङ्कसौम्यास्फजितां युतिश्चेत्॥ जा.भ.21, पु.188
4. अस्वस्थो विकलाङ्गः प्राज्ञो वाग्मी सुपूजितः क्षितिपः।
   भवति नर स्संयोगे सौरेन्दुशशाङ्कपुत्राणाम्। सारा.16.22
5. कलाकलापामलबुद्धिशाली ख्यातः क्षितीशाभिमतो नितान्तम्।
   नरः पुरग्रामपति र्विनीतो बुधेन्दुमन्दाः सहिताः यदि स्युः॥ जा.भ.22, पु.188
6. साध्वीतनयः प्राज्ञकलास्वभिज्ञो बहुश्रुतस्साधुः।
   भार्गवगुरुशशियोगे जात स्सुभगो भवे त्पुरुषः। सारा.16.23

| चन्द्रसङ्गतग्रहौ | फलितम् |
|---|---|
| | भाग्यवान् चारुकीर्तिः चारुमतिः चारुशीलः गुरुचन्द्रशुक्रयोगे नरः स्यादिति ताताचार्यः[1]। |
| *गुरुशनी* : | शास्त्रार्थतत्वबुद्धिः वृद्धस्त्रीसङ्गतः विगतरोगः ग्रामाधिपतिः इति कल्याणवर्मा [2]। विचक्षणः क्षोणिपतिप्रियः नितान्तं सन्मन्त्रशास्त्रादिकृत् सुवेषः मन्देन्दुसुरेन्द्रवन्द्ययोगे पुरुष स्स्यादिति ताताचार्यः[3]। |
| *शुक्रशनी* : | ग्रन्थलेखकः सद्ग्रन्थवाचकः पुरोधसां दैवज्ञानां वा तनयः स्यादिति कल्याणवर्मा। [4]। पुरोधसो वेदविदां वरेण्यः, पुण्यपरायणः, सत्पुस्तकालोकनलेखनेच्छः नरः स्यादिति ताताचार्यः [5]। |

---

1. भाग्यभाग्भवतिमानव स्सदा चारुकीर्तिमतिवृत्तसंयुतः।
   भार्गवेन्दुसुरराजपूजितः संयुता यदि भवन्ति सम्भवे॥ जा.भ.23.पु.188
2. शास्त्रार्थतत्वबुद्धि वृद्धस्त्री सङ्गतो विगतरोगः।
   शशिवाचस्पतिसौर्यैरेकस्थै ग्रामबृन्दपतिः। सारा.16.24
3. विचक्षणः क्षोणिपतिप्रियश्च सन्मन्त्रशास्त्रादिकृतो नितान्तम्।
   भवेत्सुवेषो मनुजां महौजाः संयुक्तमन्देसुरेन्द्रवन्द्यैः॥ जा.भ.24 पु,188
4. लिपिकरपुस्तवाचकपुरोधसां भवति जन्मसुकृतैश्च।
   दैवविदां पुरुषाणां शशिभार्गवसौरिसंयोगे। सारा.16.25.
5. पुरोधसो वेदविदां वरेण्याः स्युः प्राणिनः पुण्यपरायणाश्च।
   सत्पुस्तकालोकनलेखनेच्छाः कवीन्दुमन्दा मिलिता यदि स्युः॥ जा.भ.25, पु.188

## चतुर्ग्रहयोगः

सारावल्यां चतुःपञ्चषट्ग्रहयोगाः अपि सन्ति। तत्र चन्द्रसम्बन्धिनः ग्रहयोगाः परिशीलयामः

| चन्द्रसङ्गतग्रहाः | फलितम् |
| --- | --- |
| *रविकुजबुधाः* | लिपिकरः तस्करः मुखरः रोगी मायाकुशलो भवति जन्मनि तद्योगे[1]। |
| *रविकुजगुरवः* | धनिकः स्त्रीप्रियः तेजस्वी नीतिमान् विगतशोकः कर्मसमर्थः निपुणश्च भवति जनो जन्मनि रविचन्द्रकुजगुरुयोगे[2]। |
| *रविकुजशुक्राः* | आर्योचितवाग्वृत्तिः सुखभाक् निपुणः अर्थसङ्ग्रहणशीलः विद्यासुतदारोपेतश्च [3]। |
| *रविकुजशनयः* | विषमशरीरी ह्रस्वः निर्धनः अन्नार्थी मूर्खः सर्वस्य गम्यो भवति नरः।[4] |
| *रविबुधगुरवः* | सौवर्णिकः विशालनेत्रः शिल्पकरः महाधनः धीरः नीरुजतनुस्स्यान्नरः। [5] |
| *रविबुधशुक्राः* | विकलः सुभगः वाग्मी ह्रस्वः नृपसम्मतः मनुजस्स्यादेकस्थैः रविचन्द्रबुधशुक्रैः। [6] |

---

1. लिपिकरतस्करमुखरो रोगी मायाप्रपञ्चकुशलश्च।
   बुधरविभौमशशाङ्कै रेकर्क्षगतैः पुमा न्भवति ॥1॥
2. धनवान्वनिताऽनिन्द्यस्तेजस्वी नीतिमान्विगतशोकः।
   कर्मसमर्थो निपुणश्शशिकुजगुरुभास्करै स्समेतैः ॥ 2 ॥
3. आर्योचितवाग्वृत्तिस्सुखभाङ्निपुणोऽर्थसङ्ग्रहणशीलः।
   विद्यासुतदारयुत श्शशिकुजभृगुभास्करै स्सहितैः ॥ 3 ॥
4. विषमशरीरो ह्रस्वो धनरहितो याचिताशनो मूर्खः।
   गम्यस्सर्वस्य तथा रविकुजशशिसौरिसंयोगे ॥ 4 ॥
5. सौवर्णिकः प्लुताक्षः शिल्पकरो वा महाधनो धीरः।
   जात स्स्यान्नीरुजतनु श्शशिज्ञगुरुभास्करै स्सहितैः ॥ 5 ॥
6. विकल स्सुभगो वाग्मी ह्रस्वो नृपसम्मतो मनुजः।
   जात स्स्यादेकस्थै रविशशिबुधभार्गवै र्नियतम् ॥ 6 ॥ सारा.17 अध्यायः

| चन्द्रसङ्गतग्रहाः | फलितम् |
|---|---|
| ***रविबुधशनयः*** : | मातृपितृविप्रयुक्तः धनसौख्यविवर्जितः भ्रमणशीलः भिक्षाशनः अनृतवाक् भवति जनो रविचन्द्रबुधशनियोगे।[1] |
| ***रविगुरुशुक्राः*** : | जलमृगवनानां स्वामी सौख्यभाग् पूज्यः चतुरः रविचन्द्रगुरुशुक्रयोगे भवेन्नरः।[2] |
| ***रविगुरुशनयः*** : | तामसनेत्रः तीक्ष्णः बहुसुतवित्तः स्त्रीप्रियः रविचन्द्रगुरुशनियोगे जनो भवेत्।[3] |
| ***रविशुक्रशनयः*** : | स्त्रीसदृशाचारः अत्यन्तदुर्बलदेहः भीरुः भवति नरो जन्मनि रव्यादियोगे।[4] |
| ***कुजबुधगुरवः*** : | शास्त्रकुशलः नरेन्द्रः सुमहामन्त्रः महाबुद्धिः भवति जन्मनि कुजादियोगे [5]। |
| ***कुजबुधशुक्राः*** : | कलहप्रियः निद्रालुः नीचः वर्धकीपतिः सुभगः बन्धुद्वेष्टा सुखहीनः स्यात्[6]। |
| ***कुजबुधशनयः*** : | शूरः मातृपितृवियुक्तः दुष्कुलजः बहुकलत्रमित्रसुतः सुकर्माभिरतः भवेन्नरः[7]। |

---

1. मातृपितृविप्रयुक्तो धनसौख्यविवर्जितो भ्रमणशीलः।
   भिक्षाऽशनो ऽप्यनृतवाग्रवीन्दुसौम्यार्किभिः सहितैः॥ 7॥
2. सलिलमृगारण्यानां स्वामी स्या त्सौख्यभा ग्भवति पूज्यः।
   शुक्रार्कगुरुशशाङ्कै रेकर्क्षगतैः पुमा न्निपुणः॥ 8॥
3. तामसनेत्रस्तीक्ष्णो बहुसुतवित्तो वराङ्गनासुभगः।
   सूर्येज्यचन्द्रसौरय रेकस्थै र्जायते पुरुषः॥ 9 ॥
4. वनितासदृशाचारपुरस्सरोऽत्यन्तदुर्बलशरीरः।
   भीरु स्सर्वत्र भवे दर्केन्दुसितासितै स्सहितैः॥ 10॥
5. शास्त्रकुशलो नरेन्द्र स्सुमहामन्त्रो ऽथवा महाबुद्धिः।
   शशिकुजसोमजजीवै रेकस्थै र्यः पुमान् जातः॥ 21॥
6. कलहरुचि र्निद्रालु र्नीच स्स्या द्वर्धकीपति स्सुभगः।
   बन्धुद्वेष्टा नसुखी शशिकुजबुधभार्गवै स्सहितैः॥ 22॥
7. शूरो विमातृपितृको दुष्कलजो बहुकलत्रमित्रसुतः।
   भवति सुकर्माभिरत श्शशिकुजबुधसौरि संयोगे॥ 23 ॥ सारा.17 अध्यायः

| चन्द्रसङ्गतग्रहाः | फलितम् |
|---|---|
| ***कुजगुरुशुक्राः*** | विकलाङ्गः सुकलत्रः सकलसहः अतीवमानसंयुक्तः प्राज्ञः बहुमित्रसुखस्स्यात् ।[1] |
| ***कुजगुरुशनयः*** | बधिरः धनवान् शूरः सोन्मादः वाक्पटुः स्थिरप्रकृतिः मतिमान् उदारचित्तः भवति नरो जन्मनि चन्द्रकुजगुरुशनियोगे ।[2] |
| ***कुजशुक्रशनयः*** | कुलटापतिः प्रगल्भः सर्पाक्षः, सततं सोद्वेगः, जनः भवति ।[3] |
| ***बुधगुरुशुक्राः*** | विद्वान् विमातृपितृंकः सद्रूपः धनयुतः सुन्दरः विगतारि र्भवति जनः ।[4] |
| ***बुधगुरुशनयः*** | कृतधर्मः कीर्तिमान् श्रेष्ठः तेजस्वी बन्धुवल्लभः मतिमान् नृपसचिवः प्रवरकवि र्भवति पुरुषः बुधचन्द्रगुरुशनियोगे जन्मनि ।[5] |
| ***बुधशुक्रशनयः*** | परदारगमनशीलः विशीलभार्यः विपन्नबन्धुः प्राज्ञः लोकद्वेष्टा च स्यात् ।[6] |
| ***गुरुशुक्रशनयः*** | मातृहीनः सुभगः चर्मरोगी दुःखी भ्रमणशीलः बहुभाषी सत्यरतः जनः भवति जन्मनि शशिगुरुभृगुसौरियोगे ।[7] |

1. विकलाङ्ग स्सुकलत्र स्सकलसहो ऽतीवमानसंयुक्तः ।
   प्राज्ञो बहुमित्रसुखः शशिकुजगुरुभार्गवै स्सहितैः ॥ 24 ॥
2. बधिरो धनवान्शूर स्सोन्मादो वाक्पटुः स्थिरप्रकृतिः ।
   मतिमा नुदारचित्तो भौमेन्दुशनैश्चरसुरेज्यैः ॥ 25 ॥
3. कुलटापतिः प्रगल्भस्सर्पाक्षो नित्यमेव सोद्वेगः ।
   जातः पुरुषोऽवश्यं कुजेन्दुयमभार्गवै र्भवति ॥ 26 ॥
4. विद्वा न्विमातृपितृक स्सद्रूपो धनयुक्तो ऽतिसुभगश्च ।
   भवति नरो विगतारि र्बुधगुरुशशिभार्गवै स्सहितैः ॥ 27 ॥
5. कृतधर्मकीर्तिरग्र्यस्तेजस्वीबन्धुवल्लभो मतिमान् ।
   नृपसचिवः प्रवरकविश्शशिबुधजीवार्किभिस्सहितैः ॥ 28 ॥
6. परदारगमनो विशीलभार्यो विपन्नबन्धुश्च ।
   प्राज्ञो लोकद्वेष्टा स्या दिन्दुबुधार्किभृगुपुत्रैः ॥ 29 ॥
7. मात्रारहित स्सुभग स्त्वग्दोषी दुखितो भ्रमणशीलः ।
   बहुभाषी सत्यरत श्शशिगुरुभृगुसौरिभि स्सहितैः ॥ 30 ॥ सारा.-17 अध्यायः ।

**पञ्चग्रहयोगः**

| चन्द्रसङ्गतग्रहाः | | फलितम् |
|---|---|---|
| *रविकुजबुधगुरवः* | : | दुःखी बहुप्रपञ्चः जायावियोगतप्तदेहश्च भवति पुमान् जन्मनि रविचन्द्रादियोगे।[1] |
| *रविकुजबुधशुक्राः* | : | परकर्मरतः बन्धुसुहृद्विरोधी नपुंसकसखश्च भवति जनः।[2] |
| *रविकुजबुधशनयः* | : | अल्पायुः बन्धनभाग् दीनः सर्वसुखहीनः कलत्रसुतधन-वियुक्तो भवति[3]। |
| *रविकुजगुरुशुक्राः* | : | जात्यन्धः बहुदुःखी मातृपितृसंत्यक्तः गेयरुचि र्नरस्स्यात्।[4] |
| *रविकुजगुरुशनयः* | : | युद्धकुशलः परवित्तहरः परोपतापी पिशुनः समर्थश्च नरस्स्यात्।[5] |
| *रविकुजशुक्रशनयः* | : | मानार्थविभवहीनः मलिनाचारः पराङ्गनातिरतश्च नरस्स्यात्।[6] |

---

1. दुःखी बहुप्रपञ्चो जायाविरहेण तापितशरीरः।
   भवति पुमा नेकस्थै रवीन्दुकुजजीवचन्द्रसुतैः॥ 1॥
2. परकर्मरतो नित्यं बन्धुसुहृद्भिकृतो विगतसत्वः।
   क्लीबै र्यातिचसख्यं रवीन्दुकुजशुक्रसौम्यै श्च॥ 2॥
3. अल्पायु र्बन्धनभाग्दीनो भवतीह सर्वसुखहीनः।
   अकलत्रो ऽसुतवित्त स्सौरिदिवाकरबुधेन्दुकुजैः॥ 3 ॥
4. जात्यन्धो बहुदुःखी मातृपितृभ्यां सदैव संत्यक्तः।
   भवति नरो गेयरुचिः कुजेन्दुगुरुभार्गवार्कैश्च॥ 4॥
5. युद्धकुशल स्समर्थः परवित्तहरः परोपतापी च।
   पिशुन श्चलश्च पुरुष श्शनिशशिकुजजीवदिवसेशैः॥ 5॥
6. मानार्थविभवहीनो मलिनाचारः पराङ्गनातिरतः।
   पञ्चभिरेकस्थै र्दिनेशशशिशुक्रशनिभौमैः॥ 6॥ सारा.-18 अध्यायः।

| चन्द्रसङ्गतग्रहाः | फलितम् |
|---|---|
| ***रविबुधगुरुशुक्राः*** : | यन्त्रज्ञः बहुविभवः नृपसचिवः दण्डनायकः ख्यातः शुभकीर्तिमान् स्यात्।[1] |
| ***रविबुधगुरुशनयः*** : | भीरुः प्रियसंत्यक्तः सोन्मादः वञ्चनानिपुणः उग्रः परान्नभोजी भवेत्।[2] |
| ***रविबुधशुक्रशनयः*** : | दीर्घः रोमशगात्रः मरणोत्साही सुखधनसुतहीनः मनुजः भवेत्।[3] |
| ***रविगुरुशुक्रशनयः*** : | वाग्मी इन्द्रजालनिरतः चलचित्तः स्त्रीप्रियः मतिमान् बहुशत्रुः निर्भयः।[4] |
| ***कुजबुधगुरुशुक्राः*** : | साधुः कल्यशरीरः विद्याधनसौख्यसत्यसम्पन्नः बन्धुहितः बहुमित्रः।[5] |

---

1. यन्त्रज्ञो बहुविभवो नृपसचिवो दण्डनायको वास्यात्।
   ख्यात श्शुभकीर्तियुतो बुधेन्दुरविजीवशुक्रै श्च ॥ 7 ॥
2. भीरुः प्रियसंत्यक्त स्सोन्मादो वञ्चनासु निपुणश्च।
   उग्रवरान्नभोजी बुधेन्दुगुरुसूर्यरविपुत्रैः ॥ 8 ॥
3. दीर्घो रोमशगात्रो मरणोत्साही सुखार्थसुतहीनः।
   स्या त्पञ्चभिरेकस्थै रविचन्द्रबुधार्किभृगुपुत्रैः ॥ 9 ॥
4. वाग्मीन्द्रजालनिरत श्चलिचित्त स्त्रीषुवल्लभो मतिमान्।
   बहुशत्रु र्विगतभयो रवीन्दुगुरुशुक्रभानुसुतैः ॥ 10 ॥
5. साधुः कल्यशरीरो विद्याधनसौख्यसत्यसम्पन्नः।
   बन्धुहितो बहुमित्रो बुधेन्दुकुजजीवभृगुपुत्रैः ॥ 16 ॥ सारा.-18 अध्यायः।

| चन्द्रसङ्गतग्रहाः | फलितम् |
|---|---|
| *कुजबुधगुरुशनयः* : | रात्र्यन्धः दरिद्रः अन्नार्थी सदा दीनः बन्धुवर्गमालिन्यकरः भवेत्।[1] |
| *कुजबुधशुक्रशनयः* : | वधबन्धनरोगार्तः विद्वान् लोके सुपूजितः निस्स्वः विकलशरीरः।[2] बहुशत्रुमित्रपक्षः परार्थहितकृत् विषमशीलः मानवान् भवति।[3] |
| *कुजगुरुशुक्रशनयः* : | प्रेष्यः मूर्खः क्लीबः मलिनाचारः अतिदुर्भगः विकलः धनहीनः।[4] |
| *बुधगुरुशुक्रशनयः* : | नृपमन्त्री नृपतिसमः गणनाथः सर्वलोकपूज्यश्च भवति नरः[5]। |

1. तिमिरामयी दरिद्रः परान्नमभियाचते सदाहीनः।
   मलिनयति बन्धुवर्गं कुजार्किबुधजीवहिमकिरणैः॥ 17॥
2. वधबन्धनरोगार्तो विद्वान् लोके सुपूजितो भवति।
   निस्स्वो विकलशरीरः कुजशशिबुधशुक्रमन्दै स्स्यात्॥ 18॥
3. बहुशत्रुमित्रपक्षः परार्थहितकृ द्विषमशीलः।
   एकस्थै रतिमानी बुधेन्दुकुजशुक्ररविपुत्रैः॥ 19॥
4. प्रेष्यो मूर्खः क्लीबो मलिनाचारो ऽतिदुर्भगो विकलः।
   भवति नरो धनरहित श्शशिकुजगुरुशुक्ररवितनयैः॥ 20॥
5. नृपमन्त्री नृपतिसमो गणनाथ स्सर्वलोकपूज्यश्च।
   एकर्क्षे भवति नरश्चन्द्रेन्दुजजीवशनिशुक्रैः॥ 21॥ सारा.-18 अध्यायः।

## षड्ग्रहयोगः

| चन्द्रसङ्गतग्रहाः | फलितम् |
|---|---|
| *रविकुजबुधगुरुशुक्राः* | : विद्याधनधर्मरतः क्षामः बहुभाषकः विशिष्टमतिः भवेत्पुरुषः ।[1] |
| *रविकुजबुधगुरुशनयः* | : दाता परोपकारी चलस्वभावः विशुद्धसत्वश्च भवति पुरुषः ।[2] |
| *रविकुजबुधशुक्रशनयः* | : चोरः पददाररतः कुष्ठी स्वजनैर्निराकृतः मूर्खः स्थानभ्रष्टः विसुतश्च ।[3] |
| *रविकुजगुरुशुक्रशनयः* | : नीचः परकर्मरतः क्षयरोगी कामरोगी बन्धूनां निन्द्यस्स्यात् नरः ।[4] |
| *रविबुधगुरुशुक्रशनयः* | : नृपस्य मन्त्री सुभगः क्षान्तियुतः अकलत्रः निर्धनः शोकपरितप्तश्च स्यात् ।[5] |
| *कुजबुधगुरुशुक्रशनयः* | : सदाशुचिः प्रतापी बहुस्त्रीरतः नृपप्रियः मन्त्री धनसुतसौभाग्यवान् भवेत् ।[6] |

---

1. विद्याधनधर्मरतः क्षामो बहुभाषको विशिष्टमतिः ।
   एकभवनोपयातै बुर्धेन्दुरव्यारगुरुशुक्रैः ॥ 1 ॥
2. दाता परकार्यकर श्चलस्वभावो विशुद्धसत्त्वश्च ।
   रमते विजनोद्देशे रवीन्दुवक्रज्ञगुरुरविजैः ॥ 2 ॥
3. चोरः परदाररतः कुष्ठीस्वजनै र्निराकृतो मूर्खः ।
   स्थानभ्रष्टो विसुतो बुधेन्दुरव्यारशनिशुक्रैः ॥ 3 ॥
4. नीचः परकर्मरतः क्षयरोगी श्वासकासपरिभूतः ।
   निन्द्यस्स्याद् बन्धूनां सितेन्दुरव्यारगुरुरविजैः ॥ 4 ॥
5. मन्त्री नृपस्य सुभगः क्षान्तियुतो भवति शोकपरितप्तः ।
   अकलत्रो धनरहितो रवीन्दुबुधजीवसितसौरैः ॥ 5 ॥
6. नित्यं शुचिः प्रतापी बहुयुवतिरतो नृपप्रियो मन्त्री ।
   धनसुतसौभाग्ययुतः कुजार्किसितचन्द्रबुधजीवैः ॥ 7 ॥ सारा.19 अध्यायः

"कथितफलैः परतो विकल्पनीयाः"[1] इति वराहमिहिरः द्व्यधिकग्रहयोगे फलविकल्पं जगाद। अर्थात् रविचन्द्रकुजयोगे रविचन्द्रयोगफलं रविकुजयोगफलं समीकृत्य वक्तव्यम्। पापान्विते शीतरूचौ मातुरभावः प्रकीर्तितः। सूर्ये तु पितुः[2]। शुभान्विते जन्मनि शीतरश्मौ तु मनुजः यशोऽर्थभूकीर्तिविवृद्धिलब्धिं स्वकुलप्रदीपतां च श्रेष्ठं प्रतिष्ठं नृपगौरवं भूमण्डलमण्डनं चोपगच्छति[3]। प्रायः द्व्यधिकपापग्रहयोगे नरः लोकनिन्दितः दारिद्र्यदुःखपरितप्तः कुरूपो भवति[4]। अपि च प्रायशः षट्पञ्चसंयुतै र्ग्रहैः वीक्षितै र्वा मनुजः दरिद्रः दुःखी मूर्खः भवतीति ज्योतिर्विदां वचनम्[5]।

## चान्द्रयोगाः – अधियोगः

चन्द्रस्य षष्टाष्टमसप्तमस्थानेषु स्थितैः सौम्यैः बुधगुरुशुक्रैः अधियोगो भवति[6]। एषु स्थानेषु एकस्मिन् वा स्थानद्वये वा स्थानत्रये वा सकलशुभग्रहयोगः अधियोग इति विज्ञायते। श्रुतकीर्तिरेनं योगं सप्तधा व्याचकार। स हि "निधनं द्यूनं षष्ठं चन्द्रस्थानाद्यदा शुभै र्युक्त मधियोग स्स प्रोक्तो न्यासकृतौ सप्तधा पूर्वैः।" इति जगाद[7]। ते हि योगाः एवम् – चन्द्रस्य षष्ठस्थाने सकलशुभग्रहयोगः प्रथमः, सप्तमस्थाने

---

1. बृ.जा.14.5
2. पापैर्युक्ते श्चन्द्रे मातुरभावः प्रकीर्तितः प्रायः।
   सूर्ये पितु स्तथान्यै श्शुभं वदेन्मिश्रितै र्मिश्रम्॥ सारा.16.36, जा.भ.पु.189
3. शुभान्वितै र्जन्मनि शीतरश्मि र्यशोऽर्थभूकीर्तिविवृद्धिलब्धिम्।
   करोति जातं स्वकुलप्रदीपं श्रेष्ठं प्रतिष्ठं नृपगौरवेन॥ सारा.16.37, जा.भ.पु.189
4. पापास्त्रयोऽपि मिलिता कुर्वन्ति नरं सुदुर्भगं लोके।
   दारिद्र्यदुःखतप्तं गर्हितरूपं विनयेन हीनम्॥ सारा.16.38
5. प्रायो दरिद्रः दुःखी मूर्खःषट्पञ्चसंयुतै र्विहगैः।
   अन्योन्यदर्शनादपिफलमेतत्कन्दलाः प्राहुः॥ सारा.19.8
6. सौम्यैस्स्मरारिनिधनेष्वधियोग इन्दोस्तस्मिंश्चमूपसचिवक्षितिपालजन्म।
   सम्पन्नसौख्यविभवाहतशत्रवश्च दीर्घायुषो विगतरोगभयाश्च जाताः॥ बृ.जा.13.2
7. बृ.जा.व्या.पु.251

योगस्तु द्वितीयः, अष्टमस्थाने तु तृतीयः, षट्सप्तमस्थानयोश्चतुर्थः, षडष्टमस्थानयोः पञ्चमः, सप्ताष्टमस्थानयोः षष्ठः, षट्सप्ताष्टमस्थानेषु शुभग्रहयोगे तु सप्तमः अधियोग इति विज्ञायते। एवमेव पापग्रहयोगे पापाधियोग इति, मिश्रयोगे "मिश्रयोग" इति श्रुतकीर्तिः "षट्सप्ताष्टमसंस्थैश्चन्द्रात्सौम्यैश्शुभोऽधियोगस्स्यात्। पापः पापैरेवं मिश्रैर्मिश्रस्तथैवोक्तः" इति प्रावोचत्[1]। अयं राजयोग इति माण्डव्यकल्याणवर्माणौ।

तौ हि – "षष्ठं द्यूनमथाष्टमं शिशिरगोः प्राप्तास्समस्ताश्शुभाः
क्रूराणां यदि गोचरे न पतिता भान्वालयाद्दूरतः।
भूपालः प्रभवेत्स यस्यजलधे र्वेलावनान्तोद्भवै
स्सेनामत्तकरीन्द्रदानसलिलं भृङ्गै र्मुहुः पीयते॥ सारा.35.21

अमित्रं जामित्रं निधनमथवाशीतरुचितो गतास्सर्वे सौम्यास्तमिहजनयेयु र्नरपतिम्।
घृतेनेवानेकं गतवति विषादे तु पयसा प्रतापाग्निर्यस्य ज्वलति हृदये शत्रुषु भृशम्॥
माण्डव्यः[2]।

अस्मिंश्चाधियोगे जातः जनः चमूपतिः सचिवः क्षितिपालो वा भवति। अस्मिन् योगे जाताः राजानस्तु सम्पन्नसौख्यविभवाः हतशत्रवः दीर्घायुषः रोगभयवर्जिताः जायन्ते।

## सुनफायोगः

सूर्यं हित्वा शीतांशो र्द्वितीयस्थाने कुजादिपञ्चग्रहा स्सन्ति चेत् स हि योगः सुनफायोगः उच्यते[3]। "रविवर्जं द्वादशगैरनफा चन्द्रात् द्वितीयगै स्सुनफा। उभयस्थितै र्दुरुधुरा केमद्रुमसंज्ञितोऽन्यः ॥" इति लघुजातके मिहिरः[4]। "चन्द्राच्चतुर्थगैःसुनफा"

---

1. बृ.जा.व्या.पु.252
2. बृ.जा.व्या.पु.252
3. हित्वार्कं सुनफाऽनफादुरुधुरास्वांत्योभयस्थैर्ग्रहैः।
   शीतांशोःकथितोऽन्यथा तु बहुभिः केमद्रुमोन्यैस्त्वसौ।
   केन्द्रे शीतकरेऽथवा ग्रहयुते केमद्रुमो नेष्यते।
   केचित्केन्द्रनवांशकेषु च वदन्त्युक्तिप्रसिद्धा न ते॥ बृ.जा.13.3
4. बृ.जा.व्या.पु.254

इति श्रुतकीर्तिः[1]। "यद्राशिसंज्ञे शीतांशु र्नवांशे जन्मनि स्थितः। तद्द्वितीयस्थितै र्योग स्सुनफाख्यः प्रकीर्तितः" इति जीवशर्मा[2]। एष हि योगः कुजादिग्रहाणामेकैकत्रयचतुष्टयपञ्चानां क्रमेण संस्थापनलक्षणेच्छाविकल्पैः त्रिंशत्स्वरूपो भवति[3]। अस्मिन् योगे जातः पुमान् स्वयमधिगतवित्तः पार्थिव स्तत्समो वा धीयुक्तः धनवान् ख्यातिमांश्च भवति।[4]

## अनफायोगः

पूर्वोक्तग्रहस्थिति श्चन्द्रात् द्वादशगे यदि भवति तर्हि अनफायोगः भवेत्। "दशमस्थितैः कीर्तितोऽनफा विहगैः" इति श्रुतकीर्तिः[5]। "द्वादशैरनफा ज्ञेया" इति जन्मनि चन्द्रनवांशराशे र्द्वादशस्थानगतैः कुजादिभिः योगोऽयं कथ्यते जीवशर्मणा[6]। एषश्च योगः कुजादिग्रहैकैकादिसंस्थापनलक्षणेच्छाविकल्पैः त्रिंशत्स्वरूपः भवति[7]। अनफायोगे जातः पुरुषः प्रभुः अगदशरीरः शीलवान् ख्यातकीर्तिः विषयसुखोपेतः सुवेषः मनोदुःखविवर्जित स्स्यात्[8]।

## दुरुधुरायोगः

पूर्वोक्तरविवर्जितग्रहस्थितिः चन्द्रात् द्वितीयद्वादशस्थानयो र्यदि भवेत् तर्हि दुरुधुरायोगो भवति। श्रुतकीर्तिस्तु "उभयस्थितै र्दुरुधुरा" इति चतुर्थदशमस्थितैः कुजादिग्रहैर्दुरुधुरायोगं जगाद[9]। जीवशर्मा तु चन्द्रनवांशराशे र्द्विद्वादशस्थितैः रविवर्जितग्रहै रेनं योगं प्रोवाचैवम् "ग्रहै र्द्विद्वादशस्थितैः प्रोक्तो दुरुधुरायोगः" इति[10]। ग्रहेच्छाविकल्पैरस्य प्रभेदाः अशीत्युत्तरशतमिति मिहिरः[11]। अस्मिन् योगे जातो नरः

---

1.2.बृ.जा.व्या.पु.254

3. त्रिंशत्स्वरूपास्सुनफानफाख्याष्षष्टित्रयं दौरुधुरप्रभेदाः।
   इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिः॥ बृ.जा.13.4

4. स्वयमधिगतवित्तः पार्थिव स्तत्समो वा
   भवति हि सुनफायां धीधनख्यातिमांश्च। बृ.जा.13.5 पूर्वार्धः।

5.6.7.8. बृ.जा.व्या.पु.254 9.10.बृ.जा.13.4

11. प्रभुरगदशरीरश्शीलवान्ख्यातकीर्ति
    र्विषयसुखसुवेषो निर्वृतश्चानफायाम्॥ बृ.जा.13.5 उत्तरार्धः।

सकलविधभोगै र्विराजमाणः, धनवाहनाढ्यः, वितरणगुणवान्, सुभटश्च भवति[1]।

## केमद्रुमयोगः

चन्द्रात् द्वितीये व्यये च सूर्यव्यतिरिक्तग्रहाभावे केमद्रुमयोगो भवति।

''व्ययार्थकेन्द्रगश्चन्द्रात् विना भानुं न चेद्ग्रहः

कश्चित्स्याद्वा विना चन्द्रं लग्नात्केन्द्रगतोऽथवा।

योगः केमद्रुमो नाम तदा स्याद्यत्रगर्हिताः

भवन्ति निन्दिताचाराः दारिद्यापत्तिसंयुताः''॥[2] इति गार्गिः लग्नात्केन्द्रेष्वपि रविव्यतिरिक्तग्रहाभावे केमद्रुमयोगमङ्गीचकार। कल्याणवर्मा तु ''एतेन यदा योगाः, केन्द्रग्रहवर्जितश्शशाङ्कश्च। केमद्रुमोऽतिकष्ट श्शशिनिसमस्तग्रहादृष्टे॥''[3] इति चन्द्रस्य द्वितीयद्वादशकेन्द्रेषु कुजादिग्रहाभावे तै र्वीक्षणाभावे केमद्रुमयोगं जगाद। श्रुतकीर्तिस्तु चन्द्रस्य चतुर्थदशमस्थानयोः कुजादिग्रहाभावे केमद्रुमयोगं जगादैवम् - ''केमद्रुमसंज्ञितोऽन्यथा योगः'' इति [4]। चन्द्रनवांशस्थानस्य द्विद्वादशस्थानयोः रविवर्जितग्रहाभावे ''अन्यथा केमद्रुमः स्मृतः'' इति[5] जीवशर्मा केमद्रुमयोगं कथयति। अस्मिन् नृपवंशजातोऽपि मलिनः दुःखितः नीचः निर्धनः प्रेष्यः खलश्च भवति।[6]

एषु योगेषु सामान्यं फलं प्रोक्तम्। ग्रहवशेन विशेषफलमेवं भवति। एतेषां योगानां कारकः कुजश्चेत् जनः उत्साहशौर्यधनसाहसोपेतः भवति। सौम्यश्चेत् नरः समर्थः वाक्यचतुरः कलासु निपुणो भवति। यदि गुरु स्तर्हि धर्मार्थसुखभुक् नृपपूजितश्च भवति। शुक्रो यदि कारकः तर्हि मनुजः कामी बहुधनः विषयोपभोक्ता भवति[7]। कारको यदि रवितनयः तर्हि मनुजः परविभवस्य परेषां गृहवस्त्रवाहनपरिवाराणामुपभोक्ता भवति। बहुकार्यकृत् गणैश्च नरस्सञ्जायते तदा। अह्निजातस्य चन्द्रः दृश्यचक्रार्थश्चेत्

---

1. उत्पन्नभोगसुखभुग्धनवाहनाढ्यस्त्यागान्वितोदुरुधुराप्रभवस्सुभृत्यः। बृ.जा.13.6पू.
2. बृ.जा.व्या.पु. 253 3. सारा.13.2 4.5 बृ.जा.व्या.पु.254
6. केमद्रुमे मलिनदुःखितनीचनिस्स्वाः प्रेष्याः खलाश्च नृपतेरपि वंशजाताः॥

बृ.जा.13.6 उ.

7. उत्साहशौर्यधनसाहसवान् महीजः सौम्यः पटुः सुवचनो निपुणः कलासु।
जीवोऽर्थधर्मसुखभुङ्नृपपूजितश्च कामी भृगु र्बहुधनो विषयोपभोक्ता॥ बृ.जा.13.7

दारिद्र्यादि दुःखफलदाता भवति। अदृश्यचक्रार्थगतश्चेत् जनस्य अह्निजातस्य चन्द्रः सकलैश्वर्यादिशुभप्रदाता भवति। उक्तव्यतिरिक्ते व्यतिरिक्तफलवान् भवति[1]। लग्नात् चन्द्रलग्नाद्वा उपचयोपगतैस्समस्तै श्शुभग्रहैः बुधगुरुशुक्रैः क्रमेणातीववसुमान् वसुमान् वा भवति। उभयत्र द्वाभ्यां ग्रहाभ्यां तु अल्पवसुमान्, एकेन ग्रहेण तु स्वल्पधनवान् उपचयस्थाने शुभग्रहाभावे नरः दरिद्रः भवति। लग्नोपचय चन्द्रोपचयस्थानयो श्शुभग्रहैः मनुजः महान् धनिकः भवति। एष योगः केमद्रुमयोगदुष्फलमपि न्यूनीकरोति[2]।

## अर्धचन्द्रयोगः

नाभासयोगादिषु अर्धचन्द्रयोगो नाम कश्चन योगोऽस्ति। अत्र चन्द्रग्रहस्य प्रत्येकतया सम्बन्धाभावेऽपि राशिचक्रे द्वादशभावमारभ्य षष्ठमभावपर्यन्तं सर्वग्रहाणां स्थित्या अर्धचन्द्राकृतेः स्फुरणात् एष योगः अर्धचन्द्रयोगः कथितः। अनेन योगेन जनः सर्वजनप्रियः मनोहरः सर्वजनमुख्यश्च भवति[3]।

## चन्द्रसम्बन्धि राजयोगाः

वराहमिहिरोक्तेषु द्वात्रिंशद्राज्ययोगेषु षोडश चन्द्रसम्बन्धिन स्सन्ति। ''द्व्येकाश्रितेषु च तदैकतमे विलग्ने स्वक्षेत्रगे षोडश भूमिपा स्स्युः।'' बृ.जा. 11.2 इत्यत्र द्व्येकाश्रितेषु पदे ''द्व्याश्रितेषु-एकाश्रितेषु'' इति आश्रितशब्दस्य प्रत्येकतया सम्बन्धः सम्पद्यते। तथा सति चन्द्रे स्वक्षेत्रे कर्काटके कुजशनिगुरुषु ग्रहद्वये उच्चगे तयोरन्यतरे लग्नगते द्वादशराजयोगाः भवन्ति। एवं चन्द्रे स्वक्षेत्रे सति रविगुरुकुजशनिष्वेकतमे स्वोच्चगे लग्नगते सति राजयोगचतुष्टयं भवति। पश्यत्वधः षोडशराजयोगरेखाचित्रम्।

---

1. परविभवपरिच्छदोपभोक्ता रवितनये बहुकार्यकृद्गणेशः।
   अशुभकृदुडुपोऽह्निदृश्यमूर्ति र्गलिततनुश्च शुभोऽन्यथान्यदूह्यम्॥ बृ.जा. 13.8
2. लग्नादतीव वसुमान्वसुमांच्छशाङ्का त्सौम्यग्रहैरुपचयोपगतै स्समस्तैः।
   द्वाभ्यां समोऽल्पवसुमांश्च तदूनताया मन्येष्वसत्स्वपि फलेष्विदमुत्कटेन॥
   बृ.जा. 13.9
3. नौकूटच्छत्रचापानि तद्वत्सप्तर्क्षसंस्थितैः। अर्धचन्द्रस्तु नावाद्यैः प्रोक्तादन्यर्क्षसंस्थितैः॥
   अर्धेन्दुजस्सुभगकान्तवपुः प्रधानः॥ बृ.जा. 12.8, 17.

## षोडशराजयोगरेखाचित्रम्

| | र ल | | |
|---|---|---|---|
| | 1 | | गु चं |
| | | | |
| | | | |

| | | | |
|---|---|---|---|
| | 2 | | गु चं ल |
| | | | |
| | | | |

| | र ल | | |
|---|---|---|---|
| | 3 | | चं |
| | | | |
| | | श | |

| | र | | |
|---|---|---|---|
| | 4 | | चं |
| | | | |
| | | श ल | |

| | र ल | | |
|---|---|---|---|
| | 5 | | चं |
| कु | | | |
| | | | |

| | र | | |
|---|---|---|---|
| | 6 | | चं |
| कु ल | | | |
| | | | |

| | | | |
|---|---|---|---|
| | 7 | | गु चं ल |
| | | | |
| | | श | |

| | | | |
|---|---|---|---|
| | 8 | | गु चं |
| | | | |
| | | श ल | |

| | | | |
|---|---|---|---|
| | 9 | | गु चं ल |
| कु | | | |
| | | | |

| | | | |
|---|---|---|---|
| | 10 | | गु चं |
| कु ल | | | |
| | | | |

| | | | चं |
|---|---|---|---|
| | 11 | | |
| कु | | | |
| | | श ल | |

| | | | |
|---|---|---|---|
| | 12 | | चं |
| कु ल | | | |
| | | श | |

| | र ल | | |
|---|---|---|---|
| | 13 | | चं |
| | | | |
| | | | |

| | | | |
|---|---|---|---|
| | 14 | | गु चं ल |
| | | | |
| | | | |

| | | | |
|---|---|---|---|
| | 15 | | चं |
| | | | |
| | | श ल | |

| | | | |
|---|---|---|---|
| | 16 | | चं |
| कु ल | | | |
| | | | |

वर्गोत्तमगते चन्द्रे चन्द्रवर्जितैः चतुराद्यैर्ग्रहै र्दृष्टे द्वाविंशति राजयोगाः सिद्ध्यन्ति[1]। यथा वर्गोत्तगतं चन्द्रं प्रति रविबुधकुजगुरु दृष्ट्या प्रथमः। रविकुजबुधशुक्रदृष्ट्या द्वितीयः। रविकुजबुधशनिदृष्ट्या तृतीयः। रविकुजगुरुशुक्रदृष्ट्या

1. वर्गोत्तमगते लग्ने चन्द्रे वा चन्द्रवर्जितैः। चतुराद्यैर्ग्रहैर्दृष्टे नृपा द्वाविंशति स्मृताः। बृ.जा.11.3

चतुर्थः। रविकुजगुरुशनिदृष्ट्या पञ्चमः। रविकुजशुक्रशनिदृष्ट्या षष्ठः। रविबुधगुरुशुक्रदृष्ट्या सप्तमः। रविबुधगुरुशनिदृष्ट्या अष्टमः। रविबुधशुक्रशनिदृष्ट्या नवमः। रविगुरुशुक्रशनिदृष्ट्या दशमः। कुजबुधगुरुशुक्रदृष्ट्या एकादशः। कुजबुधगुरुशनिदृष्ट्या द्वादशः। कुजबुधशुक्रशनिदृष्ट्या त्रयोदशः। कुजगुरुशुक्रशनिदृष्ट्या चतुर्दशः। बुधगुरुशुक्रशनिदृष्ट्या पञ्चदशः। एते चतुर्ग्रहदृष्ट्या सिद्धाः योगाः। एवं वर्गोत्तमगतं चन्द्रं प्रति पञ्चग्रहवीक्षणात् षड्योगाः सिद्ध्यन्ति। तथाहि- रविकुजबुधशुक्रशनिदृष्ट्या प्रथमः। रविकुजबुधगुरुशनिदृष्ट्या द्वितीयः। रविकुजबुधशुक्रशनिदृष्ट्या तृतीयः। रविकुजगुरुशुक्रशनिदृष्ट्या चतुर्थः। रविबुधगुरुशुक्रशनिदृष्ट्या पञ्चमः। कुजबुधगुरुशुक्रशनिदृष्ट्या षष्ठः। एवं वर्गोत्तमगतं चन्द्रं प्रति षट्ग्रहदृष्ट्या एको योगः सिद्ध्यति। ते हि ग्रहाः रविकुजबुधगुरुशुक्रशनयः। सर्वेप्येते योगाः समीकृत्य द्वाविंशति भवन्ति। द्वाविंशत्यप्येते योगाः द्वादशराशिषु प्रत्येकतया चन्द्रस्य वर्गोत्तमस्थितिमनुसृत्य 22X12=264 भवन्ति। माण्डव्यस्तु सप्रभेदमेनं योगं एकत्वेनैव स्वीकृतवान्[1]।

कुम्भे शनौ, मेषे रवौ, वृषमे चन्द्रे, मिथुने बुधौ, सिंहे बृहस्पतौ, वृश्चिके कुजे विद्यमाने जन्मलग्नं यदि कुभ्मराशि स्तर्हि एकः, मेषश्चेदन्यः, वृषभश्चेत्तृतीयः इति योगत्रयं भवति[2]। तुलायां शनिशुक्रौ, वृषभे चन्द्रः, कन्यायां रविबुधौ, मेषे कुजः, कर्काटके बृहस्पतिरित्येतेषां ग्रहाणां स्थितौ सत्यां जन्मलग्नं तुला चेदेकः राजयोगः, वृषभश्चेदन्य इति योगद्वयं सम्भवति[3]। कुजे स्वोच्छे मकरे, सूर्यचन्द्रौ धनुषि, शनैश्चरः जन्मलग्ने मकरे भवन्ति यदि स हि राजयोगः भवति। जन्मलग्ने मकरे कुजचन्द्रौ धनुषि रविः भवन्ति तर्हि जातो नरो नरपति र्भवेत्। जन्मलग्ने मेषे रवौ, धनुषि गुरौ, तुलायां शनिचन्द्रौ सत्सु जातः जनः जननाथः भवेत्[3]।

---

1. विलग्नभवनंगतेबलयुते च वर्गोत्तमे चतुः प्रभृतिभिर्ग्रहै श्शशिनि वा समालोकिते।
न संभवति पार्थिवः पटुकृपाणपाणी रणे कदाचिदपि वीक्षते रिपुजनो न यस्याननम्॥ बृ.जा.व्या.पु.218
2. यमेकुम्भेऽर्केऽजेगविशशिनितैरेवतनुगैर्नृयुक्सिंहालिस्थैश्शशिजगुरुवक्त्रैर्नृपतयः।
यमेन्दुतुङ्गेऽगेसवितृशशिजौषष्ठभवनेतुलाजेन्दुक्षेत्रैस्ससितकुजजीवैश्चनरपौ॥ बृ.जा.11.4
3. कुजे तुङ्गेऽर्केन्द्वोर्धनुषि यमलग्ने च कुपतिः पतिर्भूमेश्चान्यः क्षितिसुतविलग्ने सशशिनि।
सचन्द्रे सौरेऽस्ते सुरपतिगुरौ चापधरगे स्वतुङ्गस्थे भानावुदयमुपयाते क्षितिपतिः॥ बृ.जा.11.5

जन्मलग्ने वृषभे चन्द्रे, सिंहे रवौ, वृश्चिके गुरौ, कुम्भे शनौ सत्सु जातः मानवः निश्चयेन मानवपति र्भवति[1]। जन्मलग्ने मकरे शनौ, मीने चन्द्रे, मिथुने कुजे, कन्यायां बुधे, धनुषि गुरौ जातः पृथुलशौर्ययशोभ्यामुपेतः राजश्रेष्ठः भवति[2]। धनुषि गुरुचन्द्रौ, मकरे कुजे, जन्मलग्ने मीने शुक्रे सत्स्वेवं ग्रहेषु जातः नृपति र्भवति। एवं गुरुचन्द्रकुजयोगे जन्मलग्नकन्यायां बुधे सति राजयोगः भवति। जन्मलग्नकन्यायां बुधे पञ्चमस्थाने कुजशनौ, चतुर्थे गुरुचन्द्रशुक्राः भवन्ति यदि सोऽपि राजयोग स्स्यात्। अस्मिन् योगे जातः नृपेतरवंशगतोऽपि गुणवान् राज्याधिपति र्भवेत्[3]। विलग्ने मीने चन्द्रे सति कुम्भमकरसिंहेषु क्रमेण शनिकुजरविषु स्थितेषु जातो मनुजः वसुधां शास्ति[4]। कर्किणि लग्ने तत्स्थे जीवे चन्द्रसितज्ञैरायप्राप्तैः मेषगतेऽर्के जातं विक्रमयुक्तं पृथ्वीनाथं विन्द्यात्[5]। मकरे विलग्ने मन्दे सति मेषे कुजः, कुलीरे चन्द्रः, सिंहे सूर्यः, मिथुने बुधः, तुलायां शुक्रः भवेयु र्यदि पुमान् पृथुयशाः पुथिवीशः भवति[6]। स्वोच्चसंस्थे लग्ने बुधे सति दशमे भृगौ, सजीवे निशानाथे सप्तमे, पञ्चमे शनिकुजौ भवेयु स्तर्हि जातः राजा भवति[7]। एते क्षत्रियेतरवंशजातानामपि राजाधिकारप्रापकाः योगाः[8]।

---

1. वृषे सेन्दौ लग्ने सवितृगुरुतीक्ष्णांशुतनयै स्सुहृज्जायाखस्थै र्भवति नियमान्मानवपतिः। मृगे मन्दे लग्ने सहजरिपुधर्मव्ययगतै श्शशाङ्काद्यै र्जातः पृथुगुणयशाः पुङ्गपतिः॥ बृ.जा.11.6
2. मृगे लग्ने सौरस्तिमियुगगतश्शीतकिरणः कुजे युग्मे नार्या शशधरसुतश्चापधरगः। गुरुर्दैत्ये ज्यार्कावभिमतगतौ चारवशतः प्रसूतौ यस्या सा भवति नरपश्शक्रसदृशः॥
माण्डव्यः. बृ.जा.व्या.222
3. हये सेन्दौ जीवे मृगमुखगते भूमितनये स्वतुङ्गस्थौ लग्ने भृगुजशशिजावत्र नृपतिः। सुतस्थौ वक्रार्कीगुरुशशिसिताश्चाऽपि हिबुकेबुधे कन्यालग्ने भवतिहि नृपोऽन्योपिगुणवान्॥7॥
4. झषे सेन्दौ लग्ने घटमृगमृगेन्द्रेषु सहितैर्यमारार्कैर्योऽभूत्स खलु मनुजश्शास्ति वसुधाम्। अजे सारे मूर्तौ शशिगृहगतेचामरगुरौ सुरुज्ये वा लग्नेधरणिपतिरन्योऽपिगुणवान्॥8
5. कर्किणि लग्ने तत्स्थे जीवे चन्द्रसितज्ञैरायप्राप्तैः मेषगतेऽर्के जातंविन्द्याद्विक्रमयुक्तंपृथ्वीनाथम्॥9
6. मृगमुखेऽर्कतनये तनुसंस्थे क्रियकुलिरहरयोऽधिपयुक्ताः। मिथुनतौलिसहितौ बुधशुक्रौ यदि तदा पृथुयशाः पृथिवीशः॥10
7. स्वोच्चसंस्थे बुधे लग्ने भृगौ मेषे रणाश्रिते। सजीवेऽस्ते निशानाथे राजामंदारयोस्सुते।11
8. अपि खलु कुलजाता मानवाराज्यभाजः किमुत नृपकुलोत्थाः प्रोक्तभूपालयोगैः। 12. बृ.जा. 7 -12.

## गौतमोक्ताः केचन राजयोगाः

आरूढशास्त्ररीत्या गौतमः राजयोगादीन् विशदीचकार। अत्र शास्त्रेऽष्टपदानि सन्ति। तानि च आरुढ कोश वाहन मन्त्र दार भाग्य नृप उपपदानि। लग्नाधिपतिः लग्नात् चतुर्थस्थाने भवेत् चेत् तदारभ्य चतुर्थस्थानं आरूढं भवति। एवम् कोशाधिपतिः धनात् षष्ठस्थाने भवेत् चेत् तदारभ्य षष्ठस्थानं कोशपदं भवति। एवं वाहनादिपदानि लग्नात्साधनीयानि। दशमस्थानाधिपतिः दशमस्थानात् तृतीयस्थाने भवेत्चेत् तदारभ्यतृतीयस्थानं नृपपदं भवति[1]। कामरतिराज्यभोगैश्वर्यमानविभवाभिज्ञप्रतिज्ञाज्ञानानि नृपपदस्य नामधेयानि। एतैः कारकत्वं च ज्ञायते[2]।

आरूढलाभे भृगुसोमपुत्रौ सजीवचन्द्रौ यदि संस्थितौ शुभौ नरः सुतार्थविद्या-सुकृतं च लब्ध्वा जगदेकवीरः राजाधिराजः भवति[3]। बुधगुरुशुक्रचन्द्राः आरुढलग्नात् केन्द्रे यदि भवन्ति तर्हि राराजयोगः भवति[4]। गुरुः आरूढलग्नाधिपति र्भूत्वारूढलग्ने सति आरुढलाभे बुधचन्द्रौ भृगुना निरीक्षितौ चेत् जन स्सुधीरः बलवान् राजाधिराजः भवति[5]। आरूढलग्नाधिपतेः दशमे नृपाधिपति र्भूत्वा,कोशपदे कोशाधिपतिः बुधगुरुभ्यां स्यात्, शुक्रचन्द्रौ आरूढात् भाग्ये भाग्यपदे वा भवेतां तर्हि जनः सार्वभौमः भवति[6]।

---

1. लग्नाधिपो यद्भवनान्वितश्चे ल्लग्नादि तत्संख्यतथोत्तरेण।
   तत्संख्यमारूढमिति ब्रुवन्ति महानुभावा यवनादयश्च॥ गौ.सं.34
   यो भावनाथो यदि यत्र कुत्रचि न्नाथान्तसङ्ख्यापरिगण्यते यदि।
   उक्तेश्वराणामधिचोत्तरैश्च तत्पूर्वसङ्ख्यानि पदानि नूनम्॥ गौ.सं.35
2. नृपादिकामोरतिराज्यभोगमैश्वर्यमानंविभयोऽप्यभिज्ञ
   ज्ञानाभिधाननृपभावसंज्ञतत्कालविज्ञानपदै र्मुनीन्द्रैः॥ गौ.सं.18
3. आरूढलाभे भृगुसोमपुत्रौ सजीवचन्द्रौ यदिसंस्थितौ शुभौ।
   सुतार्थविद्यासुकृतंच लब्ध्वा राजाधिराजा जगदेकवीरुः॥ गौ.सं.45
4. बुधश्च जीवो भृगुनन्दनेन्दू आरूढलग्नाद्यदिकेन्द्रवर्ती।
   विद्याचिरायु स्सुतसंपदश्च राराजयोगं प्रवदन्ति सन्तः॥ गौ.सं.46
5. आरूढभावाधिपतौ सुरेज्ये आरूढलाभे च शशाङ्कसूनुः।
   मृगाङ्कयुक्तो भृगुणानिरीक्षितो राजाधिराजो बलवान्सुधीरः॥ गौ.सं.51
6. पदेशस्य माने नृपेशस्स्थितस्स्याद्धनेशस्य कोशे सजीवेन्दुपुत्रः।
   कलानाथकाव्यौ पदाद्भाग्येभावन्वितौ सार्वभौमप्रभुत्वं करोति॥ गौ.सं.61

मन्त्राधिपति र्नृपाधिपत्या संयुते आरूढलग्नाधिपति र्विलग्ने सति गुरुचन्द्रौ मन्त्रपदे कोशपदे वा स्थितौ चेत् जनः वसुधाधिपः भवेत्[1]। गुरुशुक्रबुधचन्द्राः नृपपदे वा भाग्यपदे वा आरूढाद्राज्यभाग्ययो र्वा मन्त्रारूढपतिसंयोगेन वा वीक्षणेन वा भवन्ति चेत् जनः वेदान्तविज्ञानपरो महेशो भवति[2]। शुक्रचन्द्रौ परस्परं केन्द्रे वा मिलित्वा वा विद्यमानयोः आरूढलग्नाधिपतिरारूढलग्ने, वाहनारूढाधिपति र्वाहने भवेतां यदि नरः नृपो भवति[3]। सूर्यचन्द्रकुजबुधगुरुशुक्राः स्वस्वक्षेत्रेषु भवेयु र्यदि पुमान् राजाधिराजः भवति[4]। राशित्रये पदपञ्चकयोगे, लग्नारूढे गुरुः, राज्यारूढे शुक्रचन्द्रौ भवेयु र्यदि बहुगजाधीशः नराधिपस्स्यात्[5]। शुक्रचन्द्रयो र्मिलित्वारूढे आरूढात्केन्द्रकोणयो र्वा सतोः, भाग्यारूढाधिपतिः नृपपदाधिपतिः वाहनाधिपतिश्च मिलित्वारूढलग्ने लग्ने वा आरूढलग्नाधिपत्या वा तद्विलोकने वा भवन्ति यदि पुमान् बहुसेनानायकः भूपालः भवति[6]। नृपपदाधिपतिः लाभाधिपतिश्च कोशे, कोशाधिपतिः लाभे बुधचन्द्राभ्यां वा तद्विलोकने वा भवेत्, तदानीमारूढलग्ने मन्त्रारूढाधिपतिर्भवेद्यदि जातः पुरुषः प्रज्ञावान्

---

1. मन्त्रेश्वरो भोगपसंयुतश्चेत्पदेश्वरेणापि युते विलग्ने।
   विभेदने वा यदिवस्तुराशौ मृगाङ्कजीवौ वसुधाधिपो भवेत्। गौ.सं. 65
2. बृन्दारकाधीशगुरुस्सितज्ञा कलाधरो मान गृहे च भाग्ये।
   प्रभावपेनापि युतेक्षिते वा वेदान्तविज्ञानवरो महेशः॥ गौ.सं. 69
3. निशाचराचार्यकलङ्कलाञ्छनौ परस्परं केन्द्रसमाश्रितौ चेत्।
   पदे भवेशो बलभे वनाधिपः परस्परं केन्द्रसमागमौ नृपः॥ गौ.सं.73
4. दिनाधिनाथोऽपिनिशाधिनाथो महीसुतस्सोमसुतोगुरुस्सितः।
   एतैस्स्वरूढैश्चसमागमास्युस्समस्तभूपान्परिपालकस्यात्॥ गौ.सं.72
5. त्रिपदेषुपदपञ्चकधानमन्वितालग्ने जीवे शुक्रे चन्द्रे।
   लग्नाद्राज्येजातो नराधिपो बहुगजाधीशः॥ गौ.सं. 76
6. दैत्यारिपूज्यो निशिपेनयुक्तः पदान्वितो वा भवकेन्द्रकोणयोः।
   भाग्येशराज्येशबलेशकोशनाथा स्समेताः पदभे विलग्ने।
   आरूढपेनापियुतेक्षितो वा सदण्डनाथो विपुलाधिपो भवेत्॥ गौ.सं.84

धनवान् लक्षाधिकारः मातङ्गैः तुरङ्गमैः बहुरथैस्संयुक्तः क्षितिपालः स्यात्[1]। आरूढ-लग्नाधिपतिर्गुरुश्च मन्त्रारूढाधिपत्या साकं आरूढलग्ने वा नृपपदे वा आरूढाद्राज्ये वा भूत्वा वाहनारूढाधिपतिर्नृपपदाधिपश्च नृपपदे वा आरूढाद्राज्ये वा चन्द्रेण सह भवेतां यदि जितारि नृप स्स्यान्नरः[2]। विशेषराजयोगश्चन्द्रसम्बन्ध्यैवं भवति। जन्मलग्नाधिपतेः केन्द्रे कोणे गुरुर्भवेत्, तस्य सप्तमे कोणे वा चन्द्रो यदि वसति तर्हि नरः धार्मिकः धनवान् चक्रवर्ती विज्ञेयः[3]। एते आरूढशास्त्रोक्ताः राजयोगाः।

जातकाभरणं तु मनुजस्य प्रसूतिकाले दिनाधिराजे मृगराजसंस्थे, नक्रे सवक्रे, कलशेऽर्कसूनौ, पाटीनलग्ने शशिना समेते महौजसः महीपते र्जन्म स्यात्[4]। स्वोच्चे मूर्तिगते अमृतांशुतनये नक्रे सवक्रे शनौ, चापे वागधिपेन्दुभार्गवयुते भूमिपतेः जन्म स्यात्[5]। एवमादयः बहवो राजयोगाः चन्द्रसम्बन्धिनः परिदृश्यन्ते। आनन्त्यात् तेषामत्रोल्लेखेनं न शक्यं भवति।

## ग्रहदशाविचारे चन्द्रविचारः

सम्प्रति वृद्धपाराशर्यरीत्या चन्द्रस्य दशाभुक्ति फलविशेषाः परिशीलनीयाः

---

1. स्वराज्येरपिलाभपौ धनपदै र्वित्तेश्वरो रौद्रभे
   एतौ सौम्यविधूतसमन्वितदृशा व्यारूढपुत्रे स्थितः।
   प्रज्ञावान् धनवान् प्रजातपुरुषो लक्षाधिकारो भवे
   न्मातङ्गैश्च तुरङ्गमै र्बहुरथै स्संयुक्तगोत्रेश्वरः॥ गौ.सं.89
2. पदेशस्सुरेज्यः प्रभावेशयुक्तो पदाद्राज्यभावे भवे वा यदि स्यात्।
   वनेशो नृपेशश्च माने स्थितश्चे त्रिशानाथयुक्तो नृपस्स्याज्जितारिः॥ गौ.सं.91
3. जन्मलग्नाधिपो यत्र केन्द्रकोणगुरुर्वशेत् तत्सप्तमत्रिकोणे वा चन्द्रो वसति निश्चयम्।
   चक्रवर्ती स विज्ञेयः धार्मिको धनवान् भवेत्॥ गौ.सं.97
4. दिनाधिराजे मृगराजसंस्थे नक्रे सवक्रे कलशेऽर्कसूनौ।
   पाटीनलग्ने शशिना समेते महीपते र्जन्म महोजस स्स्यात्॥ जा.भ.9
5. स्वोच्चे मूर्तिगतेऽमृतांशुतनये नक्रे सवक्रे शनौ
   चापे वागधिपेन्दुभार्गवयुते स्याज्जन्म भूमीपतेः।
   स्वस्थाने ननु यस्य भूरितुरगोन्मत्तेभमलामिल
   स्तेनान्दोलित भूमिगोलकलनं दिक्दन्तिनः कुर्वते॥ जा.भ.8, पु.190.

सन्ति। महादशासु चन्द्रमहर्दशाकालः दशवत्सराः भवन्ति। तेषु चन्द्रादारभ्येतर ग्रहाणां चान्तर्दशा स्समायान्ति। तत्र चन्द्रमहादशायां चन्द्रस्य भुक्तिमासाः दश। स्वोच्चस्वक्षेत्रगे चन्द्रे त्रिकोण लाभगेऽपि वा भाग्यकर्माधिपै र्युक्ते मनुजः गजाश्वाम्बरसङ्कुलः, देवतागुरुभक्त्युपेतः, पुण्यश्लोकादिकीर्तनः, सस्यलाभसहितः, महत्सौख्यवान्, भूवृद्ध्या धनलाभेन च विलसितो भवति। भाग्यचन्द्रे पूर्णफलं राजयोगप्रवृद्धिदं सेनाधिक्यं कार्यसिद्धिं स्त्रीशय्यादिसुखं भवेत्। षष्ठाष्टव्ययगे चन्द्रे नीचराशिस्थितेऽपि वा नरस्य स्थानभ्रंशः देहपीडा ऋणपीडा धनव्ययः बन्धुमित्रमनस्तापः राजद्वारे विरोधः मातृनाशः बन्धनं महाहानिश्च भवति। द्वितीयद्यूननाथे तु चन्द्रे मनुजस्य देहजाड्यं मनोरुजः अस्त्रशस्त्रभीतिः व्रणरोगविवृद्धिश्च भवति। तद्दोषपरिहारार्थं मृत्युंजयजपं समाचरेत्, श्वेतांगां महिषीं दद्यात्, आयुरारोग्यमादिशेत्। [1]

चन्द्रस्य महर्दशायां कुजस्य भुक्तिमासाः सप्त। चन्द्रस्यान्तर्गते भौमे लग्नात्केन्द्रत्रिकोणगे नरस्य सौभाग्यं राजसन्मानं वस्त्राभरणलाभः यत्नकार्यसिद्धिः आरोग्यं मित्रदर्शनं भूलाभः गृहनिर्माणं भ्रातृवर्गविृद्धिश्च स्यात्। चन्द्रात्केन्द्रगते भौमे तुङ्गस्वांशे शुभांशगे पुत्रोत्सवः शत्रुनाशः व्यापारोद्योगसिद्धिः कलत्रसौख्यं स्वजने कल्याणं भूरिलाभः नैर्ऋत्यां दक्षिणभागे प्रयाणं कार्यसिद्धिश्च भवेयुः। षष्ठाष्टमव्यये भौमे नीचे पापसमन्विते गुहक्षेत्रादिनाशः राजद्वारे विरोधः भ्रातृवर्गेषु कलहः कार्यभङ्गः नृपाद्भयं चोराग्निप्राणभीतिः द्रव्यनाशः भविष्यति। द्वितीयद्यूननाथे तु कार्यविघ्नः मनोरोगः भवेताम्। तद्दोषपरिहारार्थं सुब्रह्मण्यजपं समाचरेत्।[2]

चन्द्रदशायां राहुभुक्तिमासाः अष्टादश। चन्द्रस्यान्तर्गते राहौ लग्नात्केन्द्रत्रिकोणगे चोराग्निनृपभीतिः विषजन्तूपद्रवः बन्धुद्वेषः मित्रहानिः स्वस्त्रीविरोधः धनक्षयः कलहः मातृनाशः पितुः क्लेशः चतुष्पाज्जीवनाशः भवेयुः। शुभयुक्ते शुभदृष्टौ पञ्चमस्थे शुभान्विते यत्नकार्यसिद्धिः व्यापारे धनलाभः नैर्ऋत्यां पश्चिमभागे प्रयाणं मित्रदर्शनं वाहनाम्बरलाभः स्वाधिकाराभिवृद्धिः शूद्रनीचजनस्नेहः तन्मूलात्कार्यसिद्धिश्च भवेयुः। षष्ठाष्टामव्यये नीचे दायेशात् रिपुरिफ्फगे (6,12) स्थानभ्रंशः मनःक्लेशः ऋणद्रव्यादिपीडा वृश्चिकोरगचोराग्निनृपै र्बाधा अर्थनाशः भवेत्। दायेशात्केन्द्रकोणे वा दुश्चिक्ते लाभगेऽपिवा परोपकारः धर्मकार्यः पुण्यतीर्थफलप्रदता स्त्रीदेवतार्चनं सौख्यं मन्त्रः औषधसङ्ग्रहः

---

1. बृ.पा.चन्द्रदशाभुक्तिविचारे 1-7
2. बृ.पा.च. 8-14,

द्वितीयद्यूनराशिस्थे तु देहपीडा भविष्यति। तद्दोषपरिहारार्थं दुर्गाजपं समाचरेत् नागदानं च कुर्वीत। तथा सति सर्वसम्पत्समृद्धि र्भवति।[1]

चन्द्रमहर्दशायां गुरुभुक्तिमासाः षोडश। चन्द्रस्यान्तर्गते जीवे स्वोच्चस्वक्षेत्र केन्द्रगे मित्रत्रिकोणलाभस्थे बलयुक्ते शुभान्विते नरः वस्त्रालङ्कारलाभं बन्धुप्रीतिं धनं शुभकार्यं गृहभूपशुलाभं देवागारप्रतिष्ठां दानधर्मविवृद्धिं राजाश्रयं महोत्साहं गजवाजि समन्वितत्वं वनकूपप्रतिष्ठां विप्रप्रभुवशात् सुखं पश्चिमां दिशमाश्रित्य सिद्धिं अधिकं यशः पुत्रोत्सवं सस्यलाभं नगरनिवासं लभते। षष्ठाष्टमव्यये जीवे नीचे वाऽस्तङ्गतेऽपि वा पापग्रह समायुक्ते जनस्य मनोव्यथा पित्रुवर्गे जनारिष्टः पुत्रपीडा वा स्थानभ्रंशः कार्यविघ्नः लाभाधिकधनव्ययः अकस्मात्कलहः शत्रुभीतिः जन्तुनाशः इष्टबन्धुविरोधः सञ्जायते। दायेशात् केन्द्रकोणस्थे दुश्चित्के लाभगेऽपि वा पूर्णचन्द्रसमायुक्ते स्वांशे बलसमन्विते नरः कल्याणं भूरिसम्पत्तिं धैर्यवीर्यपराक्रमं राज्यश्रियं धनलाभं स्वाधिकाराभिवृद्धिं वाहनाम्बरपश्वादिलाभं देवदर्शनं लभते। द्वितीयद्यून राशिस्थे अपमृत्युः भविष्यति। तद्दोषपरिहारार्थं शिवसाहस्रकं लिङ्गदानं च कुर्वीत। तत स्सर्वसम्पद स्समाप्नोति।[2]

चन्द्रमहर्दशायां शनिभुक्तिमासाः एकोनविंशतिः। चन्द्रस्यान्तर्गते मन्दे लग्नात्केन्द्रत्रिकोणगे स्वक्षेत्रे स्वांशगे तुङ्गे मित्रालयसमन्विते लाभे वा शुभराशिस्थे नवांशे बलसंयुते जनस्य पुत्रमित्रार्थसम्पत्तिः शूद्रप्रभुसमागमः व्यवसायात् फलाधिक्यं गृहलाभः अधिकं यशः पुत्रलाभः कार्यसिद्धिः कल्याणं बन्धुदर्शनं नैर्ऋत्यां पश्चिमे भागे शूद्रमूलात् धनागमः नवीनकार्यचिन्तासाफल्यं च भवेत्। षष्टाष्टमव्यये नीचे शतृक्षेत्रगते यदि बन्धुद्वेषः रोगपीडा पितृनाशः धनक्षयः ऋणबाधा निश्चयेन विदेशगमनं मानभङ्गः राजभीतिः व्रणचोराग्निव्यथा भवेत्। द्वितीयाद्यूनराशिस्थे देहजाड्यं भविष्यति। तद्दोषपरिहारार्थं मृत्युञ्जयजपं समाचरेत्। कृष्णाङ्गां महिषीं दद्यात्। दानेनाऽरोग्यं लभेत्।[3]

चन्द्रदशायां बुधभुक्तिमासाः सप्तदश। चन्द्रस्यान्तर्गते सौम्ये केन्द्रलाभत्रिकोणगे स्वक्षेत्रस्वांशगे चैव तुङ्गे वा बलसंयुते शुभांशे शुभराशिस्थे शुभग्रहसमन्विते जनः कल्याणं बन्धुसम्मानं प्रियवस्त्राश्वलब्धिं विद्याविनोदसद्गोष्ठिं ज्ञानवृद्धिं अधिकं सुखं

---

1. वृ.पा.च.15-23
2. वृ.पा.च. 24-35
3. वृ.पा.च.36-42

पुत्रोत्सवं यशोवृद्धिं वाणिज्यं धनलाभं रत्नभूषणमुक्तादिक्रयविक्रयलाभं शत्रुनाशं कार्यसिद्धिं सत्कथाश्रवणं लभेत्। राजप्रीतिकरः विद्वज्जनसमागमवान् गीतवाद्यादिघोषो-पेतः देवतोत्सवदर्शी प्रयाणी मित्रसम्मानी दिव्यमन्दिरवासवान् अपूर्ववस्तुलाभवान् मातृवंशाभिवृद्धिकरश्च भवेत्। षष्ठाष्टव्ययगे नीचे तद्भुक्तौ देहपीडनं कारागृहप्रवेशः दारपुत्रादिपीडा बन्धुमित्रमनस्तापः नानाविधक्लेशः भीतिश्च भवेत्। द्वितीयद्यूननाथे तु ज्वरपीडा महद्भयं प्राप्नुयात् जनः। तच्छान्त्यै छागदानं विष्णुसहस्रनामजपश्च कुर्यात्। ततः शान्तिं आरोग्यं सर्वत्रविजयं चाप्नोति[1]।

चन्द्रदशायां केतुभुक्तिमासाः सप्त। चन्द्रस्यान्तर्गते केतौ रिपुदुश्चित्कलाभगे शुभयुक्तेऽथवा दृष्टे जनस्य अर्थलाभः कृषिवृद्धिः स्वाधिकारार्थलब्धिः विधवासङ्गमः चोरात् धनप्राप्तिः पुण्यकर्मवृद्धिः राजप्रीतिः मनस्सन्तोषश्च सञ्जायन्ते। केन्द्रकोणसमायुक्ते भुक्त्यादौ कलहः, भुक्तिमध्ये शत्रुभीतिः भुक्त्यन्ते सुखं समाप्नुयान्नरः। दायेशात् रिपुरन्ध्रस्थे व्यये नीचे यदि कार्यविघ्नः भूतपीडा ऋणपीडा धनव्ययः विधवाकलहः शिरोरोगः गोमहिष्यादि नाशः राजविरोधः मनोव्यथा अन्यगेहनिवासः प्रयाणं कार्यनाशः अकालभोजनं विषजन्तुभीतिः पितृनाशः मातृपीडा बन्धुवैषम्यं उच्चैःपतनं वाताण्डव्याधिश्च सम्भवन्ति नरस्य। द्वितीयद्यूनराशिस्थे नानारोगं महद्भयं लभेन्नरः। तच्छान्त्यै सर्वसम्पत्प्रदायकं रुद्रजपं कुर्वीत।[2]

चन्द्रदशायां शुक्रभुक्तिमासाः विंशतिः। चन्द्रस्यान्तर्गते शुक्रे केन्द्रलाभत्रिकोणगे स्वोच्चस्वक्षेत्रगे वाऽपि शुभग्रहसमन्विते जनस्य मित्रराजप्रसादेन वाहनाम्बरलाभः पशुभूलाभः ख्यातिः नूत्नगृहनिर्मितिः कल्याणं बन्धुदर्शनं सुगन्धपुष्पशय्यास्वस्त्रीसौख्या-भिवृद्धिः स्वाधिकारवृद्धिः अकस्मात् राजदर्शनं गीतवाद्यविनोदः गजान्तैश्वर्यप्राप्तिः बन्धु कल्याणं नित्यं मृष्टान्नभोजनं व्यापारेणार्थलाभः प्रियमित्रवशात्सुखं सिद्ध्यन्ति। दशाधिपेन संयुक्ते देहसौख्यं धनागमः गृहे कल्याणसम्पत्तिः राजपूजा अधिकं यशः स्वाधिकारवृद्धिः स्त्रीमूलाद्धनागमः भवन्ति। षष्ठाष्टमव्यये नीचे पापग्रहसमन्विते राजमन्त्रिविरोधः पशुनाशः जायापीडा यशोहानिः बन्धुधनभाग्यानां नाशः मनः क्लेशः स्त्रीकलहः मातापितृहानिः स्थानभ्रंशः कार्यविघ्नः ऋणपीडा ध्रुवं भवेत्।

---

1. वृ.पा.च.43-51

2. वृ.पा.च.52-60

भाग्यलाभादिपैर्युक्ते भाग्यवृद्धिः देवब्राह्मणभक्तिः मुक्ताभरणलाभः स्यात्। दायेशाल्लाभकेन्द्रस्थे स्वांशस्वोच्च त्रिकोणगे नूतनगृहनिर्माणं विद्यालाभः सुतोदयः व्यापारोद्योगलाभः शत्रुनाशः धनागमः सङ्गीतवाद्यनटनसत्कथाश्रवणं च भवन्ति।अन्यस्त्रीसङ्गमः बन्धुकल्याणसम्भूतिश्च भवेयुः। दायेशाधिपे रन्ध्रस्थे व्यये वा पापसंयुते विदेशवासः दुःखार्तिः नृपचोराग्निपीडा स्वाधिकारविनाशः मित्रविरोधः मनोरुग्मता च भवेयुः। द्वितीयद्यूननाथे तु अपमृत्युभयं भवेत्। तद्दोषपरिहारार्थं दुर्गाजपं कारयेत् स्वर्णप्रतिमादानं च कुर्यात्, ततो ध्रुवं शान्तिं लभेन्नरः।[1]

चन्द्रदशायां रविभुक्तिमासाः षट्। चन्द्रस्यान्तर्गते सूर्ये केन्द्रकोणोच्चस्वर्क्षगे जनस्य राज्यधनलाभः गृहे कल्याणसम्भवः मित्रराजप्रसादेनग्रामभूम्यादिलाभः पुत्रलाभः महत्सौख्यं स्वाधिकारार्थसिद्धिः बन्धुप्रीतिः सत्कथाश्रवणं भवेत्। व्यापारोद्योगलब्धिः गुरुदैवतदर्शनं च भवेत्। षष्ठाष्टव्ययगे नीचे पापग्रहसमन्विते जनः कार्यविघ्नं शत्रुभयं बुद्धिवैकल्यं अकस्मात्कलहं लाभाधिकधनव्ययं ऋणद्रव्यादिबाधां देहजाड्यं मनोरुजं अन्यग्रामप्रयाणं कार्यनाशं महद्भयं लभेत्। द्वितीयद्यूननाथे तु देहायासः भविष्यति। तद्दोषपरिहारार्थं शिवपूजां कारयेत्।[2]

## मुहुर्तस्कन्धे चन्द्रविचारः

जातकभागे विस्तृततया चन्द्रस्थानं समीक्षितम्। सम्प्रति मुहूर्तभागे चन्द्रस्य प्राधान्यं परिशीलयामः। प्रारब्धकर्मणः शुभफलावास्त्यै शुभग्रहयोगात्मकः मुहूर्तकालिकः समयः दैवज्ञैः दर्शितः स्वीक्रियतेऽस्माभिः। निषेकादारभ्य पाणिग्रहणपर्यन्तं स्थितानामष्टादशसंस्काराणां[3] कार्यकलापे, यज्ञादिकर्मानुष्ठाने गृहनिर्माणादिकर्मसु, व्यावहारिक विद्यावाणिज्यादि नानाकर्मणां प्रारम्भे च मुहूर्तनिर्णयः

---

1. वृ.पा.च.61-76
2. वृ.पा.च.77-82
3. ऋतुसङ्गमनगर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मोत्थान
   नामकरणान्नप्राशन प्रवा सगमनपिण्डवर्धनचौलोपनयन
   पारायणव्रतबन्ध विसर्गोपाकर्म समावर्तनपाणिग्रहणानी
   त्यष्टादशसंस्काराः शारीराः ॥ वै.गृ.1.2

लोके क्रियते।[1] तत्र सर्वकर्म समारम्भे ताराबलेन साकं चन्द्रबलं समीक्षते।[2] जन्मराशेरारभ्य मुहूर्तकालिक चन्द्रस्थितराशिपर्यन्तं यदि गणना क्रियते तर्हि चन्द्रः जन्मराशावथवा जन्मराशेः तृतीय षष्ठ सप्तम दशमैकादशस्थानेषु भवेद्यदि शुभकरः। कृष्णपक्षे तु द्वादश चतुर्थाष्टमेषु स्थितश्चेत् शुभकरः। शुक्लपक्षे पञ्चमे द्वितीये नवमे स्थितश्चन्द्रः यात्रादिसकलशुभकर्मसु शुभकरः।[3]

चन्द्रस्योपचयापचयकान्तिव्यत्यासेन तिथय स्सम्पद्यन्ते। कान्त्युपचये शुक्लपक्ष इति कान्त्यपचये कृष्णपक्ष इति कथ्यते दैवज्ञैरिति लोकविदितो विषय एव। शुक्लपक्षे पञ्चदशतिथयः पूर्णिमान्ताः भवन्ति। कृष्णपक्षेऽमावास्यान्ताः पञ्चदश तिथयः सम्पद्यन्ते। शुक्लपक्षाष्टमीमारभ्य कृष्णपक्षसप्तमीपर्यन्तश्चन्द्रः पूर्णचन्द्र इति, तद्व्यत्ययेन कृष्णपक्षादारभ्य शुक्लपक्षपर्यन्तश्चन्द्रः क्षीणचन्द्र इति कथ्यते। सर्वकार्येषु साधारणतया क्षीणचन्द्रतिथिं परित्यज्य पूर्णचन्द्रतिथिमेव स्वीकुर्मः। एवं शुभादिकार्येषु चन्द्रस्य बालत्ववृद्धत्वास्तमयावस्थाश्च परिशील्यन्ते। विवाहादिषु चन्द्रस्यास्तंगतत्वे कन्यकायाः मृतिः, बालत्वे अन्नासक्तता, वृद्धत्वे भर्तृहीनता सम्पद्यते। वृद्धत्वं च चन्द्रस्य दिनत्रयं, बालत्वं दिनार्थं, अस्तत्वं च दिनद्वयं भवति। चन्द्रस्य बालत्वेऽपि

---

1. श्रौतस्मार्तविधिश्चैव प्रयाणं भोजनं तथा।
   मैथुनं दण्डयात्रा च प्रवेशो नृपदर्शनम्॥
   आयोधनं सुहृद्दीक्षा विवादं शास्त्रविग्रहः।
   धारणं भूषणादीनां पात्रादीनां च सङ्ग्रहः॥
   यच्चान्यदपिलोकेऽस्मिन्द्रष्टव्यंस्यान्मनीषिभिः।
   तन्मुहूर्तवशादेवकर्तव्यमविशङ्कया॥ मुहू.क.21-23
2. पुंसामर्कबलंमुख्यं स्त्रीणामुख्यं गुरोर्बलं
   तयोश्च चन्द्रबलं मुख्यं तथा ताराबलं तयो :। मुहू.प्र.पु.38
3. जन्मानलऋतौसप्तदशमैकादशे शुभः।
   अब्ध्यष्टद्वादशे कृष्णे शुक्ले द्विनवपञ्चमे॥ 420
   यथा मातासुतान् रक्षे त्तथा रक्षतिचन्द्रमाः।
   यात्राविवाहसीमन्तमौञ्जीबन्धनभुक्तिषु॥
   विद्यारम्भे च तारायाः प्रधानं बलमिन्दुवत्॥ मुहू.द.421

तस्यामृतरश्मित्वात् सःसुभगःभवति। शिशुरपि द्वितीयातिथौ शुभकार्येषु चन्द्रः ग्राह्यः एव भवति।[1] ग्रहण दोषः एवं स्वीक्रियते चन्द्रस्य। ग्रस्तास्तमये ग्रहणात्पूर्वं दिनत्रयं, तथैव ग्रस्तोदये ग्रहणात्पश्चात् दिनत्रयं, सन्ध्याकालग्रहणे पूर्वं दिनत्रयं, पश्चाद्दिनत्रयं सर्वग्रास ग्रहणे पूर्वपरयो स्सप्तसप्तदिनानि ग्राह्याणि न भवन्ति। ग्रहगतनक्षत्रं षण्मासपर्यन्तं शुभकार्येषु त्याज्यं भवति[2]। एवं पक्षग्रहणमध्ये विवाहे कृते स्त्रीवियोगः, उपनयने तु कृते मरणं सम्पद्यते।[3] शुक्लकृष्णपक्षेषु चतुर्थी षष्ठी अष्टमी चतुर्दशी तिथयः पक्षछिद्राः कथ्यन्ते, ते हि शुभकार्येषु त्याजाः भवन्ति[4]। अश्विन्यादि स्वेष्टनक्षत्रपर्यन्तं गणनां कृत्वा, तां संख्यां षष्ठिसंख्यया गुणित्वा, लब्धस्येष्टनक्षत्रघटिकाविघटिकाः मिलित्वा, सर्वां तां संख्यां चतुस्संख्यया गुणित्वा, गुणलब्धे पञ्चचत्वारिंशत् संख्यया भागीकृतं चेत् आगतं लब्धं चन्द्रस्य गतावस्थां, शेषो वर्तमानावस्थां सूचयतः। एवं चन्द्रस्य तत्र द्वादशावस्थाः सिद्ध्यन्ति। प्रथमावस्था प्रवासा फलं च प्रवासः, द्वितीयावस्था विनाशा फलं च विनाशःकार्यस्य, मरणावस्थायां मृत्युभीतिः, जयावस्थायां विजयः कार्यस्य, हास्यावस्थायां कामिनीभिर्विलासः, रत्यवस्थायां स्याद्रतिः, क्रीडावस्थायां सौख्यं, सुप्तावस्थायां निद्राकलहश्च, भुक्तावस्थायां देहपीडा, ज्वरावस्थायां भीतिः, कम्पितावस्थायां तापः हानिश्च, सुस्थिरावस्थायां सुखं स्यादित्येताः द्वादशावस्थाः,

---

1. वृद्धत्वमिन्दोस्त्रिदिनं दिनार्थं बालत्व मस्तत्वमहर्द्वयं च।
   अस्ते विधौ मृत्युमुपैति कन्या बालेऽन्नसक्ता विधवा च वृद्धे॥
   भवत्यमृतरश्मित्वाद्बालोऽपिशुभदश्शशी।
   शशी शिशुर्द्वितीयायां शुभं कार्यं सदा बुधैः॥ मुहू.द.252,253
2. ग्रस्तेऽस्ते त्रिदिनं पूर्वं पश्चादस्तोदये तथा।
   सन्ध्याकाले त्रित्रिदिनं निश्शेषे सप्तसप्त च॥
   उत्पातग्रहणादूर्ध्वं सप्ताहमखिलग्रहे।
   नाखिले त्रिदिनं नेष्टं नेष्टं तद्भमृतुत्रयम्॥ मुहू.द.254, 255
3. पक्षग्रहणमध्येतु विवाहं चोपनायनम्।
   यदिकुर्यात्समूढात्मा नष्टायुस्स्त्रीवियोगवान्॥ मूहू.द.256
4. अष्टमीद्वादशी षष्ठीचतुर्थीच चतुर्दशी।
   पक्षछिद्राश्च तिथयश्शुभकार्येषु निन्दिताः॥ मुहू.दी.6

तत्फलानि च[1]। एवं जन्मनक्षत्रमारभ्य शुक्लप्रतिपदादिनक्षत्रपर्यन्तं गणयन् तां संख्यां सप्तभिः गुणित्वा, लब्धं नवसंख्यया भागीकृतं चेत् शेषसंख्या षड् यदि तर्हि तस्य मासाधिपतिः चन्द्रो भवति। मासाधिपतेश्चन्द्रस्य फलं दध्यन्नभोजनं स्त्रीसंभोगः संतोषः सौख्यं मनोल्लासश्च ज्ञेयम्।[2]

जन्मनक्षत्रादारभ्य नित्यनक्षत्रपर्यन्तं गणयन् तां सङ्ख्यां सप्तसङ्ख्यया गुणित्वा नवमेन भागीकृतं चेत् शेषो यदि द्वि भर्वति तर्हि नित्यदशाधिपश्चन्द्रः भवति। तत्फलं च राजदर्शनप्राप्तिः, पुष्पवस्तुसन्दर्शनं, देवब्राह्मणभक्तिः, स्त्रीवसनसम्प्राप्तिः, दूरवार्ताश्रवणं, शीतवस्तुसमागमः, विष्णुभक्तिः, मित्रदर्शनं, सुखभोजनं, भवति[3]। जन्मनक्षत्रमारभ्य वर्षादिनक्षत्रपर्यन्तं गणनां कृत्वा, तां संख्यां सप्तसंख्यया गुणित्वा, लब्धं नवसंख्यया भागीकृतं चेत् शेषो यद्यष्ट भवति, तर्हि वर्षदशा चन्द्रदशेति निर्णीयते।

---

1. अभीष्टतारागतनाडिकायाः खषड्घ्रयातर्क्षयुता श्चतुर्भिः
   निघ्नाश्शराबोधिहृताऽवसस्थागता स्स्युरिन्दो र्हापरातुभोग्याः।
   प्रवासो धननाशश्च मरणं जयहास्यके रतिः क्रीडा तथासुप्ता भुक्ता
   चाथज्वराभिधा कंपिता सुस्थिरावस्था द्वादशैताः विधोस्स्मृताः॥
   प्रवासः प्रवासोपगेरात्रिनाथेऽर्धनाशश्चनष्टोपगेमृत्युभीतिः
   मृतावस्थायां स्याज्जयायांजयस्तुविलासस्तुहास्योपगेकामिनीभिः।
   रतौ स्याद्रतिः क्रीडितासौख्यदात्रीप्रसुप्तापिनिद्रांकलिंदेहपीडाम्
   भयंतापहानीसुखंस्यात्तुभुक्त्वा ज्वराकंपितासुस्थितासुक्रमेण॥ मुहू.प्र.पु.38, 39.
2. जन्मनक्षत्रमारभ्यमासभांतं गण्यते। गुणित्वासप्तभिश्शेषं नवसंख्याहारेण च॥
   रविस्सौम्यः फणिर्जीवः केतुश्चन्द्रश्शनिर्भृगुः। भूसूनुश्चेतिनवचमासाधिपतयः क्रमात्॥
   दध्यन्नभोजनं सौख्यंसम्भोगंप्रीतिसौख्यदम्। धनलाभंमनोल्लासंचन्द्रोमासाधिपस्तथा॥
   मुहू.प्र.पु.43.
3. जन्मनक्षत्रमारभ्य नित्यभान्तं प्रगण्यते। मुनिसंख्यै र्गुणित्वाथ नवसंख्येन भाजितम्॥
   शेषै र्नित्यदशाप्रोक्ता रव्यादीनां यथाक्रमम्। राज्ञो दर्शनसम्प्राप्तिं दर्शनं पुष्पवस्त्रयोः॥
   देवब्राह्मणभक्तिं च नारीवसनसम्भवम्। श्रवणं दूरवार्तायाश्शीतवस्तुसमागमम्॥
   हृदये विष्णुभक्तिं च मित्रदर्शनसम्भवम्। सुखभोजनसंयुक्तं चन्द्रो नित्यदशाधिपः॥
   मुहू.प्र.पु.46

तत्फलं च विद्यागोष्ठिः, वेदशास्त्रार्थचिन्तनं, पुराणश्रवणं, दूरबन्धुसमागमः, शुक्लवस्त्राद्यलङ्कारसम्प्राप्तिः, मातृहस्तान्नभोजनं, तीर्थयात्राप्रसङ्गश्च भवेयुः[1]। गोचाररीत्या चन्द्रमाः क्रमेण द्वादशभावेषु सम्प्राप्तः तन्वादिषु क्रमेण अन्नवृद्धिं, धनक्षयं, द्रव्यलाभं, महद्गदं, कार्यनाशं, धनं, द्रव्यलाभं, मृत्युं, नृपक्रोधं, सुखं, लाभं, धनव्ययं च करोति[2]।

स्त्रीप्रथमार्तवलग्ने निशानाथो यदि अष्टमस्थश्चेत् तर्हि भर्तुर्विनाशकारको भवति[3]। एवं गर्भाधानविषयेऽपि लग्नादष्टमे चन्दे तल्लग्नं त्याज्यं भवति[4]। किन्तु चन्द्रवासरः शुभद एव[5]। ऋतुकाले लग्ने चन्द्रेण संयुक्ते वीक्षिते वा सत्पुत्रजननकारकत्वमुच्यते[6]। सीमन्तमुहूर्ते तु लग्ने चन्द्रो न भवितव्यः[7]। अपि चान्नप्राशनलग्ने क्षीणचन्द्रो यदि जनः भिक्षुकः भवेत्, पूर्णचन्द्रो यदि जनोऽन्नदाता भवेत्[8]। एवमुपनयनविषये वैश्यानां

---

1. जन्मनक्षत्रमारभ्य गणना नूत्रवर्षभम्। या भसंख्या भवेत्सैव सप्तधा नवभाजिता॥
   शेषाद्वर्षदशानाथाः रविभौमार्यकेतवः। बुधशुक्रार्किशशिनस्स्वर्भानुश्चक्रमादिमे॥
   चन्द्रदशा त्रिंशद्दिनात्मिका॥ मुहू.प्र.पु.49
   विद्यादिवादगोष्ठीं च वेदशास्त्रार्थचिन्तनम्। पुराणश्रवणं चैव दूरबन्धुसमागमम्।
   शुक्लवस्त्राद्यलङ्कारं मातृहस्तान्नभोजनम्। तीर्थयात्राप्रसङ्गं च दद्याच्चन्द्रदशा नृणाम्॥
   मुहू.प्र.पु.51
2. अन्नवृद्धिं धनक्षीणं द्रव्यलाभं महद्गदम्। कार्यनाशं च वित्तं च
   द्रव्यलाभं च मृत्युं च। नृपक्रोधं सुखं लाभं धनक्षीनं तु चन्द्रमाः॥ मुहू.प्र.पु.52
3. अष्टमस्थे निशानाथे भर्तुर्नैधनकारकम्।
   चन्द्रताराबलयुते रजः पुत्रार्थसम्पदः॥ मुहू.द.317
4. गर्भाधानमरिष्टमष्टमविधौ..। काला. मल्लादि.पु.6
5. वाराश्शशाङ्कार्यसितेन्दुजानाम्॥ मुहू.द.337
6. लग्राद्वा जन्मलग्नाद्वा भूमिजे वाऽधवा विधौ।
   सत्पुत्राप्रथमार्तौ स्यात्कन्याचोपचये स्थिते॥ मुहू.द.318
7. चन्द्रेलग्नविवर्जिते..॥ मुहू.प्र.पु.122
8. कुष्ठी लग्नगते रवौ तनुकले चन्द्रे सदा भिक्षुकः।
   पूर्णेंदौ बहुपुत्रदो.. बालोऽन्नभोक्ता भवेत्॥ काला.मल्लादि.पु.8,9

चन्द्रबलं प्रधानतया वीक्षितव्यम्[1]।

एकविंशतिमहादोषेषु चन्दस्यषष्ठाष्टव्ययस्थानस्थितिश्चन्द्रदोषत्वेन निर्णीतः[2]। तादृशचन्द्रदोषे सति जीवशुक्रसमन्वितमपि तल्लग्नं यत्नात् त्याज्यं भवति[3]। शशाङ्के ग्रहसंयुक्ते सग्रहसंज्ञितो दोषस्स्यात्। तस्मिन् दोषे तु विवाहो नैव कारयेत्[4]। पापग्रहमध्ये चन्द्रे कर्तरीदोषः स्यादिति केचन। तयो र्वक्रयोरथवा द्वादशस्थे वक्रेऽपि द्वितीयस्थे वक्रेऽपिच कर्तरीदोषो न स्यात्[4]। विवाहविषये जन्मकालिकचन्द्रराशेरष्टमलग्नं मारकं भवत्यतस्तत् त्याज्यम्[5]। उपनयनकाले सिंहराशिगतश्चन्द्रः वटुं पापिनं, स्वांशकर्काटकगतो दरिद्रं, तुलावृषभयोरन्यतरगतश्चन्द्रः वटुं विवाहान्वितं, मकरकुम्भयोरन्यतरगतःवटुं चण्डालसेवाकरं, मेषवृश्चिकयोरन्यतरगतश्चन्द्रः वटुमायुधमृतं, मिथुनकन्यागतश्चेत् वटुं विद्वांसं, धनुर्मीनगतश्चेत् वटुं क्रतुकारिणं करोति[6]। मुहूर्तदर्पणकारस्तु "चन्द्रो माता पिता सूर्यः प्राणाश्चैव बृहस्पतिः। तस्माद्बलत्रयं भाव्यं लग्ने वा गोचरेऽपि वा॥ श्लो.47, इति उपनयनमुहूर्ते चन्द्रस्य प्राधान्यं कथयन् तस्य

---

1. वर्णेशार्ककवीज्यवेदपबलं चाब्देन्दुताराबलं,
   तत्राचार्यकुमारयो गुरुबलं तेभ्यो हि मुख्यं व्रते। काला.वेङ्कट.श्लो.28
2. षडष्टरिप्फगे चन्द्रे लग्ने दोषस्स्वसंज्ञितः।
   तल्लग्नं वर्जयेद्यत्ना ज्जीवशुक्रसमन्वितम्॥ मुहू.द.354
3. त्याज्यं चाष्टमलग्नमेवजननाल्लग्नाच्च
   राशेस्तयो र्दम्पत्योरपिमृत्युकृत्..। काला.77, मल्लादि।
4. शशाङ्के ग्रहसंयुक्ते दोष स्सग्रहसंज्ञितः।
   तस्मिंत्सग्रहदोषे तु विवाहं नैव कारयेत्॥ मु.द.355
5. लग्नाद्द्वादशगो भवे दृजुगति र्वक्री द्वितीयस्थितः।
   पापौ द्वौ यदिमध्यमुभयो मृत्युप्रदौ कर्तरी।
   चन्द्रो वा यदिमध्यगस्तदुभयो रन्ये जगुः कर्तरी।
   तौ द्वौ वा न च कर्तरी ह्युजुगतीतद्व्यत्ययौ वक्रिणौ॥ काला.76 मल्लदि।
6. कुर्यात्पातकिनंवटुं शशधरस्सूर्यांशगस्स्वांशगो
   निस्स्वंभूमिसुतांशुमायुधमृतंज्ञांशंतुविद्यायुतम्।
   जीवांशंक्रतुकारिणंभृगुसुतस्स्वांविवाहान्वितं
   मन्दोंशंगताशुचोपनयनेचण्डालसेवाकरम्॥ काला.34, मल्लादि।

मातृकारकत्वं जगाद। एवं क्रमेण सः उपनयन लग्नविषये चन्द्रस्य प्राधान्यमेवं विशदीचकार। मित्रराशिगतश्चन्द्रः पूतनां केशव इव उपनयनलग्नोद्भवं दोषं हन्ति[1]। लाभगतश्चन्द्रः हरेः स्मृतिःपापसंघमिव दोषचयं हन्ति।[2] तुङ्गगश्शशी पञ्चाक्षरीवत् सर्वदोषचयं पापं हन्ति[3]। एवं लाभगश्शशी पिनाकी त्रिपुरं यथा तथा सर्वं दोषचयं हन्ति[4]। एवमुपनयनलग्नगतश्चन्द्रदोषो तद्भङ्गश्च पूर्वाचार्यमतोल्लेखपूर्वकं विशदीकृतं विद्यते। शुक्लपक्षेऽपि चन्द्रे सौम्यग्रहवर्गगेऽपि लग्नसंस्थे यदि व्रती सरोगी खलः निस्वः श्रुतिकर्महीनश्च भवति[5]। वाशिष्ठमतमिदमुदाहृतं मुहूर्तदर्पणकारेण। काश्यपमते तु स्वोच्चसंस्थोऽपि लग्नग शशीतांशु र्व्रतिनं दरिद्रं सततं क्षयरोगिणं करोति[6]। गर्गस्तु "शुक्लपक्षचन्द्रोऽपि लग्नगतश्चेत् वटो र्नितान्तमशुभकृदेव, तथापि स यदि सौम्यग्रहवर्गगश्चेत् व्रतिनः दीर्घायुं आरोग्यं सुखं च दद्यात्[7]। विशेषतो लग्नदोषभङ्गविषये गार्ग्यमतमेवं विद्यते। लग्ने कुलीरे गुरुचन्द्रसंस्थे, शुक्रबुधयो र्मेषस्थयोः, वृषभे सूर्ये, शेषै र्ग्रहै स्त्रिषष्ठायगतैरुपनीतः सम्पत्समेतो भवति[8]। केन्द्रे गुरौ, भवने पतङ्गे, शुभांशे

---

1. यत्रैकादशगस्सूर्यस्चन्द्रो वाऽमित्रराशिगः।
   हन्तिलग्नोद्भवं दोषं पूतनामिव केशवः॥ मुहू.द.68
2. अतिमित्रगतस्सूर्यश्चन्द्रो वा यदि लाभगः।
   हन्तिदोषचयं तद्वत्पापसंघं हरेः स्मृतिः॥ मुहू.द.69
3. त्रिषष्ठलाभगो भौम शशशीवा यदि तुङ्गगः।
   सर्वदोषचयं हन्ति पापं पञ्चाक्षरी यथा॥ मुहू.द.70
4. स्वकमित्रगतो भौमश्शशी वा यदि लाभगः।
   हन्ति दोषचयं सर्वं पिनाकी त्रिपुरं यथा॥ मुहू.द.71
5. प्रालेयरश्मौ यदि लग्नसंस्थे वलक्षपक्षेऽपि भवेत्सरोगी।
   व्रती च सौम्यग्रहवर्गगेऽपि खलोपि निस्स्वश्श्रुतिकर्महीनः॥ मुहू.द.78
6. स्वोच्चसंस्थोऽपि शीतांशु र्व्रतिनं यदि लग्नगः।
   तं करोति शिशुं निस्स्वं सततं क्षयरोगिणम्॥ मुहू.द.79
7. प्रालेयरश्मि र्यदि लग्नसंस्थो वलक्षेऽशुभकृन्नितान्तम्।
   सोऽपीह सौम्यग्रहवर्गग श्चे द्दद्यायुरारोग्यसुखानि दद्यात्। मुहू.द.80
8. लग्ने कुलीरे गुरुचन्द्रसंस्थे मेषे सितज्ञावृषभे पतङ्गे।
   शेषै स्त्रिषष्ठायगतै र्ग्रहै स्स्या द्यश्चोपनीत स्समुपैति लक्ष्मीम्। मुहू.द.81

तृतीये चन्द्रे विद्यमानेषु उपनीतस्य मुखे पद्मवने लक्ष्मीः इव वागीश्वरी समुपतिष्ठति[1]। लग्ने शुक्रः, कर्मणि गुरुः, शुभनवांशे शीतकरस्सूर्यश्च भवेयु र्यदि तर्ह्युपनीतस्य हृदिस्थ-शास्त्राण्यपि प्रियेक्षणेनेन्द्रियाणीव वर्धयन्ति[2]।

वैवाहिकप्रश्नकाले षष्ठाष्टमगत श्शुभग्रहयोगोऽथवा वीक्षणरहित श्चन्द्रः विवाहादष्टमवर्षानन्तरं वधूवरौ विनाशयति[3]। बलिनौ शुक्रपूर्णनिशाकरौ तस्याः कन्यायाः कन्या प्रदौ भवतः[4]। प्रश्नकाले लग्नगते चन्द्रे वरस्य सकललक्षणसम्पन्नकन्याप्राप्तिः, सप्तमे चन्द्रे रूपयौवनविद्याविनयसम्पन्नवरप्राप्तिः वक्तव्या भवति[5]। वैवाहिकमुहूर्तलग्ने च जननकालचन्द्रराशेरष्टमराशिः न शुभदः[6]। चन्द्रस्य मूढबालवृद्धदशाः न शुभप्रदाः[7]। जन्मचन्द्रराशेरष्टमव्ययस्थानेषु बृहस्पतेः स्थितिः कन्यकायाः वैधव्यं निर्दिशति। वरस्य तु जन्मचन्द्रलग्नात्तृतीयाष्टस्थानयो र्भार्यामृतिः, चतुर्थदशमस्थानयो र्दाम्पत्ये दुःखं, द्वितीय पञ्चम सप्तमनवमैकादशस्थानेषु तु बृहस्पतिः शुभप्रदस्यात्, अत एव वैवाहिके मुहूर्ते चन्द्रस्य नितरां प्राधान्यं वर्तते। प्रतिकूलश्चन्द्रः पूजादिभिरनुकूलश्शुभप्रदश्च भवतीति दैवज्ञानामभिप्रायः[8]। एकविंशतिमहादोषेषु चान्द्राः उपनयनोक्ताः दोषाः अपि अत्रानुवर्तन्ते।

---

1. केन्द्रेऽमरेज्ये भवने पतङ्गे चन्द्रे शुभांशे भवति तृतीये।
   वागीश्वरी तस्य मुखे वसन्ती पद्मा यथा पद्मवने सदा च॥ मुहु.द.82
2. लग्ने सितः कर्मणि देवपूज्यो भवेद्रवि श्शीतकर श्शुभांशे।
   हृदिस्थशास्त्राण्यपि वर्धयन्ति प्रियेक्षणेनैव यथेन्द्रियाणि॥ मुहू.द.83
3. चन्द्रोऽष्टमगोऽथ वा रिपुगतः प्रष्टु र्विलग्नाद्बली।
   पश्चा दष्टमवर्षतश्च पुरत स्सौम्यै र्न युक्तेक्षितः॥ काला.म.47
4. शुक्रपूर्णनिशाकरश्च बलिनौ तस्याश्च कन्याप्रदौ॥ कला.म.48
5. एते लग्नगताः वरस्य सुखदा स्स्त्रीरत्नलाभप्रदाः।
   जामित्रे यदि संस्थितास्तु युवतेः पुंरत्नलाभप्रदाः॥ काला.म.48
6. उद्वाहो न शुभस्स्वजन्मनि धने मासे च राशौ गृहे॥ काला.म.55
7. काला.म.57
8. वध्वाद्द्वादशरन्ध्रजन्मसुगुरुर्वैधव्यदस्स्यात्त्रिषट्संस्थः
   स्त्रीक्षयकृच्चतुर्थदशमस्थानस्थितो दुःखकृत्।
   आवश्यं बलमार्यसूर्यशशिनां भानां विवाहे द्वयो
   र्दुष्टस्थानगता अमी तु त्रिहितास्तेषां च पूजादिना॥ काला.म.59

वैवाहिके मुहूर्ते चन्द्रः, रविकुजबुधगुरुशुक्रशनिराहुकेतुग्रहाणां योगे क्रमेण कन्यायाः दारिद्र्यं मरणं पुत्रहीनतां दौर्भाग्यं सपत्नीं दारिद्र्यं कलहं दुःखं मुपकल्पयति[1]। प्रतिनिशायां रात्रिगतपञ्चदशमुहूर्तेषु नवमो मुहूर्तो चान्द्रो भवति[2]। अयं सर्ववारेषु ग्राह्यः। मुहूर्तलग्नात् चन्द्रः षष्टाष्टमव्ययेषु न भवितव्य स्स्यात्[3]। सप्तमस्थाने स्थितश्चन्द्रः जामित्रदोषेण सपत्नीप्रदो भवति[3]। वैवाहिकदोषभङ्गेषु चन्द्रे मुहूर्तलग्नस्यैकादशगे मुहूर्तलग्नषड्वर्ग-नवांशग्रहोद्भवाः दोषाः निहन्ति[4]। विपदि प्रत्यगे चैव चरमं चाद्यकं विना स्वोच्छस्वर्क्षगतश्चन्द्रश्शुभदः सर्वकर्मसु[5]। जन्मर्क्षलग्नयो र्वापि चन्द्रः केन्द्रे शुभे स्वोच्चमित्रमूलत्रिकोणेषु लग्नात्तृतीयषष्ठदशमैकादशस्थानेषु वा स्थितश्शुभेक्षितश्चेत् शुभदो भवति[6]। लगश्चन्द्रस्तु कन्यामेव आदरात् हन्ति[7]। द्वितीयतृतीयचतुर्थपञ्चमनवम-दशमैकादशस्थानगतश्चन्द्रो विवाहितान् सुतसौभाग्यभोगयुक्तान्करोति[8]। शनौ लाभस्थे सूर्ये षष्ठगे विलग्ने जीवे तृतीये कुजे चन्द्रे दशमर्क्षे शुक्रे रन्ध्रे च स्थिते महान् समायोगः

---

1. दारिद्र्यं मरणं त्वपत्यरहितं दौर्भाग्यमेव स्त्रियां
   सापत्न्यं यतिभावमेवकलहं दुःखं च कुर्यात्क्रमात्।
   उद्वाहादिषु चन्द्र एकभवने सूर्यादिखेटै र्युतो
   नक्षत्रान्तरग श्शुभो यदि शशी त्यन्येजगुर्नेतरे॥ काला.म.79
2. रात्रौ पञ्चदशेश्वराजचरणाहिर्बुध्न्यपूषाभिदाना
   सत्यान्तकवह्निधातृशशिनश्चादित्य जीवाच्युताः॥ काला.म.81
3. जामित्रे ग्रहवर्जिते हिमकरो लग्नाष्टरिप्फारिगः॥
   जामित्रे च करग्रहे स्थित इनो वैधव्यमिन्दुस्स्त्रियास्सापत्न्यं..॥ काला.म.94,95
4. मुहूर्तलग्नषड्वर्गकुनवांशग्रहोद्भवाः
   ये दोषा स्तान्निहन्त्येव यत्रैकादशग श्शशी॥ मुहू.द.231.
5. विपदि प्रत्यगे चैव चरमंचाद्यकं विना।
   स्वोच्चस्वर्क्षगत श्चन्द्रश्शुभद स्सर्वकर्मसु॥ मुहू.द.238
6. जन्मर्क्षलग्नयो र्वापि चन्द्रश्शस्त श्शुभेक्षितः।
   केन्द्रे शुभे स्वर्गे वा लग्नादुपचयेऽपिवा॥ मुहू.द.239
7. वैधव्यंतरणिस्तनोति हिमगुस्तामेव हन्त्यादरात्...लग्ने विवाहेऽष्टभिः। मुहू.द.242
8. धनत्रिबन्धुतनयधर्माऽऽज्ञाऽऽयेषुचन्द्रमाः।
   करोति सुतसौभाग्ययुक्ता न्विवाहितान्॥ मूहू.द.243

कथ्यते। एष हि योगो दम्पत्योः पुत्रपौत्रदः[1]।

## यात्राविचारे चन्द्रस्य प्राधान्यम्

यात्राविषयकप्रश्ने शुभग्रहैरप्रेक्षितश्चन्द्रः लग्नस्य षष्ठाष्टव्ययगे प्रयाणविघ्नकरो भवति[2]। कृत्तिकादि सप्तनक्षत्राणि चन्द्रगर्भचक्रनिर्माणमुच्यन्ते। तानि च क्रमात् मृत्यु व्याधिभयार्थभूमिभीतिरोगफलप्रदानि[3]। सूर्याधिष्ठितनक्षत्रादारभ्याभिजित्सहितं सप्त सप्त नक्षत्राणि चन्द्राधिष्ठितभान्तं आटलस्वरूपो भवति। सः यातुः क्षेमं ताडनं आर्तिं आयुषं अभयं देशभ्रमणं ताडनमिति सप्तफलानि क्रमेण प्रयच्छति[4]। एवं चन्द्रकण्टकराशिषु च प्रयाणं मृत्युप्रदम्। मेषसिंहधनूंषि पश्चिमदिशः, मकरवृषभकन्याः उत्तरदिशः, मिथुनतुलाकुम्भाः पूर्वदिशः, कटकमीनवृश्चिकाः दक्षिणदिशः चन्द्रकण्टकराशयः भवन्ति[5]। अश्विनी धनिष्ठापुष्यमीविशाखानुराधाशतभिषाश्रेषा नक्षत्राणि धर्मनक्षत्राणि, पुनर्वसूज्येष्ठाभरणीमखाश्रवणापूर्वाभाद्रास्वातीति सप्त अर्थनक्षत्राणि, अभिजित्पूर्वफल्गुनीकृत्तिकामूलोत्तराभाद्राचित्ताद्रेति सप्त कामनक्षत्राणि,

---

1. लाभस्थे सूर्यपुत्रे च षष्ठे सूर्ये च तिष्ठति विलग्ने स्थिते जीवे तृतीये धरणीसुते।
   चन्द्रे च दशमर्क्षे तु शुक्रे रन्ध्रे च संस्थिते एकस्तु स्यात्समायोगो दम्पत्योः पुत्रपौत्रदः॥
   मुहू.द.246, 247.
2. षष्ठाष्ट व्ययगश्शशी शुभखगै रप्रेक्षितो भङ्गकृत् ॥ काला.वें.157.
3. आग्नेयर्क्षमघानुराधवसुभेष्वेकैकभात्साभिजि
   न्नक्षत्राणि च सप्तसप्तगमने दद्युः प्रयातुः फलम्।
   मृत्युर्व्याधिभयार्थराशिवसुधाभीत्यामयाख्यंक्रमात्
   किं चक्रेण तु चन्द्रगर्भफलितं त्वेतन्मया निश्चितम्॥ काला.वें.168
4. चन्द्राधिष्ठितभान्त मेव गणये दर्कान्वितर्क्षादितो
   नक्षत्राण्यपि सप्तसप्तगमने दद्युः फलं साभिजित्।
   क्षेमं ताडन मार्ति मायु रभयं देशभ्रमं ताडनं
   यातु श्चाडलदोष एव सकले कार्ये च चिन्त्योऽथवा॥ काला.वें169
5. जीवेच्छुर्यदिचन्द्रकण्टकग्रहेष्वेतेषुनैवव्रजेन्मेषेसिंहगृहेधनुष्यपिसुधीर्याताप्रतीचींदिशम्॥
   कौबेरींमकरेवृषेयुवतौयुग्मेतुलायांघटेप्राचींमृत्युंदिशंतुकर्कटगृहेमीनालयेवृश्चिके॥
   काला.वें.173

उत्तराषाढापूर्वाषाढारेवतीहस्तोत्तरफल्गुनीमृगशिरारोहिणीति सप्त मोक्षनक्षत्राणि[1]। अर्थगते चन्द्रे यायिनो विजयः स्थायिनो भङ्गः, कामगते चन्द्रे यायिनोऽपजयः स्थायिनो सभङ्गविकलं, मोक्षगते चन्द्रे यायिनो जयः स्थायिनो विशेष संगरः, धर्मगते चन्द्रे यायिनो भङ्गः स्थायिनो विजयः। एष हि नियमः पन्थाराहुचक्रविवक्षद्वारा भृत्याण्डजाजसंगरे, प्रयाणे, राज्ञां युधि च फलत्वेन भवति[2]। नासिकायाः दक्षिणपार्श्वे वायुसञ्चारः सूर्यनाडित्वेन, तथैव वामपार्श्वे वायुसञ्चारः चन्द्रनाडिरुच्यते। चन्द्रनाड्या भूषणधारणविवाहक्षेत्राद्येषु शुभत्वं ज्ञायते[3]। प्रयाणलग्ने शुक्रबुधपूर्णचन्द्रेष्वन्यतमे यदि लग्ने आयुषं, द्वितीये द्रव्यं, तुतीये जयं, चतुर्थे अन्नं, पञ्चमे बन्धुलाभं, षष्ठे कलहं, सप्तमे स्त्रीलाभं, अष्टमे व्याधिं, नवमे भोगं, दशमे उत्सवं, एकादशे फलप्राप्तिं, द्वादशे वस्त्वभावं वक्तव्यम्[4]। क्षीणचन्द्रे तु क्रमेण रोगं भयं भूषणलाभं शत्रुदर्शनं चित्तवैकल्यं धनं शरीरजाड्यं मरणं कलहं अनर्थं भूलाभं पदार्थक्षयं वक्तव्यम्। सर्वकर्मसमारम्भकताराबले साधन तारायाः अधिपश्चन्द्रः, फलं च तस्य यशः प्रदत्वम्[5]।

---

1. वस्वाद्यार्यविशाखामित्रवरुणाह्याख्याश्चधर्माभिधा
   ह्यर्थाख्यास्त्वदितींद्रकालपितृभश्रीशाजपाद्वायवः।
   कामख्याऽभिजिद्धगाग्निदनुजाहिर्बुध्न्यचित्रेश्वरा
   विश्वाप्यांत्यकरार्यमेन्दुविधयो मोक्षाभिधा स्तारकाः॥ काला.वें.193
2. सूर्येधर्मगतेतथाहिमकरेधर्मादिसंस्थेक्रमाद्यायीभङ्गमवाप्नुयादथजयं क्रोधादनर्थंजयम्।
   स्थायीयाद्विजयंसंभंगविकलंतद्विग्रहंसंगरंभृत्याजाण्डजसंगरेचगमनेसर्वत्रराज्ञांयुधि॥
   काला.वें.194
3. नासादक्षिणभागजातपवनस्सूर्याख्यनाडीशुभासंग्रामव्यवहारमैथुनभयस्नानान्नभङ्गार्तिषु।
   नाड्यन्या श्शशिनश्शुभैवगमनालङ्कारपाणिग्रहक्षेत्राद्येषुयदंशवायुचलनेतत्पादपूर्वंव्रजेत्॥
   काला.वें.198
4. आयुर्द्रव्यजयान्नमित्रकलहस्त्रीव्याधिभाग्योत्सव
   प्राप्त्यप्राप्तिकराः क्रमाच्छुभखगाः यात्रागृहादिस्थिताः।
   क्रूरास्त्वामयभीतिभूषणरिपुभ्रान्त्यर्थपीडामृति
   क्रोधानर्थवसुन्धरा व्ययकरास्स्यु र्यातु रेवाध्वनि॥ काला.वें.201
5. जन्मन्यर्को हिमकरसुतस्सैंहिकेयस्सुरेज्यः केतुश्चन्द्रो दिनकरसुतो भार्गवो भूमिपुत्रः।
   तापं लाभं क्षतिधृतिलयान्कीर्तिहानिप्रमोदान्मृत्युं ताराबलमनुदिनं ते दिशन्ति क्रमेण॥ मुहू.प्र.पृ.33

षट्पञ्चमगतश्चन्द्रो वायव्यां ललाटको भवति।[1] ललाटकयोगे प्रयाणं शुभप्रदम् भवति।

## वास्तुविषये

वास्तुमुहूर्तेषु स्तम्भप्रतिष्ठाकाले गृहकर्णिकाचक्रे चन्द्रग्रहेण सूर्यादिकेत्वन्ताः ग्रहाः क्रमात् अग्नि मृत्यु रोग दौर्भाग्य कलहचोर दारिद्र्य स्थानचलन भयप्रदाः भवन्ति[2]। अतः ग्रहाणां चन्द्रेण योगो न शुभप्रदः। गृहप्रवेशविषये लग्नात् षष्ठाष्टव्ययेषु चन्द्रस्थितिः यजमानस्यापत्नीकप्रदा भवति[3]। मुहूर्तदर्पणकारस्तु चन्द्रलग्नस्य शुभत्वं कथयति शङ्कुस्थापने[4]। एवं चन्द्रेण सह लग्ने गुरौ वा भार्गवे सति संस्थापितं वेश्म वह्निनापि न बाध्यते इति शङ्कुस्थापने चन्द्रबलमदर्शयत्[5]। गृहप्रवेशविषये केन्द्रेषु सौम्येषु स्थितेषु केन्द्राष्टमस्थानेषु पापवर्जितेषु सत्सु गुरुशुक्रलग्नेष्वन्यतमे वा स्थिरलग्ने वा चन्द्रानुकूलं दृष्ट्वा गृहप्रवेशः कर्तव्यः[6]। जलरूपस्य चन्द्रस्य कूपारम्भमुहूर्ते प्राधान्यता विद्यते। अत एव मुहूर्तदर्पणकारः ''चन्द्रशुक्रयुते केन्द्रे पर्वते च जलं भवेत्।'' ''जलराशिगते चन्द्रे शुक्रे वापि विशेषतः'' इति व्याजहार[7]। ओषधिपतित्वादस्य सोमवासरो

---

1. षट्पञ्चमगतश्चन्द्रो वायव्यां तु ललाटकः॥ मुहू.द.403
2. रेखायां च तिरश्चि तत्र गृहिणः स्तम्भप्रतिष्ठागमे
   सूर्येणाग्निभयं कुजेन सहितोमृत्युं बुधेनामयम्।
   दौर्भाग्यंगुरुणा सितेन कलहं मन्देन चोरागमं
   दारिद्र्यं तमसाध्वजेन चलनं कुर्या च्छशीतद्गुहे॥ काला.वें.242
3. क्षीणेन्दुश्च षडष्टरिप्फगृहगश्चे त्सन्निवेशालया
   द्धन्या त्कर्तृकलत्रमाशुनिविशे ल्लग्ने विशुद्धे ऽष्टमे॥ काला.वें.280
4. स्तम्भं चन्द्रोदये स्थाप्यं वेश्मारोहं बुधोदये।
   शुक्रोदये तु संछाद्यं नचाग्निभय माप्नुयात्॥ मुहू.द. 441
5. गुरौ वा भार्गवे वापि चन्द्रेण सहलग्नगे।
   तत्र संस्थापितं वेश्म वह्निना च न बाध्यते॥ मुहू.द.448
6. केन्द्रेषु सौम्ये गुरुशुक्रलग्ने पापेषु केन्दाष्टमवर्जितेषु।
   ग्रामे स्थिरे वाऽथ वने विलग्ने गुहं विशे च्छीतकराऽनुकूले॥ मुहू.द.153
7. मुहू.द.459, 460.

बीजावापने शुभप्रदत्वेन स्वीकृतः[1]। "कर्काटकलग्नः बहुफलदः चन्द्रोच्चराशि र्वृषभस्तु धान्यप्रद" इति दैवज्ञैरुच्यते।[2]

जीर्णालयप्रतिष्ठायां शिवलिङ्गप्रपूजने चान्द्रो मुहूर्तश्शुभवत्तर इति मुहूर्तकण्ठाभरणवचनम्[3]। मुहूर्ते लग्ने त्रिकोण पञ्चमे नवमे वा चन्द्रमाः यदि तदानीं नियतं सुखं वाच्यम्[4]। मौहूर्तिकाल्लग्नात् केन्द्रे पूर्णचन्द्रे गरुडदर्शनं ध्वजशुक्लाम्बरोत्सवाः आशीर्वादमङ्गलगीतवादित्रनिस्स्वनाः कन्यागोदुग्धमैरेयघृतानां च प्राप्ति र्भवतीति सुधियो वदन्ति[5]। एवं प्रयाणकाले क्षीणचन्द्रे स्त्रीभिः कुष्ठरोगेन वा नरः व्यथामाप्नोति, पूर्णचन्द्रे तु राजप्रासादतीर्थादीनां प्रवेशनं नृत्तगीतप्रसङ्गश्रेष्टकान्तासमागमश्च भवति[6]।

ज्योतिषशास्त्रे चन्द्रप्रस्तावे विचार्यमाणे महान् प्रबन्ध स्सम्पद्यते। विषयस्य बहुमुखत्वात् प्रधानाः स्यूलाः विषयाः एवात्र समालोकिताः।

---

1. शुक्रेन्द्वोर्बुधजीवयोश्च दिवसाश्शस्ताश्च नान्ये वराः। मुहू.द.466
2. मेषे चेत्पशुनाशनं बहुफलं चेत्कर्कटे चेत्घटे
   कुर्यात्प्राणहतिं च सस्यहरणं लग्ने मृगे सर्वदा।
   सिंहे चोरभयं घटे बहुभयं बीजाप्तिराद्या शुभा
   कन्यागोझषयुग्मवृश्चिकधनुष्वेतेषु धान्यप्रदा॥ काला.वें.329.
3. जीर्णालयप्रतिष्ठायां शिवलिङ्गप्रपूजने।
   चान्द्रो मुहूर्तः कथितः सद्भिश्च शुभवत्तरः॥ मुहू.क.2.25
4. मौहूर्तिकस्य लग्नस्य त्रिकोणे यदि चन्द्रमाः।
   तदानीं नियतं वाच्यं सुखं वा दुःखमेव वा। मुहू.क.3.27
5. पूर्णचन्द्रे तु गरुडःध्वजश्शुक्लाम्बरोत्सवाः।
   आशीर्वचनमाङ्गल्य गीतवादित्रनिःस्वनाः।
   कन्यागोदुग्धमैरेयभटयुद्धादिदर्शनम्॥ मुहू.क.4.3,4.
6. क्षीणचन्द्रे वधूप्राप्तं भयं ब्रूयादतन्द्रितः।
   यक्ष्मणा वा जलयुते जलान्मृत्यु र्न संशयः॥ मुहू.क.5.10
   शुभे राजप्रसादादि तीर्थादीनां प्रसेवनम्।
   नृत्तगीतप्रसङ्गश्रेष्टकान्तासमागमः॥ मुहू.क.5.11

## निष्कर्षः

कालबोधकं ज्योतिषं शास्त्रं यज्ञकर्मप्रवृत्तानां वेदानां षडङ्गेष्वन्यतमं विराजते। वैदिककाले गणितपद्धतेरभावेऽपि, एवं पञ्चाङ्गरचनापद्धतेः यन्त्रोपकरणादिपद्धतेश्चाभावेऽपि सूर्याचन्द्रमसोर्गतिवशादानीततिथिनक्षत्रज्ञानमात्रमस्तीति, वशिष्ठादयो महर्षयोऽतीन्द्रियज्ञानवन्तः क्रान्तदर्शिनः तत्त्ववेत्तारो भूत्वाऽऽर्षेणचक्षुषाऽतीन्द्रियान् असंवेद्यान् भावानुक्तवन्त इति विज्ञायते। सिद्धान्त-संहिता-होरारूपस्य ज्योतिषशास्त्रस्य प्रवक्तारो महर्षयोऽष्टादश आसन्। द्वादशराश्यात्मके खगोले चन्द्रस्य स्थानं कुलीरराशिः। अयं श्वेतवर्णः। श्वेतवर्णस्याधिपतिश्चायम्। जलमस्याधिदेवता। दिक्षु वायव्यदिगाधिपत्यमस्य विद्यते। पूर्ण-क्षीणभेदेनायं चन्द्रः शुभाशुभग्रहो भवति। राजसगुणश्चन्द्रः रसेषु लवणस्य, वस्त्रेषु नूत्नवस्त्रस्य, ऋतुषु प्रावृषः, विबुधमनुष्यादिषु मनुष्याणामाधिमत्यं भजते। सूर्येण सह अयमपि चन्द्रः ग्रहराजत्वेनोच्यते। सप्तधातुषु चन्द्रः असृक्सारो भवति। नवग्रहेष्वन्यतमोऽयं चन्द्रः मनुजानां मातृकल्पः। कालपुरुषस्य मनोभूतश्चन्द्रमाः सर्वेषां प्राणिनामपि मनोरूपः। स्त्रीपुंनपुंसकग्रहविभागे चन्द्रोऽयं स्त्रीग्रहत्वेन निर्दिष्टः। अम्बुसंस्थः कर्काटकराशिरस्य स्वस्थानं, वृषभराशिरस्योच्चस्थानं, वृश्चिकराशिस्तु अस्य नीचस्थनं निर्दिष्टम्। ग्रहेषु बुधादित्यावस्य मित्रग्रहौ, कुजगुरुशुक्रमन्दाः समाः, शत्रुस्तु न विद्यतेऽस्य। किन्त्वयं सूर्यकुजबृहस्पतीनां मित्रं, बुधशुक्रशनीनां तु शत्रु र्भाव्यते। स्थानदिग्चेष्टाकालनैसर्गिकरूपपञ्चबलेषु चन्द्रस्योच्चत्रिकोणे वृषभे स्थानबलं, चतुर्थे स्थितस्योत्तरदिशि दिग्बलं, उत्तरायणे मकरषट्के चेष्टाबलं, निशिकालबलं, शनिकुजबुधगुरुशुक्रचन्द्ररवीनां उत्तरोत्तरवृद्ध्या नैसर्गिकबलं च भवति।

चन्द्रस्य कारकत्वेन बुद्धिपुष्पसुगन्धदुर्गगमनव्याधिश्लेष्मालस्यापत्मृतिगुल्मभावहृदयमनोमातृवस्त्रजलकृषिस्त्रीवित्तगोक्षीरव्रीहिमणिशङ्खमुक्ताविनयरसवर्गफलवर्गधात्रीदीप्तिसन्तोषादिबहवः विशेषाः ख्याताः।

राशिभेदेनास्य स्थितेः फलानि भिन्नानि भवन्ति। दशवत्सरात्मकचन्द्रमहर्दशायां भुक्तिवशात् भिन्नानि फलानि ददाति चन्द्रः। एवं तत्र तत्र रव्यादिग्रहदृष्ट्या च विभिन्नानि फलानि प्राप्नोति पुरुषः। एवं तन्वादिद्वादशभावेषु स्थितश्चन्द्रः पृथक् पृथक् फलप्रदो भवति। एवं एक द्वि त्रि चतुर् पञ्च षडिति ग्रहयोगेन चन्द्रः भिन्नभिन्नफलदाता भवति। पापान्विते चन्द्रे मातुरभावं, शुभान्विते तु तस्मिन् मनुजः यशोधनराजगौरवादिक मुपगच्छति। प्रायः द्व्यधिकपापग्रहयोगे नरः दरिद्रः, लोकनिन्दितः, कुरूपः, दुःखी मूर्खश्च भवति।

अधियोगः सुनफायोगः अनफायोगः दुरधुरायोग इति चत्वारः चान्द्राः शुभयोगाः। केमदुमस्तु अवयोगः। राजयोगेषु चन्द्रस्य प्रचुरं स्थानं विद्यते। एवं मुहूर्तस्कन्धे - यात्राविषये - वास्तुविषये च चन्द्रस्य स्थानं प्रकर्षं प्रभावान्वितं प्रतिभासते।

## अष्टमी कला

# व्याकरणे चन्द्रः

### प्रस्तावना

षड्विधवेदाङ्गेषु व्याकरणमन्यतमं प्रतिभाति। ''प्रथमे हि विद्वान्सो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्'' इति[1] विदुषां वचनं व्याकरणाशास्त्रस्य वैशिष्ट्यं बोधयति। व्याकरणशास्त्रम् वेदमूलम्। तदर्थमेव व्याकरणशास्त्रमाविर्भूतमिति षडङ्गेषु स्थानकल्पनादेवास्य विज्ञायते। अस्य शास्त्रस्योत्पत्तिः कदाऽभवदिति निर्णेतुं न शक्यते। शास्त्ररूपत्वेन व्याकरणशब्दप्रयोगस्तु वाल्मीकिरामायणे एवोपलभ्यते। ''नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्। बहु व्याहरतानेन न किंचिदपभाषितम्॥ (किष्कि.3.29) एवं व्याकरणशब्दस्य शास्त्रविषयत्वेन प्रयोगः बहुषु प्राचीनग्रन्थेषु समुपलभ्यते। श्रीमद्रामायणे[2] गोपथब्राह्मणे[3] मुण्डकोपनिषदि[4] भारते[5] चास्य शब्दस्य प्रयोगः सन्दृश्यते।'' ''पुरा कल्प एतदासीत्, संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते।'' इति हि महाभाष्यवचनम्[6]। अस्माद्वचनात् प्राचीनकालादपि पठन पाठनादिषु व्याकरणशास्त्रं प्रचलितं प्रतिभाति।

---

1. ध्वन्या.प्र.उ.पु.65
2. रामा.किष्कि.3.29
3. ''किं वै व्याकरणम्? को विकारः? को विकारी? कति मात्रः? कति वर्णः? कत्यक्षरः? कति पदः? कः संयोगः? किं स्थानानुप्रदानकरणम्? शिक्षुकाः किमुच्चारयन्ति?''
   गो.ब्रा.1.24
4. तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते॥
   मुण्ड.1.1.5
5. म.भा.उ.43.61
6. व्या.म.1.1.1.पु.40

## व्याकरणशास्त्रप्रवक्तारः तत्र चन्द्रः

अस्य शास्त्रस्य प्रथमः प्रवक्ता ब्रह्मा। द्वितीयः प्रवक्ता बृहस्पतिः। एवं तृतीयः इन्द्रः, ततः भरद्वाजः, भरद्वाजात् ऋषयः, ऋषिभ्यो ब्राह्मणाः व्याकरणशास्त्रमधीतवन्त इति ऋक्तन्त्रतः ज्ञायते[1]। बृहस्पतेर्व्याकरणप्रवक्तृत्वे पतञ्जलेः वचनं प्रमाणीक्रियते। "बृहस्पति रिन्द्राय दिव्यं वर्षसहस्त्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच।" (म.भा.1.1.1)। अत्र महाभाष्यव्याख्याता कैयटः शब्दपारायण मित्यस्यार्थं विवृण्वन् "शब्दपारायणं" रूढिशब्दोऽयं कस्यचित् ग्रन्थस्येति व्याख्यातवान्। अतः बृहस्पतेः व्याकरणप्रवक्तृत्वं, तद्ग्रन्थश्च शब्दपारायणाभिध इति निश्चीयते[2]। व्याकरणशास्त्रस्य संस्कर्ता इन्द्र इति तैत्तिरीयसंहितायां तद्व्याख्याभूतसायनभाष्ये चोपलभ्यते[3]।

एवमारभ्य व्याकरणप्रवक्तारः पाणिनेः पूर्वं 85 सन्तीति वैयाकरणशास्त्रैतिहासिकाः कथयन्ति। प्रतिशाख्यासु वैदिकव्याकरणग्रन्थेषु उपलभ्यमानाः ते हि (59) एकोनषष्टि। पणिनिना निर्दिष्टाः स्वस्मात् प्राचीनाः वैयाकरणाः(10) दश। तदन्यग्रन्थेषु उपलभ्यमानाः षोडश(16)। आहत्य पञ्चाशीति (85) व्याकरणाचार्याणां नामानि उपलभ्यन्ते।

एवं स्थिते लोके व्याकरणप्रवक्तारः अष्टेति (8) केचन, नव (9) इति केचन व्याहरन्ति। अष्टव्याकरणप्रवक्तृष्वपि नामव्यत्यासो दृश्यते। हैमबृहद्वृत्त्यवचूर्ण्याम्- "ब्राह्ममैशानमैन्द्रं च प्राजापत्यं बृहस्पतिम्॥ त्वाष्ट्रमापिशलं चेति पाणिनीयमथाष्टमम्॥" इत्येवमष्टव्याकरणनामभिः तत्प्रवक्तारश्च समुल्लिखिताः सन्ति[4]। एवं भविष्यपुराणे ब्राह्मपर्वणि

---

1. ब्रह्मा बृहस्पतये प्रोवाच। बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाजः ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः॥ ऋक्तन्त्रः.1.4
2. व्या.म.1.1.1.पु.41
3. ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकुर्वीत। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्॥ तै.सं. तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं सर्वत्राकरोत्॥ सा.भा.6.4.7
4. सं.व्या.शा.इ.पु.29

"प्रथमं प्रोच्यते ब्राह्मं द्वितीयमैन्द्रमुच्यते।
याम्यं प्रोक्तं ततो रौद्रंवायव्यंवारुणं तथा॥
सावित्रं च तथा प्रोक्तमष्टमं वैष्णवं तथा॥"

इत्यस्ति[1]। एवं ऋग्वेदकल्पद्रुमे यामुलाष्टके तु ब्राह्म चान्द्र याम्य रौद्र वायुव्य वारुण सौम्य वैष्णव नामानि सन्ति। एवञ्च औपदेवः स्वकृतकविकल्पद्रुमे -

"इन्द्रश्चन्द्रः काशकृष्णापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः॥" इति अष्टशाब्दिकानुदाजहार। एष हि समीक्षाऽष्टव्याकरणप्रणेतॄणाम्।

सम्प्रति नवव्याकरणप्रणेतॄन् विचारयमः। रामायणे उत्तरकाण्डे सोऽयं नवव्याकरणार्थवेत्ता" (रामा उ.36.47) इति, "नूनं व्याकरणं कृत्स्नमनेनबहुधा श्रुतम्।" (रामा किष्कि.3.29) इति रामायणीयवचने तदानीन्तनां नवव्याकरणसाम्प्रदायप्रसिद्धिं, व्याकरणशास्त्रबाहुल्यं वेदयतः, नतु तत्प्रणेतॄन्। श्रीतत्वनिधिनामक वैष्णवग्रन्थे नव व्याकरणानि निर्दिष्टानि[2]। तानि हि -

"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकल्यं पाणिनीयकम्॥" इति[3]। अयमेवश्लोकः लघुत्रिमुनिकल्पतरुकृत इति श्रीरामचन्द्रमिश्राः सूचयन्ति[4]। एवञ्च काशिकावृत्तौ सूचितानि पञ्चव्याकरणानि तु ऐन्द्र चान्द्र पाणिनीय काशकृत्स्न तथापिशलानीति भवेयुः। एष हि आचार्य श्री युधिष्ठिरमीमांसकानामभिप्रायः[5]।

एवञ्च विचार्यमामे नवविधाष्टविधपञ्चविधव्याकरणप्रणेतॄणामुल्लेखे चन्द्रस्य नामोपलभ्यते। सोऽयं चन्द्रः अस्माकं प्रसङ्गविषयः चन्द्रगोलविषयो वा देवताविषयो वा भवति वा न वेति निर्धारयितव्योऽस्ति। अत्र निर्धारणे पाणिनिं बिन्दुं कृत्वा तत्प्राचीनार्वाचीनव्याकरणप्रणेतॄणां नामानि परिशीलयितव्यानि सन्ति। तत्र प्रथमतः प्रातिशाखाख्येषु वैदिकव्याकरणग्रन्थेषु समुट्टङ्कितानि नामानि परिशीलयामः। तानि एकोनषष्टिसंख्याकानि(59)। तथाहि ते -

---

1. सं.सा.इ.पु.19
2. सं.व्या.शा.इ.पु.30
3. सं.व्या.शा.इ.पु.30
4. सं.सा.इ.पु.19
5. सं.व्या.शा.इ.30

| | | |
|---|---|---|
| 1. अग्निवेश्य | 2. अग्निवेश्यायन | 3. अन्यतरेय |
| 4. आगस्त्य | 5. आत्रेय | 6. इन्द्र |
| 7. उख्य | 8. उत्तमोत्तरीय | 9. औदव्रजि |
| 10. औपशवि | 11. काण्ड्यायन | 12. कात्यायन |
| 13. काण्व | 14. काश्यप | 15. कौण्डिल्य |
| 16. कौहलीपुत्र | 17. गार्ग्य | 18. गौतम |
| 19. जातुकर्ण्य | 20. तैत्तिरीयक | 21. दाल्भ्य |
| 22. नैगी | 23. पञ्चाल | 24. पाणिनि |
| 25. पौष्करसादि | 26. प्राच्यपञ्चाल | 27. प्लाक्षायणि |
| 28. प्लाक्षि | 29. बाभ्रव्य | 30. बृहस्पति |
| 31. भरद्वाज | 32. ब्रह्मा | 33. भारद्वाज |
| 34. माक्षव्य | 35. माचाकीय | 36. माण्डूकेय |
| 37. माध्यन्दिन | 38. मीमांसक | 39. यास्क |
| 40. वाडवीकर | 41. वात्सप्र | 42. वाल्मीकि |
| 43. वेदमित्र | 44. व्याडि | 45. शाकटायन |
| 46. शाकल | 47. शाकल्य | 48. शाकल्यपिता |
| 49. शाङ्खमित्रि | 50. शाङ्ख्यायन | 51. शूरवीर |
| 52. शूरवीरसुत | 53. शैत्यायन | 54. शौकन |
| 55. स्थविरकौण्डिण्य | 56. स्थविरशाकल्य | 57. सांकृत्य |
| 58. हारीत | 59. नकुलमुख इति। | |

पाणिनिना स्वसूत्रे निर्दिष्टाः वैयाकरणाः दश (10) ते हि -

| | | |
|---|---|---|
| 1. आपिशलिः | वासुप्यापिशलेः | 6.1.92 |
| 2. गार्ग्यः | ओतो गार्ग्यस्य | 8.3.20 |
| 3. आचार्यः | आदाचार्याणाम् | 7.3.49 |
| 4. गालवः | अट् गार्ग्यगालवयोः | 7.3.99 |
| 5. चाक्रवर्मणः | ईचाक्रवर्मणस्य | 6.1.130 |
| 6. भरद्वाजः | ऋतो भरद्वाजस्य | 7.2.63 |
| 7. शाकटायनः | व्योर्लघुप्रयत्नतरः शाकटायनस्य | 8.3.18 |

| | | |
|---|---|---|
| 8. शाकल्यः | लोपः शाकल्यस्य | 8.3.19 |
| 9. सेनकः | गिरेश्च सेनकस्य | 5.4.112 |
| 10.स्फोटायनः | अवङ् स्फोटायनस्य | 6.1.123 इत्येते। |

एवमन्यत्रोल्लिखिताः पाणिनेः पूर्वाः व्याकरणप्रवक्तारः षोडशोपलभ्यन्त इति कथितं किल। ते हि –

| | | |
|---|---|---|
| 1. शिवः | 2. बृहस्पतिः | 3. इन्द्रः |
| 4. वायुः | 5. भरद्वाजः | 6. भागुरिः |
| 7. पौष्करसादिः | 8. चारायणः | 9. काशकृत्स्नः |
| 10.शन्तनुः | 11.वैयाघ्रपद्यः | 12.माध्यन्दिनिः |
| 13. रौढिः | 14.शौनकिः | 15.गौतमः |
| 16. व्याडिः[1]॥ इति॥ | | |

एवं पाणिनेः प्राक्तानानां व्याकरणाचार्याणां नामसु चन्द्रस्योल्लेखो नास्ति। पूर्वोक्तनवाष्टपञ्चभेदव्याकरणप्रवक्तृनामसु चन्द्रः दृश्यते। तथापि भविष्यपुराणादि पाणिनेः प्राक्तनग्रन्थेषु तु स हि न दृश्यते। किन्त्ववर्वाचीनेषु तु पाणिनेः औपदेवादि प्रोक्तेषु चन्द्रो नाम व्याकरणप्रवक्ता सन्दृश्यते। अतश्चन्द्रः पाणिनेरनन्तरग्रन्येष्वेव सन्दृश्यते इति हेतोः लोके प्रथितस्य चान्द्रव्याकरणकर्तुः चन्द्रस्य, देवताख्यातेन चन्द्रेण कोऽपि सम्बन्धः नास्तीति निश्चयेन वक्तुं शक्यते। भट्टोजिदीक्षितस्तु स्वकीयायां वैयाकरणसिद्धान्तकौमुद्यां "फलेग्रहिरात्मम्भरिश्च" (पा.अ.3.2.26) इति सूत्रविवृतौ "चान्द्रास्तु, आत्मोदरकुक्षिषु इति पेठुः" इति पपाठ[2]। अत्र निर्देशितः चान्द्रव्याकरणसम्प्रदायप्रवर्तकः चन्द्रस्तु चन्द्रगोमीति प्रसिद्धः पाणिनीयव्याकरणाधरेण नूत्नव्याकरणग्रन्थप्रणेता काश्मीरवासी, काश्मीरनृपतेः अभिमन्यो स्समकालिकः बौद्ध इति ऐतिहासिकाः कथयन्ति[3]। तद्विषयः अत्र अप्रसङ्गत्वात् तद्व्याकरणविशेषाश्च सम्प्रत्यत्र न प्रस्तूयन्ते।

---

1. संस्कृतव्याकरणशास्त्रेतिहासे एतेषां विशेषाः विपुलतया दर्शिताः।
2. वै.सि.कौ.सूत्रसंख्या.2940
3. सं.व्या.इ.पु.215

   "चान्द्र व्याकरणवृत्तेः समालोचनात्मकमध्ययनम्" डा.हर्षनाथ मिश्रः।भूमिका, प्र.भा.पु.5,

## औणादिकचन्द्रार्थकपदविचारः

व्याकरणप्रवक्तृष्वविद्यमाने चन्द्रप्रस्तावे सम्प्रति व्याकरणशास्त्ररीत्या चन्द्रशब्दनिर्वचनं, चन्द्रार्थकान् कांश्चनौणादिकशब्दप्रयोगान् परिशीलयामः। सर्वे ह्येते शब्दाः धातुजाः एव।

***चन्द्रः*** :- "चदि-आह्लादे दीप्तौ चे" ति[1] धातोः "इदितो नुम् धातोः" इति[2] सूत्रेण नुमागमे चन्द् इति जाते, ततो "स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृ-पिदृपिवन्द्युन्दिश्वितिवृत्यजनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दि-दहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्"[3] इति सूत्रेण रक् प्रत्यये कस्य इत्वे सुबादिकार्ये "चन्द्रः" इति रूपं निष्पन्नं भवति।

***चन्दः*** :- "चदि" धातोरेव "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (3.1.138) इति सूत्रेण पचाद्यच् प्रत्यये "चन्दः" इति रूपं निष्पन्नम्। एष हि कृत् प्रत्ययः।

***चन्दनम्***:-"चदि" धातोरेव कान्तिकर्मणि "ल्युट् च" (3.3.115) इति सूत्रेण ल्युट् प्रत्यये योरनादेशे सुबादिकार्ये "चन्दनमिति रूपं सिद्ध्यति। वैदिकशब्द-निर्वक्ता निरुक्तकारो यास्कोऽपि शब्दमेनं चन्द्रार्थकत्वे पपाठ[4]।

***चन्दिरः***:- "चदि"धातोरेव"इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहि-मुचिरुचिरुधिबन्धिशुषिभ्यः किरच्" (उ.1.51) इति सूत्रेण किरच् प्रत्यये "चन्दिर" रूपं निष्पन्नम्।

***चन्द्रमाः***:-"चदि" धातोरुत्पन्ने चन्द्रशब्दे उपपदे "माङ्-माने (पा.धा.1142) इति धातोः" "चन्द्रे मो डित्" (उ.4.667) इति सूत्रेण "अस्" प्रत्यये तस्य डित्वात् चन्द्रमस् इति जाते सुबादिकार्ये "चन्द्रमाः" इति रूपं निष्पद्यते। निरूक्तकारस्त्वस्य त्रिविधं व्युत्पत्तिं दत्तवान्[5]।

---

1. पा.धातुपाठः सं.68
2. अ.सू.7.1.58
3. उ.2.170
4. चन्द्रश्चन्द्रतेः कान्तिकर्मणः। चन्दनमित्यप्यस्य भवति। नि.पु.468
5. चन्द्रमाश्चायन्द्रमति। चन्द्रो माता। चान्द्रं मानमस्येति वा। नि.पु.468

***स्नेहुः*** :- ''ष्णिह-प्रीतौ'' (पा.धा.1200)[1] इति धातोः धात्वादेः षस्य सत्वे स्निह् इति जाते, ''भृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिपनिभ्यश्च''[2] इत्यौणादिकसूत्रेण ''उ'' प्रत्यये, धातूपधागुणे, सुबादिकार्ये च ''स्नेहुः'' इति रूपं सिद्ध्यति।

***क्लेदुः*** :- ''क्लिदू-आर्द्रीभावे'' (पा.धा.1242) इति धातोः ''भृस्वृस्निहि ....'' इति पूर्वोक्तसूत्रेणैव ''उ'' प्रत्यये, उपधागुणे च कृते, सुबादिकार्ये ''क्लेदुः'' इति रूपं सिद्ध्यति।

***इन्दुः*** :- ''उन्दी-क्लेदने'' (पा.धा.1457)[3] इति धातोः ''उन्देरिच्छादेः'' इति[4] सूत्रेण ''उ प्रत्यये, आदेः उकारस्य इकारे'' सुबादिकार्ये ''इन्दुः'' इति रूपं भवति। अत्र ''नि इन्धी-दीप्तौ''[5] इति धातोः ''भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः''[6] इति सूत्रेण ''उ'' प्रत्यये बाहुलकात् धकारस्य दकारे ''इन्दु'' रिति रूपं भवतीति यास्कः धात्वन्तरमपि जगाद [7]॥

***विधुः*** :- व्यध-ताडने (पा.धा.1181) इति धातोः विरहिणं विध्यतीत्यर्थे ''पृभिदिव्यधिगृधिधृषिभ्यः'' (उ.1.23) इति सूत्रेण ''कु'' प्रत्यये ''ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च'' (6.1.16) इति सूत्रेण सम्प्रसारणे धात्वङ्गस्य, प्रत्ययककारस्य इत्वे लोपे च कृते, ''सुबादिकार्ये'' ''विधुः'' इति रूपं भवति।

***खिदिरः*** :- खिद-दैन्ये (पा.धा.1170,1499) इति धातोः ''इषिमदिमुदिखिदि...'' इति पूर्वोक्तसूत्रेण ''किरच्'' प्रत्यये, अनुबन्धलोपे च कृते, सुबादिकार्ये ''खिदिरः'' इति रूपं निष्पद्यते।

---

1. ष्णिह उपतापे इति बालमनोरमा, ष्णिह-स्नेहने इति चुरादिधातुरप्यस्ति(पा.धा.1572)
2. उ.1.10
3. उनत्ति क्लेदयति विरहिण इति इन्दुः॥ बालम.पु.529
4. उ.1.12
5. पा.धा.1448
6. उ.1.7
7. इन्दुरिन्धेरुनत्ते र्वा। तस्यैषा भवति॥ 4॥41॥ नि.पु.460.

*तिजिलः* :- तिज-निशाने (पा.धा.971) इति धातोः "गुपादिभ्यः कित्" (उ.1.56) इति सूत्रेण "इलच् प्रत्यये, तस्य कित्वे च" प्राप्ते, प्रत्ययस्यानुबन्धलोपे, कित्वात् धातूपधायाः गुणनिषेधे, सुबादिकार्ये "तिजिलः" इति रूपम्।

*सोमः* :- षु-अभिषवे(पा.धा.1247) इति धातोः "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदि - यक्षिनीभ्यो मन्"[1] इति सूत्रेण "मन्" प्रत्यये, अनुबन्धलोपे, धातूपधागुणे सुबादिकार्ये "सोमः" इति रूपं भवति।

*क्लेदा* :- क्लिदू-आर्द्रीभावे इति पूर्वोक्त धातोरेव "श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेह-न्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति" (उ.1.157) इति सूत्रेण "कनि प्रत्यये, उपधागुणे च निपात्यमाणे" "क्लेदन्" इति जाते सुबादिकार्ये "क्लेदा" इति रूपं सिद्ध्यति।

*स्नेहा* :- पूर्वोक्त "ष्णिह्" धातोः "श्वन्नुक्षन्पूषन्..." इत्यादिसूत्रेणैव "कनि प्रत्यये, उपधागुणे च निपात्यमाने" सुबादिकार्ये "स्नेहा" इति रूपम्।

*परिज्मा*:- परि इत्युपसर्गपूर्वकात् "जनी-प्रादुर्भावे" (पा.धा 1149) इति धातोः परिजन् इति स्थिते "श्वन्नुक्षन्पूषन्..." इति पूर्वोक्तसूत्रेणैव परिजायते इत्यर्थे "कनि प्रत्यये, जनेरुपधालोपे, मश्चन्तादेशे", प्राप्ते सुबादिकार्ये "परिज्मा" इति रूपं भवति।

*राजा* :- राजृ-दीप्तौ (पा.धा.822) इति धातोः "कनिन्युवृषितक्षिराजिधन्विद्युप्रति -दिवः" (उ.1.154) इति सूत्रेण "कनिन्" प्रत्यते, अनुबन्धलोपे, धात्रुपधागुणनिषेधे सुबादिकार्ये "राजा" इति रूपं भवति।

*सृप्रः* :- सृप्लृ-गतौ इति (पा.धा.983) धातोः "स्फायितञ्चिपञ्चि..." इत्यादि पूर्वोक्तसूत्रेण "रक्" प्रत्यते, अनुबन्धलोपे, कित्वात् उपधागुणनिषेधे, सुबादिकार्ये "सृप्रः" इति रूपं भवति।

*सवनः* :- षुञ् -अभिषवे )पा.धा.1247) इति धातोः "सुयुरुवृञो युच्" (उ.2.232) इति सूत्रेण "युच्" प्रत्यये, चलोपे, योरनादेशे, धातोरुकारस्य गुणे, अवादेशे, सुबादिकार्ये "सवनः" इति रूपं भवति।

1. उ.1.137

*जुहुराणः* :- हुर्छा-कौटिल्ये (पा.धा.211) इति धातोस्सन्नन्तात् ''हुर्छेः सनो लुक्छलोपश्च''[1] इति सूत्रेण आनच् प्रत्यये, सनो लुकि, छलोपे च प्राप्ते, नस्य णत्वे सुबादिकार्ये ''जुहुराणः'' इति रूपं भवति।

*जर्णः* :- जॄष्-वयोहानौ(पा.धा.1130) इति धातोः ''कृवृजृसिद्रुपन्यनिस्वपिभ्यो-नित्'' (उ.3.290) इति सूत्रेण ''न'' प्रत्ययः, स च नित् भवति। ततो धात्वङ्गस्य गुणे रपरत्वे, प्रत्ययस्य नकारस्य णत्वे, सुबादिकार्ये जर्णः इति रूपं भवति।

*दर्शतः* :- दृशिर्-प्रेक्षणे(पा.धा.988) इति धातोः ''भृमृदृशियजिपर्विपच्यमितमिन-मिहर्येभ्योऽतच्''[2] इति सूत्रेण ''अतच्'' प्रत्यये धातूपधागुणे, रपरत्वे, सुबादिकार्ये ''दर्शतः'' रूपं भवति।

*तपसः* :- तप-सन्तापे (पा.धा.985)[3] इति धातोः ''अत्यविचमितमिनमिरभिलभि-नभितपिपतिपनिपणिमहिभ्योऽसच्'' (उ.3.397) इति सूत्रेण ''असच्'' प्रत्यये, अनुबन्धलोपे, सुबादिकार्ये ''तपसः'' इति रूपं भवति।

*पपीः* :- पा-पाने (पा.धा.925) इति धातोः ''यापोः किद् द्वे च'' इति[4] सूत्रेण ''ई'' प्रत्यये, तस्य कित्वे, धात्वङ्गस्य द्वित्वे च प्राप्ते ततो सुबादिकार्ये ''पपीः'' इति रूपं भवति।

*हरिः* :- हृञ् हरणे (पा.धा.899) इति धातोः ''हृपिषिरुहिवुतिविदिछिदि-कीर्तिभ्यश्च'' (उ.4.558) इति सूत्रेण ''इन्'' प्रत्यये, प्रत्ययनस्य इत्वे लोपे, धात्वङ्गस्य गुणे रपरत्वे, सुबादिकार्ये ''हरिः'' इति रूपं भवति।

*हासाः* :- ओ हाक्-त्यागे (पा.धा.1090) इति धातोः ''वहिहाधाञ्भ्यश्छन्दसि'' (उ.4.660) इति सूत्रेण ''असुन्'' प्रत्यये, अनुबन्धलोपे, सवर्णदीर्घे सुबादिकार्ये ''हासाः'' इति रूपं भवति।

---

1. उ.2.248
2. उ.3.390
3. तप-ऐश्वर्ये च, 1159, तप-दाहे.1819
4. उ.3.439

*राका* :- रा-दाने (पा.धा.1057) इति धातोः ''कृदाधारार्चिकलिभ्यः कः'' (उ.3.320) इति सूत्रेण ''क'' प्रत्यये, बाहुलकत्वात् ''केऽणः'' इति सूत्रेण (7.4.13) ह्रस्वे अप्राप्ते, सुबादिकार्ये ''राका'' इति रूपं भवति। परिपूर्णचन्द्रा पौर्णमासीत्यर्थः।

## पाणिनीयानि चन्द्रसम्बन्धिसूत्राणि

पाणिनीयटाष्टाध्यायीसूत्रपाठे कानिचन विषयतः शब्दतश्च चन्द्रसम्बन्धीनि सूत्राणि।

| | | |
|---|---|---|
| 1. | अमावस्यदन्यतरस्याम् | 3.1.122 |
| 2. | सोमे सुञः | 3.2.90 |
| 3. | साऽस्मिपौर्णमासीति | 4.2.21 |
| 4. | सोमाट्ट्यण् | 4.2.30 |
| 5. | अमावास्याया वा | 4.3.30 |
| 6. | सोममर्हति यः | 4.4.137 |
| 7. | पारायणतुरायणचान्द्रायणं वर्तयति | 5.1.72 |
| 8. | ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः | 5.2.114 |
| 9. | नदीपौर्णमास्याग्रहायणीभ्यः | 5.4.110 |
| 10. | ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे | 6.1.151 |
| 11. | प्रस्कण्वहरिश्चन्द्रावृषी | 6.1.153 |
| 12. | ईदग्नेः सोमवरुणयोः | 6.3.27 |
| 13. | सोमे ह्वरितः | 7.2.33 |

## निष्कर्षः

षड्विधवेदाङ्गेषु व्याकरणशास्त्रस्य नितरां प्राधान्यं विद्यते। प्राचीनकालादपि पठनपाठनादिषु व्याकरणशास्त्रं प्रचलितमिति महाभाष्यवचनतो विज्ञायते। व्याकरणशास्त्रप्रवक्तृणां संङ्ख्याविषये मतभेदो दृश्यते। केचन नवव्याकरण कर्तृनकथयन्। केचन अष्टव्याकरणकर्तृनुदाहृतवन्तः। केचन पञ्चव्याकरणकर्तॄन् निर्दिशन्ति। व्याकरणशास्त्रस्य संस्कर्ता इन्द्र इति श्रूयते। पाणिनेः प्राक्तनाः पञ्चाशीति(८5) व्याकरणप्रवक्तारस्सन्तीत्यैतिहासिकाः तन्नामानि दर्शितवन्तः। प्रातिशाख्यासूपलभ्यमानानि नामानि एकोनषष्ठि (59)। पाणिनिना स्वसूत्रे निर्दिष्टानि दश (10)। तत्र तत्रैतिहासिकै दर्शितानि षोडश (16) अत्र तु चन्द्रस्य नाम नोपलभ्यते। नवाष्टपञ्चविधव्याकरणप्रणेतृणामुल्लेखेऽपि पाणिनेः प्राक्तनेषु ग्रन्थेषु चन्द्रस्य नाम न दृश्यते। अतश्चन्द्रव्याकरणकर्तुश्चन्द्रस्य देवताख्यातेन चन्द्रेण न कोऽपि सम्बन्धो विद्यते। चान्द्रव्याकरणसम्प्रदाय प्रवर्तकश्चन्द्रस्तु ''चन्द्रगोमीति'' प्रसिद्धः पाणिनीयव्याकरणाधारेण नूत्नव्याकरणग्रन्थप्रणेता काश्मीरवासी काश्मीरनरपतेः ''अभिमन्योः'' समकालिकः बौद्धः इति डा. हर्षनाथमिश्राः स्वपरिशोधकग्रन्थे निरूपितवन्तः॥

सर्वाणि नामानि धातुजान्येवेति मतानुसारं प्रवर्तितैः औणादिकसूत्रैः बहूनि चन्द्रार्थकपदानि प्रसिद्धान्यप्रसिद्धानि च साध्यन्ते। विषयतश्शब्दतो वा चन्द्रसम्बन्धीनि प्रायशस्त्रयोदशसूत्राणि पाणिनीयाष्टाध्यायीसूत्रपाठे समुपलभ्यन्ते॥



श्रीमन्नरसराट्पुरीयेण

श्रीमतोः भारतीरामकृष्णमाचर्य पुण्यदम्पत्यो रात्मजेन

विद्यावारिध्युपाधि पुरस्कृतवता श्रीमता

**वेदान्तं सत्य श्रीनिवास अय्यंगारेण**

विरचिते शोधनिबन्धे वेदवेदाङ्गविषयकः

प्रथमो भागः समाप्तः

# सहायक ग्रन्थसूची

*संस्कृतभाषागताः ग्रन्थाः*


| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 1. | ना.सं | नानार्थसङ्ग्रहः<br>आनन्दराम् बारूह् | 1969 | पब्लिकेषन् बोर्ड्<br>अस्साम् - गोहति-3 |
| 2. | मे. | मेदिनीकोशः/मेदिनी | 1932 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 3. | वि. | विश्वकोशः/महेश्वरसूरिः | 1931 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 4. | वा. | वाचस्पत्यम् 6 भागाः<br>तारानाथ तर्कवाचस्पति भट्टाचार्यः | 1970 | चौखाम्ब संस्कृतग्रन्थमाला-94<br>वाराणसी - 1 |
| 5. | अ. | अमरकोशः/अमरुकः | 1962 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
|  | गु.बा | गुरुबाल प्रबोधिका | 1962 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 6. | नानार | नानार्थरत्नमाला इरुगपदण्डनाथः | 1911 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 7. | श. | शब्दस्तोममहानिधिः | - | - |
| 8. | नि. | निरुक्तम् / यास्कमुनिः | 1982 | मेहरचन्दलच्छनदास्/नई दिल्ली |
| 9. | विष्णु<br>शां | विष्णुसहस्रनामः<br>श्रीशाङ्करभाष्यसमेतम् | 1961 | प्राच्यविद्या संशोधनालयः<br>मैसूरविश्वविद्यालयः मैसूर. |
| 10. | अने | अनेकार्थसङ्ग्रहः<br>हेमचन्द्रः | 1969 | काशीसंस्कृत ग्रन्थमाला-68<br>वाराणसी - 1 |
| 11. | व्या.म | व्याकरण महाभाष्यम्<br>श्रीमत् पतञ्जलि महर्षिः | 1967 | मोतीलाल बनारसीदास्,<br>दिल्ली - पटना - वाराणसी. |
| 12. | ऋ.वे | ऋग्वेद संहिता/श्रीमत् सायनाचार्य<br>विरचितमाधवीयवेदार्थप्रकाशसहिता<br>संपादकः-श्रीमन्मोक्षमूलरभट्टः | 1983 | कृष्णदास अकाडमी<br>चौखाम्बाप्रेस् - वाराणसी.<br>भारतीयसंस्करणम् |
| 13. |  | ऋग्यजुष्सामाथर्ववेदाः10भागाः<br>व्या. हिन्दी पद्मभूषणः<br>डा.श्रीपाद दामोदरसात्वलेकरः | 1985 | वसन्तश्रीपादसात्वलेकरः<br>पारडै.बलसद् (जिल्ला) |
| 14. | य.वे. | यजुर्वेदसंहिता-भाषाभाष्यभागः<br>भाष्यकारः - जयदेवजीशर्मा | 1940 | आर्यसाहित्यमण्डल<br>अजमेर् । |
| 15. | अ.वे | अथर्ववेदः-प्रथमखण्डः<br>द्वितीयखण्डः<br>सं.पं. श्रीरामशर्मा आचार्यः | 1973<br>1973 | डा.चमन्लाल्गौतम्<br>संस्कृतिसंस्थान् -ख्वाजाकुतुब<br>वेदनगर्-बरोली. उ.प्र. |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 16. | अ.वे. | अथर्ववेदसंहिता-आन्ध्रानुवाद सहिता - डा.विद्वान् विश्वम् | 1988 | तिरुमल तिरुपति देवस्थानमुलु तिरुपति |
| 17. | | वैदिककोशः / सूर्यकान्तः | शक 1993 | वैदिक रीसर्च समिति बनारस हिन्दू यूनिवर्सिटी |
| 18. | | वैदिककोषः - संग्रहीतः संपादकः राजवीरःशास्त्री | 1975 | आर्षसाहित्यप्रचार् द्रष्ट् |
| 19. | ऐ.ब्रा | ऐतरेयब्राह्मणम् - सायण भाष्योपेतौ प्रथमद्वितीय भागौ | 1971 | आनन्दाश्रम संस्कृतग्रन्थावलिः ग्रन्थाङ्क - 32 |
| 20. | शा.ब्रा | शाङ्ख्यायन ब्राह्मणम् | 1977 | ,, ग्रन्थाङ्क - 65 |
| 21. | गो.ब्रा | गोपथब्राह्मणम् | सन् 1980 | सावित्रीदेवीवाग्दिया द्रष्ट् रने चौरङ्गी एप्रोच्, कलकत्ता |
| 22. | जै.उ.ब्रा | जैमिनीयोपनिषद् ब्राह्मणम् | 1984 | केन्द्रीयसंस्कृतविद्यापीठं,तिरुपति |
| 23. | श.ब्रा | शतपथब्राह्मणम् | 1984 | काशीसंस्कृतग्रन्थमाला,वाराणसी-1 |
| 24. | तै.ब्रा | तैत्तिरीय ब्राह्मणम् 1,2,3 भागाः | 1979 | आनन्दाश्रम संस्कृत ग्रन्थावलिः |
| 25. | ता.ब्रा | ताण्ड्य ब्राह्मणम् 1,2 भागौ | 1936 | जयकृष्णदासहरिदासगुप्ता-चौखम्ब संस्कृत सिरीज् आफीस्-वाराणसी |
| 26. | ऐ.आ. | ऐतरेयारण्यकम्/सायनभाष्योपेतम् | 1838 | आनन्दाश्रम संस्कृत ग्रन्थावलिः |
| 27. | | तैत्तिरीययजुर्वेदःआरण्यकोपनिषद्भागः | 1912 | गोमठं श्रीनिवास जोस्यर्-मैसूर् |
| 28. | सं.सा.इ | संस्कृतसाहित्येतिहासः आचार्यः रामचन्द्रमिश्रः | 1970 | चोखम्बाविद्याभवन् वाराणसी-1 |
| 29. | बै.सा.च | वैदिकसाहित्यचरित्रम् पि.वि.सुब्रह्मण्यशास्त्री के.यल्. व्यासरायशास्त्री च | 1927 | आर्.सुब्रह्मण्य वाध्यार् कल्पात्ति - पालक्काट् |
| 30. | | ईशादिदशोपनिषदः | 1964 | मोतिलाल बनारसीदास-दिल्ली |
| 31. | प्राण | प्राणाग्निहोत्रोपनिषद् | | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 32. | हंस | हंसोपनिषद् | 1935 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 33. | कैव | कैवल्योपनिषद् | | वाविल्ल रामस्वामी&सन्स् मद्रास् चिन्मयापब्लिकेषन्स् प्रोद्दुटूर |
| 34. | मुक्ति | मुक्तिकोपनिषद् | | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 35. | नारा | नारायणीयः - विद्यारण्य श्रीद्रामानुजव्याख्या च | 1928 | ,, |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 36. | | उपनिषद् वाक्यकोशः जि.ए.जाकब् | 1923 | मोतिलाल बनारसीदास-दिल्ली |
| 37. | गीता | भगवद्गीता | 1956 | शुकब्रह्माश्रममु-कालहस्ति |
| | | भगवद्गीतामकरंदं (ते) | 1953 | ,, |
| 38. | बृह | बृहदारण्यकोपनिषद् मिताक्षरव्याख्या-नित्यानन्दमुनिः | 1895 | आनन्दाश्रमसंस्कृतग्रन्थावलिः पुण्यपत्तनम् |
| 39. | नृसिं | नृसिंहपूर्वतातापिनी शाङ्करभाष्योपेता | | श्री वाणीविलास प्रेस श्रीरङ्गम् |
| 40. | तैत्ति | तैत्तिरीयोपनिषद् | 1928 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 41. | वृत्त | वृत्तरत्नाकरः/केदारभट्टः व्या.श्रीरामचन्द्रकविभारती | 1936 | निर्णयसागर् प्रेत् - मुम्बई |
| 42. | सं.व्या.इ | संस्कृतव्याकरण का इतिरास आचचार्ययुधिष्ठिरमीमांसकः | 1983 | चौखम्बा ओरियण्टालिया वाराणसी - 1 |
| 43. | पे.सि.कौ | वैयाकरणसिद्दान्तकोमुदी भाग-3 बालमनोरमा व्याख्य्या | 1989 | चौखम्बसंस्कृतसिरीज् वाराणसी - 1 |
| 44. | वै.सि.कौ | वैयाकरणसिद्दान्तकौमुदी भट्टोजीदीक्षितः | 1929 | निर्णयतागर् प्रस् मुम्बई |
| 45. | चान्द्र | चान्द्रव्याकरणवृत्तेः समालोचना त्मकमध्ययनम् डा. हर्षनाथमिश्रः | 1974 | लालबहदूर्शास्त्री संस्कृत विद्यापीव्म् - नई दिल्ली |
| 46. | अष्टा | अष्टाध्यायीसूत्रपाठः/पाणिनिः वार्तिकगणपाठधातुपाठपाणिनीय शिक्षापरिभाषापाठसहितः | 1937 | श्रीबालमनोरमाप्रेस मेलापूर - मद्रास् |
| 47. | ज्योति | ज्योतिर्विज्ञानम् धूलिपाल अर्कसोमयाजी | 1964 | वाराणसेयःसंस्कृतविश्वविद्यालयः |
| 48. | मुहू.द | मुहूर्तदर्पणम् | 1924 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 49. | मुहू.दी | मुहूर्तदीपिका | 1924 | ,, |
| 50. | सारा | सारावलिः कल्याणवर्मा | 1955 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 51. | का | कालामृतम् /कालिदासः | | ,, |
| 52. | काला.वें | वेङ्कटाख्यस्य व्याख्य्या | 1925 | ,, |
| | | वाविल्ल अनंतनारायणशास्त्री | शक | ,, |
| | | राम स्वामिशस्त्रिभ्यां-व्या | 1780 | |
| 53. | काला.म | मल्लादिलक्ष्मीनरसिंहशास्त्री तेलुगुव्याख्य्या | 1946 | यस्.अप्पलस्वामी & सन्स् राजमण्ड्री |
| 54. | पू.काला | पूर्वकालामृतम् - व्याख्याकर्ता चल्ला नृसिंहशास्त्री | 1924 | आर्यामुद्राक्षरशाला मच्लिीपट्नम् |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 55. | उ.काला | उत्तरकालामृतम्<br>आ.व्या.वेमूरिसूर्यनारायणसिद्दान्ति | 1926 | स्केप् कम्पेनी - काकिनाडा |
| 56. | मुहू.प्र | मुहूप्रदर्शिनी/प्राचीनज्योतिष<br>ग्रन्थेभ्यस्समुदृतः-ग्राहकः<br>चल्ला नृसिंहशास्त्री | 1922 | आर्यामुद्राक्षरशाला<br>मचिलीपट्नम् |
| 57. | बृ.जा | बृहज्जातकम् वराहमिहिरः | 1949 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 58. | फलदी | फलदीपिका/मन्त्रेश्वरकृतः<br>आन्ध्रानुवादकः पोतुकुच्चि<br>सुब्रहमण्यशास्त्री | | पि.डि.के.मूर्ति प्लाट् नं-4<br>8.स्ट्रीट. डा.सुब्बरायनगर्<br>मद्रास् - 24. |
| 59. | भृ.सू | भृगुसूत्राणि/आंध्रव्याख्या<br>अल्लूरि वासुदेवः | 1932 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 60. | जा.भ | जातकाभरणम् /डुंडिराजः<br>सं.विंजमूरि ताताचार्यः | | वेष्णवसुद्राक्षरशाला पेण्टपाडु |
| 61. | जा.क | जातककलानिधिः | 1936 | पि.रंगाराव् सत्यानंद बुक्डिपो<br>राजमन्ड्री |
| 62. | गौ.सं. | गौतमसंहिता / गोतमः<br>आ.व्या.कोंपेल्लनरसिंहशास्त्री | 1933 | शास्त्रीजयोतिषालयम् - तुनि |
| 63. | | श्री वैखानसगृह्यसूत्रम्<br>श्री विखनो मुनिः | 1967 | तिरुमल-तिरुपति देवस्यानम्<br>तिरुपति। |
| 64. | | मुहूर्तकण्टाभरणम्/कुष्णमिश्रः<br>आ.व्या.रामायणं शिवरामय्य | 1911 | कलारत्नाकरमुद्राक्षरशाला |
| 65. | वृ.पा | वृद्धपाराश्र्यम्/श्रीपराशरमुनिः | 1929 | वि.आर.यस् &सन्स् मद्रास् |
| 66. | | लधुजातकम्/वराहमिहिरः | | आदिमूलमुद्राक्षरशाला |
| 67. | | भावार्यचन्द्रिका सान्ध्रतात्पर्ययुक्ता | 1945 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 68. | भाग | श्रीमद्भागवतम्/वेदव्यासः | विक्रं 2008 | गीताप्रेस्-गोरख्पूर |
| 69. | विष्णु | श्रीविष्णुमहापुराणम्/पराशरः<br>श्रीमुनिलालगुप्तहिंदीव्याख्या | विक्रं 2026 | गीताप्रेस्-गोरख्पूर |
| 70. | अग्नि | अग्निपुराणम् /वेदव्यासः | 1966 | चौखम्बसंस्कृतसिरीज् आफीस्<br>वारणसी-1 |
| 71. | देवीभा | देवीभागवतम्-आन्ध्रानुवादोपेतः<br>कल्लूरि वेंकटसुब्रह्मण्य दीक्षितः | 1984 | वेंकटेश्वर आर्षभारतीट्रस्ट्<br>हैदराबाद्-''अशोक्नगर्''<br>गुरुकृप ।.10.140/अशोकनगर् |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 72. | विष्णुधर्म | विष्णुधर्मोत्तरमहापुराणम् | 1985 | वेंकटेश्वर आर्षभारतीट्रस्ट् |
| 73. | ब्रह्म | ब्रह्मपुराणम् | 1984 | हैदराबाद्-''अशोक्नगर्'' |
| 74. | विष्णु | विष्णुपुराणम् | 1984 | गुरुकृप I.10.140/अशोकनगर् |
| 75. | | मार्कण्डेयपुराणम् | 1989 | ,, |
| 76. | कूर्म | कूर्मपुराणम | 1879 | पुव्वाड वेंकटार्यः तरङ्गिणीमुद्राक्षरशाला |
| 77. | लिंग | लिङ्गपुराणम् | 1879 | ,, |
| 78. | कूर्म | श्रीकूर्ममहापुराणम् | 1983 | नाग्पब्लिषर्ष्-11-यू.ए(पि.ओ. बिल्डिंग्) जवहरनगर्, दिल्ली |
| 79. | लिंग | लिङ्गपुराणम | 1980 | मोतिलाल बनारसीदास् वाराणसी - दिल्ली - पट्ना |
| 80. | वायु | श्रीवायुमहापुराणम् | 1983 | नाग्पब्लिषर्ष् - दिल्ली |
| 81. | नार | श्रीनारदीयमहापुराणम् | 1984 | ,, |
| 82. | | श्रीवामनमहापुराणम् | | ,, |
| 83. | | श्रीमार्कण्डेयमहापुराणम् | | ,, |
| 84. | ब्रह्मवै | श्रीब्रह्मवैवर्तपुराणम् | | मोतिलाल वनारसीदास्-दिल्ली |
| 85. | ब्रह्माण्ड | ब्रह्माण्डमहापुराणम् | 1983 | कृष्णदासु अकाडमी, वाराणसी |
| 86. | पद्म | पद्मपुराणम् उत्तरखण्डः सांध्रानुवादः तेन्मठं वेंकटनरसिंहाचार्यः | 1894 | वसुरत्नाकरमुद्रालयः चेन्नपुरी |
| 87. | बाल | श्रीमद्वाल्मीकिरामायणम् बालकाण्डम् | 1960 | हनुमान्प्रसादपोद्दार् गीताप्रेस्-गोरख्पूर् |
| 88. | अयो | अयोध्याकाण्डम् भागत्रयम् | 1961,62,63 | ,, |
| 89. | अर | अरण्यकाण्डम् | 1965 | ,, |
| 90. | किष्कि | किष्किन्धाकाण्डम् | 1966 | ,, |
| 91. | सुन्द | सुन्दरकाण्डम् | 1967 | ,, |
| 92. | युद्ध | युद्धकाण्डम् भागद्वयम् | 1969,70 | ,, |
| 93. | उत्त | उत्तरकाण्डम् | 1972 | ,, |
| 94. | उत्त | श्रीमदुत्तरकाण्डः | 1916 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 95. | बाल | श्रीमद्रामायणम् बालकाण्डः सांध्रतात्पर्येण डा.चलमचर्ल | 1979 | जयलक्ष्मी पब्लिकेषन्स् हैदराबाद् |
| 96. | भा | श्रीमहाभारतम् / वेदव्यासः | 1929 | वाविल्ल रामस्वामी&सन्स् मद्रास् |
| 97. | भा | श्रीमहाभारतम् विराट्पर्वान्तम् | | तरंगिनीमुद्राक्षरशाला |
| 98. | भा | महाभारतम्/ श्रीमन्महर्षिवेदव्यासः | | गीताप्रेस् - गोरख्पूर |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 99. | हरि | हरिवंशः / वेदव्यासः | | गीताप्रेस् - गोरखपूर |
| 100. | हरि | हरिवंशः / सटीकः संवत् | 1983 | वेंकटेश्वर स्टीम् प्रेस् |
| | | शाक | 1848 | मुम्बयी |
| 101. | ना.शा | नाट्यशास्त्रम्/ श्रीभरतमुनिविरचितम् | 1983 | भारतीयविद्याप्रकाशन,1.यू.बी. जवहर नगर बंगलोरोड्-दिल्ली |
| 102. | का.द | काव्यादर्शः/महाकविदण्ड्याचार्य विराचितः | 1925 | कलिकाता राजधान्यां वाचस्पत्ययन्त्रे मुद्रितः |
| 103. | ध्वन्या | ध्वन्यालोकः/श्रीमदानन्दवर्धना चार्य प्रणीतः अभिनवगुप्तलोचन व्याख्यानुगतः | 1983 | मुन्शीराममनोहरलाल प्रे.लि. पि.बि.नं.5715,54 राणीझान्सीरोड् नईदिल्ली |
| 104. | सरस्व | सरस्वतीकण्ठाभरणम् भोजप्रणीतम् | 1969 | पब्लिकेशन् बोर्ड् आफ् अस्साम् - गोहति - 3 |
| 105. | भावप्र | भावप्रकाशनम् शारदातनयविरचितम् | 1973 | आन्ध्रप्रदेशसङ्गीतनाटकअकाडमी कळाभवन् - हैदरबाद्-4 |
| 106. | सा.र | साहित्यरत्नाकरः धर्मसूरिविरचितः | 1972 | संस्कृत अकाडमी उस्मानिया यूनिवर्सिटी, हैदराबाद् - 7 |
| 107. | चं.लो | चन्द्रालोकः | 1961 | वि.आर्.यस् & सन्स् मद्रास् |
| 108. | | काव्यप्रदीपः/महामहोबाध्याय गोविन्दप्रणीतः | 1912 | निर्णयसागरप्रेस्-23 कोल्भट्लैन् मुम्बई - 2 काव्यमाला-24 |
| 109. | का.सू | काव्यालङ्कारसूत्राणि/पण्डितवर वामनविरचितानि | 1926 | ,, काव्यमाला - 15 |
| 110. | चित्र | चित्रमीमांसा/श्रीमदप्पय दीक्षितप्रणीतः | 1926 | ,, काव्यमाला - 38 |
| 111. | का.सं | काव्यालङ्कारसङ्ग्रहः/ श्रीमदुद्भटभट्टप्रणीतः | 1928 | ,, |
| 112. | अ.स | अलङ्कारसर्वस्वम्/राजानकरुय्यकः | 1939 | काव्यमाला - 35 |
| 113. | कुव | कुवलयानन्दः/श्रीमदप्पयदीक्षितः | 1955 | ,, |
| 114. | सा.द | साहित्यदर्पणः/श्रीमद्विश्वनाथः | | ,, |
| 115. | दशरू | दशरूपकम्/श्रीधनंजयविरचितम् | 1967 | चौखम्बा विद्याभवन्-वाराणसी |
| 116. | रसग | रसगङ्गाधरः/पंडितराजश्रीजगन्नाथ विरचितः - प्रथमाननम् | 1970 | ,, |
| | | द्वितीयाननम् | 1969 | ,, |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 117. | औचि | औचित्यविचारचर्चा/महाकवि श्रीक्षेमेन्द्रकृता | 1933 | चौखम्बासंस्कृत सिरीज्आफिस् वाराणसी - 1 |
| 118. | काव्यप्र | काव्यप्रकाशः/श्रीम्मटाचार्यः | 1967 | ,, |
| 119. | व्यक्ति | व्यक्तिविवेकः/राजानकमहिम भट्टप्रणीतः | 1964 | ,, |
| 120. | काव्यमी | काव्यमीमांसा/राजशेखरः बालानन्दिन्याख्यान्ध्रव्याख्यया डा. पुल्लेल श्रीरामचन्द्रुडु | 1979 | श्रीमति पुल्लेल सुब्बलक्ष्मी आर्-33, उस्मानियायूनिवर्सिट्टी काम्पस्-हैदराबाद्-500 007. |
| 121. | र.वं | रघुवंशमहाकाव्यम्/महाकवि कालिदासप्रणीतम् | 1955 | पण्डितपुस्तकालय राजादरवाज - काशी |
| 122. | कु.सं | कुमारसंभवम्/कालिदासप्रणीतम् | 1955 | निर्णयसागर्प्रेस् मुम्बई-2 |
| 123. | किरा | किरातार्जुनीयम्/भारविः | 1915 | वि.आर्.यस् & सन्स् मद्रास् |
| 124. | नैष | नैषधीयचरितम्/श्रीहर्ष | 1933 | निर्णयसागर्प्रेस-मुम्बई. |
| 125. | शिशु | शिशुपालवधम्/माघकविः | 1985 | चौखम्बासंस्कृत सिरीज्आफिस् गोपालमंदिर्के उत्तरपाठक् बनारस् - सिटी |
| 126. | गी.गो | गीतगोविन्दम् / जयदेवः | 1940 | श्री गौरी मुद्राक्षरशाला नूजिवीडु आन्ध्रप्रदेश् |
| 127. | कृ.वि | कृष्णविलासकाव्यम् सुकुमारकविः | 1923 | आर् सुब्रह्मण्य वाध्यार कल्पात्ति - पाल्घाट् |
| 128. | पुष्प.वि | पुष्पबाणविलासम् | 1926 | वि.आर्.यस् & सन्स् मद्रास् |
| 129. | भा.वि | भामिनीविलासः पण्डितराज श्रीजगन्नाथरचितः | 1927 | निर्णयसागर्प्रेस् कोल्भाट्वीथी.नं.23, मुम्बई |
| 130. | सु.श | सुदर्शनशतकम्/श्रीकूरनारायणकविः | 1911 | ,, |
| 131. | कवी.क | कवीन्द्रकर्णाभरणम्/श्रीविश्वेश्वरः | 1911 | ,, |
| 132. | सु.र.भा | सुभाषितरत्नभाण्डागारम् श्री काशीनाथशर्मा संकलितं | 1929 | ,, |
| 133. | अन्या | अन्यापदेशः/पंडितरायजगन्नाथः | 1939 | मुद्राक्षरशाला-काकिनाडा.आ.प्र |
| 134. | वकु | वकुलाभरणम्/ महीधरवेंकटरामशास्त्री | 1961 | महीधर वेङ्कटरामशास्त्री राजमहेन्द्रवरम् - आन्ध्रप्रदेश् |
| 135. | मान.के | मानसरासकेली/ ,, | | ,, |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 136. | चारु | चारुचर्य / क्षेनेन्द्रमहाकविः | 1979 | पि.वि.रमणारेड्डी.वाणीनिलयम् नरसरावुपेट - 522 601. |
| 137. | चम्पू.र | चम्पूरामायणम्/भोजप्रणीतम् | 1956 | चौखम्बासंस्कृत सिरीज्आफिस् |
| 138. | पन्च | पञ्चतन्त्रम्/शीविष्णुशर्मा | संवत् 1975 | लक्ष्मीवेंकटेश्वरप्रेस्-मुंबई |
| | | | 1910 | ज्योतिष्मतीमुद्राक्षरशाला, मद्रास् |
| 139. | भोज.च | भोजचरितम्/अज्ञातकर्तृकम् | | वाविल्लरामस्वामी&सन्स् मद्रास् |
| 140. | विक्र.च | विक्रमार्कचरितम्/अज्ञातकर्तृकम् | 1914 | ,, |
| 141. | अ.शा.ना | अभिज्ञानशाकुन्तलम्/काविदासः | 1967 | ,, |
| 142. | विक्र.ना | विक्रमोर्वसीयम्/कालिदासः | 1922 | निर्णायसागर्प्रेस्-मुंबई |
| 143. | मा.अ.ना | मलविकाग्निमित्रम्/कालिदासः | 1950 | ,, |
| 144. | मा.मा.ना | मालतीमाधवम्/भवभूतिः | 1926 | ,, |
| 145. | नाग.ना | नागानन्दनाटकम्/श्रीहर्षः | शक.1850 | लक्ष्मीवेंकटेश्वरप्रेस्-कल्याण,मुंबई |
| 146. | उराच.ना | उत्तररामचरितम्/भवभूतिः | 1966 | चौखम्बासंस्कृतसिरीज् आफिस् |
| 147. | मृच्छ.ना | मृच्छकटिकम्/शूद्रकमहाकविः | 1972 | ,, वाराणसी - 1 |
| 148. | प्रतिमा.ना | प्रतिमानाटकम्/भासः | 1951 | बालमनोरमाप्रेस्-मैलापूर् मद्रास् |
| 149. | रत्नेप्र.ना | रत्नेश्वरप्रसादनाटकम् श्रीगुरुरायकविप्रणीतम् | 1939 | ,, |
| 150. | महावी.ना | महावीरचरितम्/भवभूतिः | 1969 | पब्लिकेषन्बोई-अस्साम्-गौहति-3 |
| 151. | रत्ना.ना | रत्नावलिनाटिका/हर्षः | 1976 | मोतिलालबनारसीदास्-दिल्ली |
| 152. | मु.रा.ना | मुद्राराक्षसनाटकम्/विशाखदत्तः | 1943 | श्रीकृष्णकविबंधभवनं-बनारस्सिटी |
| 153. | वेणीसं.ना | वेणीसंहारनाटक/भठ्टनारायणः | 1972 | साहित्यभण्डार-सुभाषबजार मेरंठ् |
| 154. | ऋतु | ऋतुसंहारम् / कालिदासः | | वाविल्लरामस्वामि शास्त्रुलु&सन्स् |
| 155. | काद | कादम्बरी / बाणभट्टः | 1969 | मदरास् ,, |
| 156. | काद | कादम्बरी पूर्वार्धः/बाणभट्टः उत्तरार्धः/बाणतनयः | 1965 | चौखम्बासंस्कृतसिरीज् आफिस् |
| 157. | कथा | कथासरित्सागरः/सोमदेवभट्टः | 1960 | बिहार राष्ट्रभाषा परिषद्-पठना |
| 158. | | भागद्वयम् द्वितीयभागः | 1961 | ,, |
| 159. | अर्वा | अर्वाचीनं ज्योतिर्विज्ञानम् रमानाथसहायः | 1964 | सम्पूर्णानन्दग्रन्थमाला यूनिवर्सिटी - वाराणसी |
| 160. | चं.गो.वि | चन्द्रगोलविमर्शः रामचन्द्रपाण्डेयः | शक. 2025 | राष्ट्रियसंस्कृतसंस्थान् |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 161. | | केरलभाष्यसंग्रहम्/महाकविः कालिदासः-सं.व्या.भीमदीक्षितः आंध्रव्या.चल्ला नृसिंहशास्त्री | 1931 | आर्यानन्दमुद्राक्षरशाला बच्चुबेट - बन्दर |
| 162. | | षड्विंशब्राह्मणम् सायनभाष्योपेतम् | 1983 | केन्द्रीयसंस्कृतविद्यापीठम् क्र.सं.9. तिरपति |
| 163. | | वैदिकपदानुक्रमकोशः प्र.भा ब्राह्मणभागः द्वि.भा | 1935 1936 | विश्वेश्वरानन्दवैदिकशोध-संस्थान् - होषियापूर॥ |
| 164. | मेघ | मेघदूत - मराकाव्यम् महाकविकाविदासप्रणीतम् | विक्र. 1983 | शारदा संस्कृत ग्रन्थमाला गौरीनाथपाठकः-काशी |
| 165. | | पाणिनीयाष्टाध्यायीसूत्रवृत्तिः ''काशिका''/श्रीवामनजयादित्यः | 1969 | संस्कृतपरिषद्. उस्मानिया विश्वविद्यालयः-हैदराबाद् |
| 166. | विष्णु | विष्णुपुराणम्/श्रीधरीयव्याख्यया | 1986 | परिमल पब्लिकेषन्स् दिल्ली |
| | | द्वितीयभागः | 1987 | ,, |

*हिन्दीभाषागताः ग्रन्थाः*

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 167. | वै.मा.इ | वैदिकमाइथालजी/ए.ए.मैकडोनल | 1961 | चौख्मबाविद्याभवन् वाराणशी-1 |
| 168. | लौ.सं.सा | लौकिकसंस्कृतसाहित्य/ए.बी. कीथ-अनु.चारुचन्द्रशास्त्री | 1967 | ,, |
| 169. | प.वा. | पद्यवाटिका | 1979 | दक्षिणभारतहिंदीप्रचारसभा मद्रास् |
| 170. | | जयभरत/डा.लक्ष्मीशंकरमिश्र ''निशंक'' | 1970 | अरोकमिश्र,वार्डेन्-निवास श्रीचयनारायणडिग्रीकालेज्,लखनऊ |
| 171. | | पंचवटी/मैथिलीशरणगुप्त | 1982 | साकेतप्रकाशन-चिरगॉव |
| 172. | का.सं | काव्यसङ्ग्रह-द्वितीयभाग सं.प्रो.रामेश्वरशुक्ल ''अ-चल'' | शक. 2008 | हिंदीसाहित्यसममेलन - प्रयाग. |

*आन्ध्रभाषागताः ग्रन्थाः*

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 173. | प्रब | प्रबंधमुल्लो प्रकृति वर्णनलु डा.अंबटि नरसिंहं | 1979 | समता साहिती 3.4.705/5 नारायणगूडा-हैदराबाद |
| 174. | अमु | आमुक्तमाल्यद/श्रीकृष्णदेवरायः | 1969 | वि.आर्.यस. & सन्स्-मद्रास् |
| 175. | वसु | वसुचरित्रमु/रामराजभूषणः | 1913 | ,, |
| 176. | कळा | कळापुर्णोदयमु/पिंगविसूरन | 1910 | ,, |
| 177. | मनु | स्वारोचिष मरुचरित्रमु पेद्दनामात्यप्रणीतमु | 1909 | वेमूरु वेंकटकृष्णमशेट्टि&सन्स् आनंदमुद्राक्षरशाला मद्रास् |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
| --- | --- | --- | --- | --- |
| 178. | शृ.नै | शृङ्गारनैषधमु/ श्रीनाथमहाकवि: | 1967 | आंध्रप्रदेश् साहित्य अकाडमी कलाभवनं,सैफाबाद्,हैदराबाद्.4 |
| 179. | आ.वि.स | आर्षविज्ञानसर्वस्वम्- भाग-2 ब्राह्मणमुलु | 1985 | तिरुमल तिरुपति देवस्थानमुलु पब्लिकेषन्स् - तिरुपति |
| 180. | सं.सा.च | संस्कृतसाहित्यचरित्र/ डा.मुदिगंटि गोपालरेड्डि-डा.सुजातारेड्डि | 1986 | तेलुगुविश्वविद्यालयमु-कलाभवनं सैफाबाद् - हैदराबाद् - 4 |
| 181. | | आन्ध्रसाहित्यचरित्र आचार्य पिंगलि लक्ष्मीकान्तं | 1979 | आंध्रप्रदेश् साहित्य अकाडमी कलाभवनं,सैफाबाद्-हैदराबाद्-4 |
| 182. | | आन्ध्रसाहित्यचरित्रसङ्ग्रहमु के.वेंकटनारायणरावु | 1967 | वि.आर्.यस.&सन्स्.292नेताजी सुबाषचन्द्रवोस्रोड्-मद्रास्-1 |
| 183. | अ.प्र | अमरवाणी प्रसारमुलु/संकलन-पी ठिकाकर्ता-पैडिपाटिसुब्बरामशास्त्री | 1970 | आंध्रप्रदेशसाहित्यअकाडमी कलाभवनं,सैफाबाद्-हैदराबाद्-4 |
| 184. | | द्वादशोपनिषत्तुलु / आंध्रीकर्ता वाविल्ल रामस्वामिशास्त्री | 1921 | वाविल्लरामस्वामिशास्त्रुलु&सन्स् मद्रास्-1 |
| 185. | अकंद | आन्ध्रस्कांदमु/ कल्लुरिवेंकट सुब्रहमण्य दीक्षिद: | 1959 | जगर्लपूडिवेंकटेश्वर्लु. 22.7.134, गिरिवीथि - सत्यनारायणपुरं - विजयवाडा |
| 186. | ब्रह्म | ब्रह्मपुराणम्/ आन्ध्रानुवाद: | | आन्ध्रप्रचारिणी निलयमु पिठापुरम् |
| 187. | पद्म | पद्मपुराणम्/ अनुवादक: मरुवाडशंभन्नशास्त्री | 1952 | साधनग्रन्थमण्डलि - तेनालि. |
| 188. | | सारस्वतव्यासमुलु कोराड रामकृष्णय्य तेलुगुप्रधानोपन्यासक: | | औरियण्टल रीसर्च इस्टिट्यूट् यूनिवर्सिटी आफ् मद्रास् |
| 189. | | जानपदवाङ्मयम्/ बि.रामराजु | | |
| 190. | | श्रीमदांध्रमहाभागवतमु बम्मेर पोतनामात्य प्रणीतमु | | चंदानारायणश्रेष्ठि विद्याविषयक प्रचारकुलु सिकिंद्राबादु-वरंगल्लु हैदराबादु. |

*आंग्लभाषागता: ग्रन्था:*

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
| --- | --- | --- | --- | --- |
| 191. | | The Creation of the Universe/George Gamew | 1961 | Machillam & Co., Ltd., London. |
| 192. | | A Treatise on Astronomy By-Hugh Godfray | 1934 | Machillam & Co., Ltd. London. |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 193. | | Astronomy / Robert H. Baker | 1950 | D. Van Nostr & Company Inc. Toronto - Newyark - London. |
| 194. | | Foundations of Astronomy W.M. Smart | 1953 | Longmans Green & Co. London - Newyark - Toronto |
| 195. | | The Birth and Death of of the sun/George Gamow | 1959 | Machmillan Company of Canada Limited. |
| 196. | | Planetary Theory of the Ancient Hindu Astronomy/ By - D.A. Somayaji. | 1939 1980 | Rajan Electric Press Rajahmundry. |
| 197. | V.M. | Vedic Mythology Vol-1/ Alfred Hillebrandt Translated from the original German by Sriramula Rajeswara Sarma. | 1980 Delhi- | Motilal Banarasi Das Varanasi-Patna |
| 198. | | Vedic Index of Names and Subjects/A.A. Macdonoll A.B. Kaithe Vol I & II | 1967 | ,, |
| 199. | | Puranic Encyclopedia Vettam Mani | 1979 | ,, |
| 200. | | Vedic Concerdence/ Mauria Bloomfield | 1979 | ,, |
| 201. | | Spiritual Astronomy | 1983 | The world teacher trust E. Krishnamacharya, Ramachandra varam, Muppidy Colony, Visakhapatnam - 2. |
| 202. | | The Aiteraya Aranyaka Edited from the manu- Scripts in the Inida Offices and the Library of Royal Asiati Society BY-Arthur Berriedale Keith | 1981 | Master Publisher, Pataudi House, Darya Ganji, |

| क्र.सं | सङ्केतः | ग्रन्थस्य/कर्तृश्च नाम | संवत्सरः | प्राप्तिस्थानम् |
|---|---|---|---|---|
| 203. | | Language / Leonard Bloomfield | 1980 | Motilal Banarasi Das Delhi-Varanasi-Patna |
| 204. | | The Pocket Book of Quotations / Henry David | 1942 | Pocket Books - New Yark 1230 Avenue of the Americans, New Yark. |
| 205. | | The penquin Dictionary of Quations / 3.M. and M.J. Cohen | 1967 | The English LibraryAeo-B Enylis Language Book London-W.I., P.Box 4 BR |
| 206. | | Sanskrit English Dictionary / M. Monier Williams | 1981 | Munshi Ram Manoharlal, 54, Rani Jhansi Road, New Delhi - 110 055. |
| 207. | | The Teaching of Sanskrit/ Prof. K.Rama Varma Raju | 1965 | The Sanskrit Education Society, 14,East Mada St. Mylapore - Madras - 4. |
| 208. | | Webster's New World Dictionary | 1986 | |
| 209. | | A classified catalogue of Sanskrit Printed works in the Government of Oriental Library - Mysore. | 1922 | Printed at the Govt. Branch Press, Mysore. |
| 210. | | Catalogue of Sanskrit Manuscripts in the Govt. Oriental Library, Mysore | 1922 | Printed at the Govt. Branch Press Mysore. |
| 211. | | The World Book Dictionary Vol.1&2 Edited by Clarence I.Barnhart Robert K. Sarnhart | 1922 | World Book inc. Ascoot Fetyer Company Chicago London-Syndey -Toronto. |
| 212. | | The world Book Encyclopedia | 1992 | ,, |
| 213. | | Oxford Advanced Learner's Dictionary of Current English / A.S. Hornby | 1975 | English Language Book Society, P.Box.4 BR London W.I. |



